# A HISTORY OF VEDIC LITERATURE

## (IN SANSKRIT)


BY

**P. P. S. SASTRI, B A (Oxon), M.A. (Madras), M. R. A. S.,**

*Superintendent of Sanskrit Schools and Colleges, Madras,*
*Acting District Educational Officer, Tanjore*

AND

**PANDIT K. L. V. SASTRI,**

*ıhopadhyaya, Siromani & Proficient in Indo-European Philology*


WITH A FOREWORD BY

**Mahamahopadhyaya Dr. GANGANATH JHA,**

*Vice-Chancellor, Allahabad University*




PUBLISHED BY

R. SUBRAHMANYA VADHYAR,
*BOOKSELLER & PUBLISHER,*
KALPATHI—PALGHAT

1927


(Translation of Chapters I — IX of Professor Macdonell's History of Sanskrit Literature)

॥ श्रीरस्तु ॥

# ॥ वैदिकसाहित्यचरित्रम् ॥

कविसार्वभौमनीलकण्ठदीक्षितवंशावतीर्णेन
उक्षतरण बि. ए., मद्रपुर एम्. ए., एम्. आर्. ए. एस्.
प्रभृतिबिरुदमालालङ्कृतेन मद्रमण्डलीयसंस्कृतकलाशालाध्यक्षेण
पि. पि. सुब्रह्मण्यशास्त्रिणा
महोपाध्याय—शिरोमणिबिरुदभाजा
के. यल्. व्यासरायशास्त्रिणा च
विरचितम् ।

पालक्काट्—कल्पात्ति
श्रीगीर्वाणवाणीपुस्तकशालाधिपतिना
आर्. सुब्रह्मण्योपाध्यायेन
प्रकाशितम् ।

१९२७

## PUBLISHERS' NOTE.

IT affords us great pleasure to publish this fine and hitherto unattempted work in Sanskrit Till now the History of Sanskrit Literature was known to Sanskrit Pandits only by name. Hence we considered it a matter of pride to undertake the publication of this work when it was suggested to us by the learned authors.

A perusal of this excellent work would show how very essential this is to our Pandit scholars for a right understanding of the criticisms of Western Sanskrit scholars on our Vedic Literature We are sure that Sanskrit scholars all over the country will welcome the publication of this work.

We are unable to adequately express our immense debt of gratitude to the authors for the monumental work they have turned out Being the first attempt on the subject, the authors must have had great difficulties to contend against.

We feel sure that the flowing and lucid style of this work and the priceless foreword will bear greater testimony to the rare abilities of the authors than all that we can express

In conclusion, we hope that this will be the first of the series of such works that will be pubished by us one after another

THE PUBLISHERS.

# PREFACE.

AS soon as I returned from England after completing an advanced course of Research training at the University of Oxford, through the generosity of the Government of India who helped me substantially with a scholarship, I felt a huge barrier just in front of me dividing me from the indigenous orthodox Pandit-world and the high ideals of scientific criticism I had imbibed from the West Being myself a scion of an illustrious family of renowned Sanskrit scholars, I was much agitated at the Pandits' contempt for and disbelief in scientific methods As Dr Jha has put it so well in his valuable 'Foreword', the pandit was not to be blamed at all. It was his ignorance of the historic and comparative method that was really the cause of his 'narrow' outlook and not his 'innate' incapacity I therefore decided that I should do something to meet the Pandit on his own ground. Rather than write an original treatise in Sanskrit embodying the results of Occidental Scholarship, I thought that the presentation in Sanskrit of standard works of merit of Western Scholars would attract the attention of Pandits and induce them to give their full attention, for a considered repartee too, if need be, to such works.

What should be the first work that is selected for such a purpose was not a difficult problem at all As far as the Vedic portion is concerned, Professor Macdonell's History of Sanskrit Literature holds a pre-eminent place amongst such works Personally, my humble *Guru-Dakshina* to my revered Guru, Professor Macdonell, gets paid I decided therefore to translate Chapters I - IX of Professor Macdonell's History of Sanskrit Literature which deals in full with the Vedic portion I was fortunate in securing an excellent collaborator in Pandit K L V Sastry The English language has a peculiar charm The Sanskrit language is deep and yet past the stage of daily development To convey the spirit of the former into the latter without being grandiose or redundent is indeed a difficult task But I have no doubt my Pandit friend and myself have achieved some measure of success which has encouraged us to place our humble effort before the Pandit-world for its acceptance, assimilation and enrichment of the immortal heritage of this Holy land of ours

Mr Subiahmanya Vadhyar of Palghat is a well-known publisher of important and rare Sanskrit works and spares neither time nor money to promote the spread of Sanskrit When we casually explained the purpose of our book, he came forward

to undertake the publication and pressed us for the manuscripts All true lovers of Sanskrit, therefore, owe him a deep debt of gratitude for such willing and enthusiastic response in such a noble cause

To Professor Macdonell who procured for me permission from Messrs Heinemann & Sons, London, for translating the work and to Mahamahopadhyaya Dr Ganganath Jha who has blessed us with his 'Foreword we tender our heartfelt thanks

We venture to hope that this little work of ours will set the Pandit-world athinking We shall not rest satisfied that our work is done till we get tangible proofs in the form of *Khandana-granthas* from our erudite Pandit-Scholars For then, we would know that the scientific and comparative method has already begun to bear fruit in our own soil

TANJORE,
*15-8-27*

P P S SASTRI.

# FOREWORD.

I HAVE been asked to write a Foreword to 'A History of Vedic Literature' by Messrs. P P S Sastri and K L V Sastri It is a rendering into Sanskrit of the first nine chapters of Macdonell's History of Sanskrit Literature There is a growing body of young Pandits trained in our indigenous Patasalas who are eager to acquaint themselves with the results of modern methods of study and research A book in Sanskrit, therefore, on this subject has long been a desideratum There is yet another body of Pandits who would benefit by a book like this. It is no secret that our Pandits, as a rule, do not acquiesce in the conclusions arrived at by modern scholars, but hitherto they have contented themselves by only ignoring their conclusions as based upon sheer ignorance They have not been able to study the why and wherefore of these conclusions, and the inevitable result of this has been that whenever

any one of them has attempted a criticism of these conclusions he has made himself ludicrous With the present book before him the Pandit will now be able to judge of modern scholarship at its true value and he will also know now how to meet the conundrums propounded by the modern scholar

A work of this kind could not have found a better author than Messrs Sastris Both are steeped in the traditional learning and one of them has had the full modern training at Oxford It is fervently hoped that the book will be read by a large number of our Pandits in all Patasalas spread over the country

GANGANATH JHA,
*Vice-Chancellor,*
*University of Allahabad*

ALLAHABAD,
9-11-'26

# उपोद्घातः ॥



"पुराणमित्येव न साधु सर्वं
न चापि किञ्चिन्नवमित्यवद्यम्"

अस्ति हि चिरादन्धतमसे निलीनः संस्कृतग्रन्थसमुदायविषयकश्चरित्रार्थः पाश्चात्यैर्विद्वद्भिर्महता यत्नेनान्विष्य प्रकाशतां प्रापितः । परन्तु सोऽर्थः पाश्चात्यभाषानवबोधात् संस्कृतविदुषां भारतीयपण्डितानामद्य यावदव्यक्तरूप एवास्ते । अत एवैते पण्डितास्तेषु विषयेषु गजनिमीलिकामाश्रयन्ति, बहुतराण्यापातरमणीयानि दूषणानि चोद्घोषयन्ति । अत्र त्वालोच्यमाने वस्तुनि नैष पण्डितानां दोषः, किन्तु संस्कृतभाषायामेतद्विषयप्रतिपादकानां ग्रन्थानामनुत्पत्तिरेव तत्रापराध्यति । तादृश्याः परिस्थितेः परिहारायैवास्माकमयमारम्भः ॥

तत्र तावत् परश्शताः समुल्लसन्त्येतद्विषयपराः पाश्चात्यानां कृतयः । तासु वैदिकग्रन्थचरित्रप्रतिपादनांशे उक्षतरणविश्वविद्यालयसंस्कृताध्यापकेन आचार्यमगधनालेन प्रणीतो ग्रन्थः प्रतिनवतत्त्वालङ्कृतः सर्वङ्कषः सर्वाभिनन्द्यश्च भवतीति कृत्वा तदनुकारेणायं ग्रन्थो निबद्धः । ग्रन्थादस्मात्—अस्माभिरदृष्टचरं सादृश्यविधिना समासादितं वैदिकग्रन्थानां चरित्रवस्तु, पाश्चात्यविदुषां परिश्रमस्य पारमार्थिकं फलं च सुव्यक्तमवधार्यते । अपि चानेन ग्रन्थेन प्रदर्श्यमानमार्गाः प्रतिभाशालिनो भारतीयाः

पण्डिता. सयुक्तिकमनेनैव वर्त्मना नवनवान् हृदयग्राहिणस्तत्त्वार्थानुत्प्रेक्षितुं प्रभविष्णवो भविष्यन्ति, येनास्माकमियं संस्कृतवाणी धन्या भवेत् । येऽपि तावदिमान् विषयान् अविचारचारून् मत्वा खण्डयितुमुद्युञ्जते तैरप्यवश्यमयं ग्रन्थः परिशीलनीयः । यतो हि खण्डनीयान् विषयान् सम्यगवगम्य क्रियमाणमेव तत्खण्डनं क्षोदक्षमं विद्वदादेयं च भवति, अन्यथा सहृदयोपहासपात्रतामवगाहेत । तस्मादभिनवविषयकोऽयं ग्रन्थः सर्वथैव भारतीयपण्डितानां मध्ये स्थेयसीं प्रतिष्ठामर्हति ॥

अपि च भारतवर्षेऽस्मिन् विविधासु संस्कृतपाठशालास्वधीयानाः सर्वे विद्यार्थिनोऽप्यनेन ग्रन्थेन बहूपकृता भविष्यन्ति । सकुतूहला हि तेषां मति. बहोः कालादेतद्विषयावगतौ समुचितग्रन्थाभावात् कुण्ठीभूता सम्प्रत्यनेन ग्रन्थेन स्वेप्सितमापूरयितुं प्रभविष्यति ॥

इत्थमस्माकमयं प्रधाने कृतो यत्नः फलवान् भवितुमर्हतीति धीरमाकलयामः । अवतारयिष्यामश्च यथावसरमेतत्सजातीयान् लौकिकसाहित्यचरित्रादिविषयकान् ग्रन्थान् । मन्यामहे ग्रन्थेऽस्मिन्नस्माभिराश्रिता ललितमधुरा भाषारीतिः सुमनसां मनसः प्रीतये कल्पेत । अथ त्वत्र मानुषतासुलभाः प्रमादाः सम्भवन्ति चेत् ते सहृदयैः सदयं मर्षणीया इति प्रार्थयामहे ॥

. . . शास्त्री ।

# विषयानुक्रमणिका ॥



## प्रथमोऽध्यायः ॥

## द्वितीयोऽध्यायः ॥



## तृतीयोऽध्यायः ॥



## चतुर्थोऽध्यायः ॥

## पञ्चमोऽध्यायः ॥

## षष्ठोऽध्यायः ॥

## सप्तमोऽध्यायः ॥



## अष्टमोऽध्यायः ॥

## नवमोऽध्यायः ॥





॥ श्रीः ॥

# ॥ वैदिकसाहित्यचरित्रम् ॥

## ॥ प्रथमोऽध्यायः ॥

### प्रस्तावना

इह खलु नवीकरणात्परमष्टादशशतकाब्दस्योत्तरार्धे सम्भूतान् संस्कृतग्रन्थसमुदायोपलम्भान्नान्यः कश्चित् सार्वलौकिकोऽर्थः विज्ञानचरित्रे संवृत्तः । तत्र तावदलक्सान्द्राभियोगानन्तरं ग्रीकाः भारतभूमावस्ति काचिद्विद्यासम्पदित्यज्ञासिषुः । मध्यकालेष्वारबा भारतवर्षीयाणि रसायनादिशास्त्राणि स्वयं साक्षाद्दृष्टानीति पाश्चात्यदेशेष्वघोषयन् । षोडशशतकाब्दादारभ्य यूरोपदेशीयक्रैस्तवधर्मोपदेशिनः केचिन्न केवलं संस्कृतविद्यासद्भावमात्रमज्ञासिषुः किन्तु किञ्चिद्विवास्याः प्राचीनभाषायाः परिशीलनमप्यकार्षुः । तेषु कश्चिदब्राहिरोजराख्यः १६५१ तमे क्रिस्त्वब्दे डच्छभाषया भर्तृहरेः कृतिमन्ववादीच्च । हन्त ! एवम्प्रायेऽपि भूतार्थे प्रायेणाष्टादशशतकाब्दीयचतुर्थपादारम्भं यावन्न क्वचिदपि नासीत् संस्कृतग्रन्थविषयिणी विश्वासार्हा प्रवृत्तिर्यूरोपखण्डे । किन्तु केवलं भारतीयानां प्रतिभाविलासमाख्यायिकासु प्रस्तुवन् कश्चिदनिश्चितः प्रवादः परं प्रसृतः । यत्तावदष्टादशशतकाब्दस्य मध्ये भारतवर्षादानीतां कामपि कृतिमवलोक्य तां यजुर्वेदं मन्यमानो वाल्टयराख्यः स्वकीयोपन्यासे भृशमभ्यनन्दत् तदस्थाने तस्य श्रद्धोन्मादविजृम्भणम् । यतो हि सा क्रैस्तव-

धर्मोपदेशिना केनचित् सप्तदशशतकाब्दे समुत्पादिता कापि कूटरचनेत्यनुपदमेव प्रकाशीभूतम् । एवंविधेन मिथ्याकल्पनेन दत्तावलम्ब पाश्चात्यानामविश्वासः समुपस्थापितवास्तविकसंस्कृतसाहित्यवृत्तान्ते समनन्तरगतैकोनविंशशतकाब्देऽप्यच्छिन्नमूल एवासीत्। अत एव इंगल्डस्टुवार्टाख्यो न्यायशास्त्रपण्डितः न केवलं संस्कृतग्रन्थसमुदाय एव किन्तु संस्कृतभाषाप्यलक्सान्द्रप्रवेशात्परं ग्रीकभाषाप्रतिच्छन्दरूपेण कपटपटुभिर्ब्राह्मणैः समुत्पादितेति सपटाटोपमुपन्यास्थत । स एव पक्षः पश्चात् डब्लिन्देशाभिजनेन केनचिदाचार्येण १८३८ तमेऽपि वत्सरे महता प्रबन्धेन समर्थितश्च ॥

प्रथमतस्तावत् पाश्चात्यानां संस्कृतभाषाभ्यसनव्यवसायो भारतीयराज्यकार्यनिर्वहणसौकर्यार्थ एवाभूत् । वारण्हेस्तिङ्गाख्यस्तदानीन्तनो राजप्रतिनिधिर्भारतीयानां परिपालनं यावच्छक्यं तदीयधर्मव्यवहारानुरोधेन क्रियमाणं श्रेयसे कल्पेतेति कृतसङ्कल्पः प्राक्तनान् प्रधानतमान् व्यावहारिकधर्मग्रन्थान् निर्मथ्य तेषां सारं संग्रहीतुं बहून् ब्राह्मणान् व्यापारयति स्म । तैस्तथा सम्पादितस्य सारग्रन्थस्य पारसीकभाषानुवादद्वारा सम्पादितमाङ्गलीपरिवर्त्तनं १७७६ तमे क्रिस्त्वब्दे प्रकाशितम् । तदीया च प्रस्तावना संस्कृतलिपिस्वरूपप्रदर्शनपूर्वकं भारतीयभाषासाहित्ययोर्विषये विश्वसनीयवृत्तान्तैरदस्प्राथम्येन योरोपाणामग्रे प्राशसीत् । अथापि चार्ल्सविल्किन्साख्यः पाश्चात्यप्रवर एव संस्कृतग्रन्थाभ्यसनव्यवसाये योरोपाणां प्रथमो मार्गदर्शी । यो हि वाराणसीमधिवसन् वारण्हेस्ति-

ज्ञेन प्रचोदितः संस्कृतवाण्यां निरतिशयं प्रावीण्यं सम्पाद्य १७८५ तमे क्रिस्त्वब्दे भगवद्गीतां ततो वर्षद्वयात्परं हितोपदेशं च भाषान्तरीकृत्य प्रकट्यकार्षीत् ॥

अन्यतश्च सर् विलियं जोन्सः संस्कृतग्रन्थारामं प्रविविक्षूणां पाश्चात्यानां पुरस्सरोऽभूत् । यः किलोज्ज्वलमतिः सर्वतोमुखपाण्डित्यः केवलमेकादश वर्षाणि भारते वर्षमधिवसन्नविश्रान्तेन संस्कृतग्रन्थव्यवसायेन वङ्गधरायां 'एष्याटिक् सोसैटि' समाख्यस्य सदसः परिकल्पनेन च प्राचां भारतीयग्रन्थानां परिशीलने जनानामुत्साहमुदर्दीपयत् । यश्च किलाल्पीयसा कालेन संस्कृतभाषामभ्यस्य हर्डर्-गोथेप्रमुखैः प्राड्विवाकैः शिरसाभिनन्दितमभिज्ञानशाकुन्तलं नाम नाटकरत्नं भाषान्तरीकृत्य १७८९ तमे क्रिस्त्वब्दे प्राचकटत् । ततः पश्चात् सर्वेषां धर्मशास्त्राणां धुरि स्मरणीयां मनुस्मृतिमपि भाषान्तरेणानूद्य प्रकाशतामनैषीत् । संस्कृतग्रन्थमुद्रणमूलकस्य यशसोऽप्येष एव महाभागः प्रथमपात्रीभूतः । तेन खलु १७९२ तमे क्रिस्त्वब्दे कालिदासीयमृतुसंहाराख्यं शृङ्गारप्रधानं खण्डकाव्यं मुद्रितम् ॥

तदनु पदमकार्षीत् संस्कृतव्यवसायभूमौ सुगृहीतनामधेयो हेन्रि तोमस् कोल्ब्रुकः । यः खल्वनुत्तमेन प्रतिभावैभवेन वस्तुविचारदाक्ष्येण च समुद्योतितः प्रथमतः संस्कृतभाषां तत्साहित्यं च शास्त्रीयरीत्या परीक्षमाणो न केवलं सर्वशाखाश्रितान् संस्कृतग्रन्थानेव किन्तु तत्सम्बन्धिनो भाषान्तरानुवादान्, तद्विषयविचारपरा-

नुपन्यासांश्च प्रकटीकुर्वन्ननुगामिनां विदुषामुपरिभूमिकाविधानानु-कूलं दृढतरं मूलशिलाबन्धं पर्यचीक्लृपन् ॥

एकोनविंशशतकाब्दस्यादौ भारतवर्षमेत्य संस्कृतभाषाभ्यसनप्रवृत्ते कोल्ब्रूके यूरोपप्रान्तेषु संस्कृतभाषायाः प्रत्यक्षानुभूतौ झटिति सम्मूर्च्छित समरसंरम्भः कारणतां गतः । तद्यथा— अलक्सान्द्रहामिल्तनाख्यः किल कश्चिदाङ्गलः भारतवर्षोपार्जित-संस्कृतभाषाविभवः १८०२ तमे वर्षे स्वाभिजनं प्रस्थितो यदृच्छया फ्रान्सदेशमार्गेण प्रयातः । तत्रान्तरे प्रत्यग्रतया व्यग्रीभूते वैरदहने निखिलानाङ्गलान लक्षीकृत्य प्रयुक्तया नेपोलियनाख्यस्य प्रचण्डवीरस्याज्ञया हन्त ! हामिल्तनपण्डितः पारीसनगरे वन्दीकृतः । इत्थं दैवापहृतस्वातन्त्र्यस्तत्रावरुद्धः स महापण्डितः केषाञ्चित् तद्देशीयानां विशेषतश्च फ्रेड्रिक् श्लेगलाख्यस्य प्रथितयशसः शर्मण्यदेशीयस्याख्यायिकाकेश्चेत समावर्ज्य संस्कृतभाषाभ्यसनोन्मुखमकार्षीत । तत्फलत्वेन च भारतीयानां भाषां मतिप्रकर्षं चाधिकृत्य विरचितः कश्चित्प्रबन्धः श्लेगलमहोदयेन १८०८ तमे वर्षे । अयमसौ पण्डितप्रवरः सादृश्यचारित्र्यविध्योः सञ्चारणेन भाषाशास्त्रे कमपि संस्कारविशेषमादधाति स्म । तदवलम्ब्य १८१६ तमे वर्षे फ्रान्सवाप्पेन संस्कृतधातूनां विकरणव्यवस्थायां ग्रीक-लेतिन-पारसीक-शर्मण्यभाषाधातुविकरणैः सह सादृश्यवैदृश्ये परीक्षमाणेनोपनिबद्धः कश्चिद् ग्रन्थः । एतद्ग्रन्थद्वारा श्लेगलपण्डितस्य व्यवसायः सादृश्यमूलकस्य भाषाशास्त्रस्योत्पत्तौ निमित्ततामयासीत् । अस्यैव

श्लेगलपण्डितस्य व्यवसायेन शर्मण्यानां तथोत्साहः प्रवृद्धः . यथा ते ततःप्रभृति संस्कृतभाषाभ्यसनकर्मण्यहमहमिकया प्रावर्त्तिषत । श्लेगलपण्डितेन लब्धांकुरमिदं भाषाशास्त्रं च पश्चात् तद्देशीयैरेव प्रयत्नसंवर्द्धितमुत्फुल्लमभूत् ॥

संस्कृताभ्यसनारम्भकाले तात्कालिकभारतीयपण्डितगोष्ठीप्रसिद्धे लौकिकसंस्कृतमात्रे दत्तदृष्टयोऽभूवन् पाश्चात्याः । तस्मादेकोनविंशशतकाब्दस्योत्तरार्धारम्भं यावल्लौकिकसंस्कृतग्रन्थाः परं परिशीलिताः परिवर्त्तिताः प्रकाशिताश्च । सत्यमेव कोल्ब्रूकपण्डितः पूर्वं १८०५ तमे वर्षे वैदिकग्रन्थानां वृत्तान्तं सविस्तरं प्रास्तावीदेव स्वकीये वेदविषयके प्रबन्धे । ततः पश्चादुपपञ्चविंशाब्देभ्यः परं रोसनाख्यः शर्मण्यपण्डितः पौरस्त्येन्द्यावणिगगारगतांस्तालपत्रग्रन्थानवलोक्य तेषां प्रकाशनेन वैदिकसाहित्यजातमनायासेनैव यौरोपाणां दृष्टिपथे पतिष्यतीति निश्चिन्वानस्तेषां मुद्रणे परं यत्नमधात् । तेन प्रसाधितं ऋग्वेदस्य प्रथममष्टकं तस्याकाण्डनिधानात्परं १८३८ तमे वर्षे प्रकाशितं च । अथापि खलु वैदिकभाषाशास्त्रप्रवर्त्तकेन रुडाल्फरोठेन वैदिकसाहित्यं तच्चरित्रं च विषयीकृत्य कृतायाः सुप्रसिद्धायाः खण्डकृतेः प्रकाशनात्परमेव (१८४६) वैदिकसाहित्यभूमौ पाश्चात्यैः सविशेषा दृष्टिः पातिता । तदन्वेकोनविंशशतकाब्दस्योत्तरार्द्धे सर्वतस्सम्प्रवृद्धेन पाश्चात्यविदुषामुद्यमेन वेदकालिकास्तदनन्तरकालिकाश्च सर्वे संस्कृतग्रन्था मुद्रणप्रचारणाभ्यां सुलभीकृताः ॥

इत्थं पाश्चात्यैः सम्पादितानां कर्मणां परिमाणं पर्यवेक्षितुकामै- रिदमेकमवश्यमवधेयं यदत्र क्षेत्रे क्षेत्रान्तरापेक्षया विरलतरा व्यव- सायिनः । विशालतरश्च ग्रन्थसमुदायः । चत्वारो वेदाः परं प्रतिद्वन्द्विनः प्राचीनग्रन्थसमुदायेन तुल्यपरिमाणा भवन्ति । अथापि खलु समस्तमपि संस्कृतसाहित्यजातं ग्रीकरोमकोभयग्रन्थसमुदाया- दत्यतिरिच्यमानमहो! आमूलाग्रं परामृष्टं पाश्चात्यैरेकेन वत्सराणां शतकेन । तथा हि—पश्यत, भूयांसो ग्रन्थाः संमुद्रिताः । बहवश्च प्रधानभूताः कर्मक्षमैर्भाषान्तरेण परिवर्तिताः । अहो पश्यत! पाश्चात्यविदुषामभिनन्दनीयस्य व्यवसायस्य फलत्वेन क्वचिदपि भाषान्तरेष्वदृष्टाश्रुतपूर्वः समुत्पन्नः कश्चिदतिविशालः संस्कृतश- ब्दार्थकोशः । अपि च संस्कृतसाहित्यजातस्य सर्वास्वपि शाखासु विविधाश्चर्चामहा निर्णयाः समासादिताः विमर्शोपकरणभूतान् यान् सगृह्णन्नतिविपुलः सर्वार्थसग्रहग्रन्थः कश्चिदवश्यं सम्पादनीयोऽवशि- ष्यते । अपरं च इण्डो-आर्याणामखिलान् पुरावृत्तोदन्तान् क्रोडीकुर्व- न्ननन्यसामान्यो महापरिमाणः कश्चित्सर्वार्थकोशः सम्पादितो नानाज- नपदतत्त्वज्ञरूपत्रिंशल्लोकोत्तरैः पण्डिताग्रेसरैर्महतादरेण परिपोष्यमाणः सम्प्रति स्ट्रास्बर्गनगरे सन्निकाश्रेण प्रकटीक्रियते । १८९८ तमे क्रिस्त्वब्दे तदीयप्रधानप्रस्तावकस्य वियन्नाभिजनस्य विज्ञानराशेर्बुह्ल- राचार्यस्योपपन्नेनाकालमृत्युना हन्त, महती हानिरुपस्थिता संस्कृत- विद्यायाः । अथापि तत्कार्यशेषनिर्वहणधुरन्धरेण भारतीयविद्यावि- दुषा गट्टिङ्गनाभिजनेनाचार्यकीलहरणेन सोऽयं सर्वार्थकोशः सम्प्रति साधु सम्पूर्य प्रकाश्यत इत्याश्वसिति हृदयम् ॥

इत्थमपरिगणितानां ग्रन्थानां प्रकाशने निष्पन्नेऽपि ग्रन्थसू-चीपरीक्षायामप्रकाशिताः परस्सहस्राः खण्डीकृताय. समुपलभ्यन्ते भारतीयेषु यूरोपीयेषु च ग्रन्थागारेषु ॥

नूनमितोऽप्यधिकतरमादरणीयो भवति संस्कृतविद्याभ्यासङ्गः पाश्चात्यदेशेषु । कुत इति चेत्—एषां वैदिकग्रन्थानां व्यालोडनेन तात्त्विकी भाषागतिः, वर्णाश्रमधर्मानुसारिणी लोकयात्रासरणिः, प्रतिभाप्रभावचमत्कृता तेषां कल्पनारीतिरित्यादयो विषयास्तत्राव्य-क्तरूपेण निलीना व्यक्तीभविष्यन्ति । किं बहुनोक्तेन, भारतवर्षस्य भूयांसं भागमभिव्याप्य वर्तमानानां हिन्दूनामादित सर्व एव नाग-रिकपरिष्कारविशेषास्ततः प्रतिभास्यन्ते । अपि च खलु प्राक्तनग्र-न्थसमुदायानां धुरि कीर्तनीयमिदं संस्कृतसाहित्यं गुणगणैर्देदीप्य-मानमनर्घं शोभातिशयं पुष्णाति । लोके च ग्रीकसाहित्यादनन्तरं स्थानमिदमेवार्हति । मानुष्यकपरिणामप्रकारप्रबोधने त्वस्यैव प्रथमं स्थानम् । ग्रीकसाहित्योत्पत्तेरतिदूरे पूर्वकाले प्रादुर्भूतस्यास्य ग्रन्थस मुदायस्य बाल्यवस्थायामेव निरतिशयाः प्राकृतजनोचिता वासनाविशे-षास्तन्मूलकाः पृथिव्यामन्यत्राश्रुतपूर्वा मतधर्मोपचयप्रकाराश्च स्फुटी भवन्ति । अपि च यथा संस्कृतभाषोपलब्ध्या शब्दसादृश्यनिबन्धनं भाषाशास्त्रमारब्धं तथा वैदिकसाहित्योपलब्ध्या अडाल्बर्टकुह्न-मोक्षमू लराभ्यां देवतोपाख्यानसादृश्यनिबन्धनं देवताशास्त्रमुपक्रान्तम् ॥

यद्यपीदं संस्कृतसाहित्यजातं सर्वास्वपि शाखास्वात्मनः प्रकर्ष माविष्करोति तथापि वर्णाश्रमधर्मे तत्वविद्यायां च अनन्यलभ्यं लोको

पदमध्यास्ते । इण्डो-यौरोपवंशीयासु नानाशाखासु भारतीया केवलमेकैव शाखा स्वराज्यधर्मानुवर्ति आश्चर्यं निखिललोकायतं बुद्धमनं च फलति स्म । शाखान्तरीयास्तु स्वीयां कल्पनाशक्तिमनुपयुञ्जानाः केवलं मतान्तरेषु कृतप्रत्ययास्तस्थुः । प्रतिभाप्रभावानुगृहीता हि भारतीयानां लोकयात्रा सर्वकालं मतधर्मैकपरायणा ववृते । नानयोर्मतधर्मतत्त्वविद्ययोः स्वारस्यं तदुपार्जितेषु फलेषु किन्तु तद्विपरिणामप्रकारेषु । दृश्यन्ते हि संस्कृततत्त्वविद्यायाः परिक्रमणमार्गे तस्यास्तत्तद्दृष्टारोहणस्य चिह्नानि पदे पदे प्रस्फुटाभिव्यक्तानि ॥

भारतवर्षीयवैदिकसाहित्यजातस्य समुत्कर्षस्तावत् प्राधान्येन तत्कल्पनाविशेषाणामनन्योच्छिष्टतामूलकः । उत्तरस्यां दिशि महोच्छ्रायशालिना पर्वतप्राकारेण पृथक्कृतोऽयं भारतद्वीपः कथञ्चिदार्याणां प्रवेशात्परं लोकान्तरवदवस्थितः सर्वतः प्रसृतयाऽऽर्यपरिष्कारभासा सुतरामुद्दिदीपे । क्रैस्तवाब्दारम्भात्पूर्वं चतुर्थशतकाब्दस्यान्ते यदा ग्रीकाः पश्चिमोत्तरभागं प्रविष्टास्तदा भारतवर्षीयाः परैरनभिभूताया स्वराष्ट्रीयविद्यायामतिमात्रमवहिता बभूवुः । अपि च पश्चादुत्तरोत्तरमुल्लुलितान् पारसीक-ग्रीक-सिथियं-महाम्मदाख्यान् कवलीकरणोन्मुखान् महातरङ्गानप्यधरीकृतवतामिण्डो-आर्याणां जीवितवृत्तेः साहित्यस्वरूपस्य क्रमिकाभिवृद्धिराङ्ग्लाधिष्ठानारम्भं यावदप्रतिहतैवासीत् । नैवविधो मूलविकासवृत्तान्तः क्वापि श्रूयते ण्डोयौरोपवंशीयेषु शाखान्तरेषु । न खलु कश्चिदपि जानाति

चीनदेशवर्जमन्येषु देशेषु प्रायेण त्रिसहस्रवत्सरीतः पूर्वं कीदृश्यो भाषा भाषिताः कीदृशाश्च ग्रन्थास्तदानीमुत्पन्नाः, मतधर्माश्च कीदृशास्तेषां, गृह्याचाराः साङ्घिकनियमाश्च किंविधाः, कुत्र कुत्र कया कया विधया विपर्यासस्तेषु सञ्जात" इति ॥

कतिपयैरेवोदाहरणैर्विशदीभविष्यति विचित्रतरो भारतीयानां पूर्वाचारानुवृत्तेः प्रकारः । पश्यत संस्कृतभाषैषा क्रैस्तवाब्दारम्भाद्बहुभ्यः शतकाब्देभ्यः प्रागिवाद्यापि परस्सहस्रैर्ब्राह्मणैर्विद्वद्भाषेव भाष्यते । तथा ग्रन्थनिर्माणकार्येऽपि न खल्वेषा नोपयुज्यते पुरेवाधुनापि । अनुदिनमवतार्यन्ते ह्येतद्भाषामयाः परश्शता ग्रन्था पत्रिकाश्च । अपि चाहो ! सत्यपि सुलभसाध्ये मुद्रणविधौ यथापुरमस्मिन् वर्तमानशतकाब्देऽपि हस्तलेखनमेवाद्रियते परश्शतेषु ग्रन्थागारेषु । अलक्सान्द्राभियोगात् प्रागिवाद्यापि चत्वारो वेदाः कण्ठगताः पठ्यन्ते । तालपत्रग्रन्थानां मुद्रितपुस्तकानां च मूलतो नाशे जातेऽपि ते वेदाः सुश्रुतानां मुखात्प्रत्यानेतुं शक्याः । अनादिरेकः सवितृदेवताको मन्त्रः प्रत्यहमद्यापि जप्यते सन्ध्योपासनावसरे । त्रिसहस्रवत्सरीतः प्रभृत्याराध्यमानस्य विष्णोरुपासकाः सम्प्रति सङ्ख्यातिगाः संवृत्ताः । पुराकल्प इवाद्यापि यज्ञीयोऽग्निररणिभ्यामेव मथ्यते । अद्यतनाः सर्वे विवाहादयः साङ्घिका विधयोऽपि क्रैस्तवाब्दारम्भात् प्रागेवारब्धाः । साङ्घिकधर्मानुवृत्तिविषये पर्याप्तमिदमेकमेवोदाहरणम् । क्व नु खलु भारतवर्षादन्यत्रोपलभ्यते पूर्वाचारानुवृत्तेरीदृशः प्रकारः ॥

भारतवर्षीयसंस्कृतग्रन्थसमुदायसम्बन्धी चरित्रकालः प्राधान्येन द्वेधा विभज्यते । तत्राद्यो वैदिककालः । स च प्रायेण क्रिस्त्वब्दारम्भात्पूर्वं पञ्चशतोत्तरसहस्रवत्सरीतः समारभ्य तत्रैव द्वितीयशतकाब्दपर्यन्तं व्याप्नोति । वैदिककालस्यास्य पूर्वार्द्धे प्रापञ्चिकवस्तुवर्णनोद्युक्तानां पद्यमयानां वैदिकग्रन्थानामुत्पत्तिः । ते च सिन्धुनद्यास्तच्छाखानां च तीरावस्थितेषु पञ्जापजनपदेषु जाताः । तस्यैवोत्तरार्द्धे ब्रह्मविद्योपपादकानां गद्यमयानां वैदिकग्रन्थानामाविर्भावः । ते च गङ्गातीरप्रदेशेषु समुत्पन्नाः । एवमस्मिन्सिन्धुनदीमुखमा च गङ्गामुखाद्विस्तृतायां विन्ध्यहिमागयोर्मध्यपतितायामार्यावर्तभूमौ वैदिककाल एवार्याणां नागरिकपरिष्कारमयूखाः समन्ताद्विसस्रुः । द्वितीयस्तु लौकिकसंस्कृतकालः । स च वैदिककालस्यान्तिमे भागे समुत्पन्नान् कांश्चिल्लघीयसो ग्रन्थानात्मसात्कुर्वन्नारब्धः क्रिस्त्वब्दारम्भात्परं सहस्रवत्सरीतः पश्चात् स्वभूतं सहास्मदीयाक्रमणं यावद्व्याप्नोति । अपि चाद्यत्वेऽपि संस्कृतभाषायाः प्राधान्येन व्याख्यानार्थे वान्यथा वा यथाकथञ्चिदुपयोगदर्शनादेतत्क्षणपर्यन्तोऽपि कालो लौकिकसंस्कृतकालव्यपदेशेन योजयितुं शक्यः । द्वितीयकाल एवास्मिन् ब्राह्मणप्ररोपितो ब्रह्मविद्याङ्कुरो भारतवर्षस्य दक्षिणभागं नीत्वा तत्रादरेण सवर्धितः शाखोपशाखासञ्चयैराक्रान्तदिगन्तः समभूत् । द्वयोरनयोः कालयोरुच्चावचानि परमोज्वलानि ग्रन्थरत्नान्याविर्भूतानि प्रायेण सर्वास्वपि शाखासु । तत्र वैदिककाले शाक्तनर्मीककालविलक्षणतया मतधर्मविषयका ग्रन्थाः परमुत्पन्नाः । ब्राह्मणादिग्रन्थेषु कचित् क्वचिदतिविरलतया गद्यप्रस्थानस्य मनागा-

विर्भावे सत्यपि वैदिककालेऽस्मिन् प्राधान्येन गानयोग्या पद्यसरणिरेव व्यजृम्भत ॥

लौकिकसंस्कृतकालस्तु भूयस्तरमैहिकफलैर्विषयैरुपगूढः पुराणेतिहासमहाकाव्यखण्डकाव्यनाटकाख्यानकाख्यायिकाकथादिषु नानाशाखासु रसवन्ति बहूनि फलान्यसोष्ट । नूनमिह सर्वत्राप्यनुभूयत एव पारमार्थिकः कविताविलासः । परन्तु क्लिष्टतया भाषाशैल्याः अविस्पष्टतया चार्थानामुपहता तदीया शोभा । समतामाधुर्यादिगुणोत्कृष्टाः दोषलेशास्पृष्टाः कृतयस्तावदेतत्कालिक्यो दुर्लभा एव । नैव भारतीयसाहित्यप्रबन्धृणामेतादृशदोषापनयने कदापि श्रद्धोदयिष्ट । तेषां हि वासना सर्वत्राप्यतिशयकल्पनैकप्रवणा तामेवातिशयेन प्रचारयितुमयतिष्ट । तथा हि—प्रत्ययानर्हः साङ्गोपाङ्गः क्रियाकलापप्रपञ्चः, प्रकृतिविरुद्धो वैराग्यातिरेकः, शिल्पकलया देवतानामसङ्गताकारेण प्रतिरूपणं, पदे पदे वर्णनेष्वत्यारोहः पुराणेतिहासानामपारिमित्यं गद्यवाक्योपगुम्फने शब्दानामतिसङ्कोचः तत्राप्यनुपदमतिदीर्घसमासानामुपयोगः, इत्येते भारतीयानां नैसर्गिकवासनोपस्थापिताः पुरस्फुरन्तोऽतिशयकल्पनामूलका दोषाः ॥

शिक्षाव्याकरणगणितज्योतिषवैद्यकैहिकधर्मव्यवहारादिशास्त्रार्थेष्वपि भारतीयाः परमोत्कृष्टानि फलान्यासेदुः । एषां केषुचिद्विषयेष्वहो ! आश्चर्यं ग्रीकेभ्योऽप्यधिकतरमक्रमिष्ट भारतीयानां बुद्धिः ॥

चरित्रांश परं भारतवर्षीयसाहित्ये सत्वविकलोऽर्थः । नास्तीत्येव वा सुवचम् । हन्त ! सर्वथैव तदीपस्तम्भाभावेन संस्कृतसाहित्यपरिक्रमणमार्गस्य गाढान्धकारकवलीकरणात् तत्र सञ्चरन्तः कृतधियोऽप्यनिर्ज्ञातप्रघट्टविशेषाः परिमुह्यन्ति । अहो ! पश्यत भारतवर्षीयकविकुलमूर्धाभिषिक्तस्य तत्रभवतः कालिदासस्य चरितम् । यस्य हि कालविशेषे विचार्यमाणे सहस्रवत्सरीपरिमित कालो विवादविषयतां गतः । अद्याप्येकद्वशतकाब्दावगाही जागर्त्येव दुरुच्छेदः सन्देहः । तादृशस्य कवेश्चरित्रस्य गतिरीदृशी चेत्का कथेतरेषां कवीनाम् । तथा हि प्रायेणेह सर्वेषामेव संस्कृतकवीनां कालविशेषाः प्रसङ्गवशादन्येनान्यदीयशब्दार्थान्यतरानुसन्धानं भाषा-रीतिकृतो विपर्यास इत्येवमादिरूपैः काशकुशायमानैः केवलमान्तरैर्लिङ्गैः साधनीया वर्तन्ते । द्वित्रैः केवलमात्मनः कालविशेषादिकं स्वग्रन्थेषु शृङ्गग्राहिकया निर्दिष्टमुपलभ्यते । इत्थमत्र पुरा भारतवर्षे चरित्रार्थस्यानुत्पत्तौ कारणद्वयमुत्पश्यामः—प्रथमतस्तावन्नैव भारतीयाः कदापि चारित्रिकाणि वीरकर्माण्यकार्षुः । यथा हि ग्रीकाणां पारसीकसंग्रामे यथा च रोमकाणां पुनिकसम्पराये तथैव यदि भारतीयानामपि मार्गे दारुणा निर्घाताः परापतिष्यस्तर्हि त इवैतेऽपि रङ्गीभूय वीरपुरुषान् शरणं प्राप्य तेषां विक्रमचेष्टितान्युपनिबध्नन्तश्चरित्रवस्तु समपादयिष्यन् । द्वितीयतश्च यैर्महतामपदानानि वर्णनीयानि ते व्युत्पन्नमतयो ब्राह्मणाः सुतरामेव ब्रह्मविद्यावासनाशबलितान्तरङ्गाः असारः संसारः कर्माणि च सर्वाण्यस्म-

दीयानि पापायतनानीत्याकलयन्तो, मन्यामहे, चरित्रार्थसंरक्षणा-
द्विमुखा बभूवु ॥

एवंविधत्वाद्वस्तुनः क्रिस्त्वब्दीयपञ्चमशतकपर्यन्तास्तत्तद्ग्र-
न्थोत्पत्तेर्नियताः कालविशेषा दुर्ज्ञाना एव । तत्रापि वैदिकग्रन्थ-
सम्बन्धिन, कालविशेषा आन्तरलिङ्गमात्रसाध्यत्वादनुमानैकशरणाः ।
तथा च तत्र भाषाया रीतौ मताचारेषु साङ्घिकनियमेषु च तत्तत्प्र-
वर्त्तापनतान् स्वभावभेदानवलम्ब्य वेदकाले रङ्गत्रयं विभाव्यते ।
तत्रैकैकस्मिन्नपि रङ्गे दृश्यमानस्तादृशः स्वरूपभेदो नूनं नाल्पीयसा
कालेन निष्पन्नः । किन्तु तत्तादृशभेदोत्पत्तावपेक्षितेन महतैव
कालेन । इह तावदेकैकस्यापि रङ्गस्य कालपरिमाणं शतकाब्दपरि-
गणनामात्रेण व्यवस्थापयद्भिरस्माभिः प्रायोवाद परमुपस्थापयितुं
शक्यः । तत्र द्वितीयरङ्गस्यावसानसीमा क्रिस्तोः पूर्वस्मात् पञ्चम-
शतकाब्दादुत्तरत्र कल्पयितुमशक्य एव । यतस्तत्राविर्भूतानां
सिद्धान्तानां बुद्धमुनिना पूर्वपक्षीकरणाद्व्यक्तैव तेषां तत्पूर्वभाविता ।
तस्य तु मुनेर्निर्याणं क्रिस्तोः पूर्वं ४८० तमे वत्सर इति बहुषु
बौद्धसभासु परिकल्पितैर्लेखप्रमाणैरवधार्यते । अतस्तां रेखामति-
क्रम्य द्वितीयरङ्गावसानसीमापरिकल्पनमन्याय्यमेव स्यात् । वेद-
कालस्यारम्भविषये भिन्नरुचयो विद्वांसः । अस्ति हि संस्कृता-
भिमानिषु तदारम्भस्यात्यन्तिकपूर्वकालिकतास्थापनपक्षपातः ।
क्रिस्तोः पूर्वं २००० तमवत्सरात्तस्यारम्भ इति भूयांसः । नैष
पक्षः क्षोदक्षमः । यतो हि तदारभ्य द्वितीयरङ्गावसानपर्यन्तमायतः

पञ्चशतोत्तरसहस्रवत्सरपरिमितः कालो भाषाया कल्पनाया चोप-
नतानां स्वरूपभेदानामुत्पत्तावपेक्षितादधिकतर इव दृश्यते । उप-
लभ्यते हि ग्रीन्देशीयहोमरिकान्तिकयोरप्येतादृशः स्वरूपभेदः ।
योऽयमेतदपेक्षयाल्पीयसा कालेन निष्पन्नः । तद्वदिहापि तावद्दीर्घः
कालस्तादृशभेदोत्पत्तौ नैवापेक्षितः । तस्माद्योऽसौ मोक्षमूलराचा-
र्योपदिष्टः प्रथमः सिद्धान्तः क्रिस्तोः पूर्वं द्विशतोत्तरसहस्र-
तमाद्वत्सरात्तस्यारम्भ इति सोऽयं यद्यप्यप्राप्ततत्त्वार्थस्तथापि तद-
न्तिकमुवमुपगतो दृश्यते । तथा हि यदि त्रिशतोत्तरसहस्रतमाद्व-
त्सरात्तस्यारम्भ इत्यास्थीयेत तर्हि प्रथमरङ्गीयाणां प्राचीनतमेष्ववर्वा-
चीनतमेषु च मन्त्रेषूपलभ्यमानानां क्षुद्रतरतादृशभेदानामुत्पत्तौ त्रयः
शतकाब्दाः पर्याप्ता भवन्ति । अपि चेहान्यदप्यवगन्तव्यं यत्—
प्राक्तनावस्तभाषाया वैदिकभाषायाश्च मिथो दृश्यतेतरामनपलपनीय-
मन्यादृशं सादृश्यम् । केवलं वर्णविकारनियमानां लक्ष्येषु सञ्चा-
रणेन सर्वाण्येवावस्तीयवाक्यानि पदशः परिवर्त्य न केवलमर्थतः
किन्तु कविताभङ्गयापि वेदात्मकतां प्रापयितुं शक्यन्ते । किं
बहुनोक्तेन । यदि तावदद्य वैदिकभाषामिवावस्तभाषामपि प्रथमर-
ङ्गगतामवाप्स्याम तर्हि तामेतदभिन्नरूपामद्रक्ष्याम । एवं चार्यभार-
तीया वैदिकसाहित्यारम्भकालात् किञ्चिदेव पूर्वमैरोणियेभ्यो विश्लिष्टा
भवितुमर्हन्तीति पर्यवस्यति । अतश्च ते प्रायः क्रैस्तवाब्दारम्भात्
प्राक् १५०० वत्सरेभ्यः पूर्वं भारतवर्षस्य पश्चिमोत्तरं भागं प्रावि-
क्षन्नित्यशक्यमेवोत्प्रेक्षितुम् इति । सर्वानिमान् सिद्धान्तानेकपदे
विदलयन्नन्यः कश्चित् बोन्नपुरवास्तव्यो जाकोबिनामा पण्डितः—

भारतीयवैदिकग्रन्थसमुदायः क्रिस्तो. पूर्वं चतुस्सहस्रवत्सरीत पूर्वस्मात् कालादारब्ध इत्युपन्यास्थत । किन्तु तस्यायमभ्यूहो ज्योतिर्विद्यामूलकः । कमपि ऋतुपरिवर्तं वेदकालारम्भसीम्नि समारब्धमाकलयता तेन कस्यचिद्वैदिकशब्दस्य वेदकालारम्भसूचकत्वरूपमपार्थं परिकल्प्य सिद्धान्तोऽयमासादित । तस्मादयं न रसणीयो नादरणीयश्च । वादकोलाहलेऽस्मिन्नस्माभिरलब्धगाधैः सर्वथैव तदारम्भकालस्य ग्रीकसाहित्यारम्भकालादतिपूर्ववर्तित्वमवधारयद्भिः परं सन्तोष्टव्यम् ।

लौकिकसंस्कृतग्रन्थकालविशेषनिर्णीतौ न केवलमान्तराण्येव किन्तु वैदेशिकागन्तुकोपहृतानि बाह्यान्यपि कतिचिद्विमर्शोपकरणानि सहायीभवन्ति । कानि तान्युपकरणानि? निरूपयामस्तावत् । तत्र प्रथमतोऽलकसान्द्रस्य भारतवर्षप्रवेशः क्रिस्तो पूर्वं ३२६ तमे वर्षे । तदारभ्य हि बहवो ग्रीकास्तदा तदाभ्येत्य कञ्चित्कालमिह स्थिताः । तेष्वेकः सविशेषस्मरणार्हो मेगास्तिनसाख्यः । यो हि प्रायेण क्रिस्तो. पूर्वं ३०० तमे वर्षे प्रविष्टः पाटलिपुत्रराजधान्यां लब्धास्पदस्तदात्वे स्वयं साक्षाद्दृष्टाया भारतवर्षीयाणामवस्थितेरपूर्णमप्यसून्यं वृत्तान्तं प्रस्तौति । ततः पश्चात् कतिपयशतकाब्दापगमे तीर्थयात्राप्रसङ्गेन फ हियान्, हियान् त्साङ्, ऐ तिसङ् समाख्यात्रयश्चीनदेशीयाः क्षपणकाः समागताः । तत्सम्पादिताश्च तत्तत्तीर्थक्षेत्रभ्रमणविषयका लेखाः सुरक्षिताः साम्प्रतमांगल्या परिवर्त्य प्रकाशिताश्च भारतीयानां साङ्घिकनियमेषु मताचारेषु बौद्धशिलाले-

स्यादिषु च तदात्वे दृष्टानवस्थाविशेषान्निवेदयन्ति । भारतवर्षीयग्र-
न्थसमुदायविषयका बहवोऽर्थास्तेन संग्रहीतुं शक्याः । विशेषत-
स्तत्र 'हियान् त्सांङ्' महाभागेन तदानीन्तनान् संस्कृतकवीनधिकृत्य
स्वारवत्तरा विषयाः सम्भृताः । न च तदागमनात् पूर्वेषामेकस्यापि
कवेर्नियतः कालविशेषः परिच्छेत्तुं शक्यः । त्रिभिर्ज्योतिषिकैः परं
स्वजीवितवत्सराणां स्वस्वग्रन्थेषु निर्देशात् ते त्रयोऽपि क्रिस्तोः पर
पञ्चमषष्ठशतकाब्दयोरवतीर्णा इत्यसन्देहं जानीमः । प्रथमागताभ्यां
चैनक्षपणकाभ्यामुपक्षिप्तो वृत्तान्त एव भारतवर्षीयशिलाशास्त्राद्यधि-
गमस्य बीजम् । तेनैव च बुद्धमुनेरभिजनः कपिलवस्त्वेवेति
१८९६ तमवत्सरीयदशम्बरमासे निरधारि । लौकिकसंस्कृतका-
लावगतौ महम्मदीयाक्रमणतरङ्गागतेन 'अल्बेरूणि' समाख्येनारभ-
कविना १०३० तमायां समायामुपनिबद्धे इण्डिय' समाख्ये ग्रन्थे
समुट्टङ्किताः सन्ति बहवो विशेषाः ॥

एतावतोक्तेन यदस्माभिः पूर्वमभ्याधायि लौकिकसंस्कृतग्रन्थ-
समुदायविषयेऽपि क्रिस्त्वब्दीयपञ्चमशतकपर्यन्तः कविकालनिर्णयः
परस्पराश्रितलिङ्गैकसाध्य इति तदिदानीं स्पष्टीभूतम् । ततश्च
भाषारीति-मनोव्यापाराणां स्वभावभेदेन, पूर्वेषां कवीनां नामनिर्देशेन
श्रीकाणामन्येषां वा विश्रुतचरित्राणां राज्ञामनुकीर्तनेन नवनवोदि-
तानां ज्योतिश्शास्त्रसिद्धान्तानां परामर्शेन वा यथासम्भवमुपस्थितेन
तत्तल्लिङ्गेन कवीनां पौर्वापर्यं निश्चीयते । तद्वदद्यत्वे निर्मथितानि
विमर्शोपकरणान्यस्मिन् विषये महदुपकुर्वन्ति । अपि च नाणकानां,

ताम्रशासनपत्राणां, शिलालेखानां, स्तम्भाक्षराणां च परीक्षयेदानीं बहुभि पण्डितैर्विचार्यमाणेन पुरातनराजकीयचरित्रार्थेन, मन्यामहे, संस्कृतसाहित्यचरित्रमार्गेऽपि महान् प्रकाशो भविष्यति । तथा विचार्य निर्णीयमानाश्च विषया. प्राक्तनभारतीयरहस्याविष्करणोद्यतासु कोर्पस् इन्स्क्रिप्टियोनं इण्डिकेरं', 'येपिग्राफिय इण्डिक', इत्येतास्वन्यासु च बह्वीषु पत्रिकासु प्रकाशिता प्रकाश्यन्ते च । किञ्चाद्यत्वे सम्पादितः शिलाशासनादिव्यवसायः कतिपयेषामर्वाचां संस्कृतकवीनां तत्तत्कालविशेषनिर्धारणेन मताचाराणां तादात्विकस्वरूपाभिव्यञ्जनेन संस्कृतसाहित्यस्य सर्वाङ्गप्रकाशनेन च साहित्यमतधर्मयोश्चरित्रस्य गुरुतामापादयति । अपि च केचित् पद्यबद्धा शिलालेखाः कृच्छ्रानुवाचिताक्षरा कानिचित् संस्कृतमयानि प्राकृतमयानि च काव्यानि क्रिस्त्वब्दारम्भकाल एव स्थितान्यनुमापयन्ति । नैवायमर्थो जातु ज्ञातपूर्व ॥

तत्र प्राचीनतरा अपि शिलालेखाः संस्कृतसाहित्यचरित्रान्वेषिणां महत्साहायकमाचरन्ति । यतो हि ते प्राक्तन्याः संस्कृतभाषालेखनपद्धतेः स्वरूपं तदानीन्तन्या भाषागतेरवस्थाविशेषं च सम्यगवधारयन्ति। तेषु प्राचीनतमः क्रिस्तो पूर्व २५९ तमात् २२२ तमं वत्सरं यावदुत्तरभारतवर्षे राज्यं कृतवतो बुद्धमतानुगस्याशोकमहाराजस्य काले समुत्कीर्णः शिलालेख. स्तम्भलेखश्च । यस्य हि राज्यकाले प्रचलितायां तृतीयस्यां बौद्धशास्त्रचर्चासमित्यां बौद्धसिद्धान्ताः

प्रतिष्ठापितास्ततः सम्भाव्यन्ते । व्यक्तमेवैतेभ्यस्तदानीन्तनानां राजकार्याणां मताचाराणां व्यावहारिकभाषाणां च स्वरूपविशेषा सम्यगवगम्यन्ते । ते च बहुसङ्ख्यतया प्रतिरूपिताः कत्तियवारान्तर्गतगिरिनगरादारभ्योत्कलगतढौलिपर्यन्तं काबूलनद्युत्तराशागतकपर्दगिरेरारभ्य खल्सिपर्यन्तं च विस्तीर्णे भारतवर्षीयभूभागे सर्वत्र विप्रकीर्णाः समुपलभ्यन्ते । ते सर्वेऽपि महता यत्नेनानुवाचिता, सम्प्रति भाषान्तरेणानूदिता. । तेष्वेकः स्तम्भलेखो बुद्धस्य जन्मभूमेः स्मारकतयाऽशोकमहाराजेन निखातः केवलं १८९६ तमे वत्सर एवोपलब्धः ॥

एतेऽशोकीया शिलालेखा एव भारतीयलेखनप्रकाराभिव्यञ्जकानि प्राचीनतमानि प्रमाणानि । चिरं हि संशयग्रस्तौ भारतीयानां लेखनपद्धतेरादिमा रीतिरारम्भकालश्च सम्प्रत्याचार्यबुह्लरोपज्ञातैः र्लिपिविद्याविमर्शोपकरणैः प्रकाशतां प्राप्तौ । तत्र तावदयं निर्णयः— पुरा भारतवर्षे द्विविधा वर्णमाला बभूव । तत्रैका खरोष्ठीसमाख्या क्रिस्तो पूर्वस्मात् चतुर्थशतकाब्दात् क्रिस्तोः परं द्वितीयशतकाब्दपर्यन्तं गन्धारेपूपयुक्ता । सा चैषा क्रिस्तो. पूर्वं पञ्चमशतकाब्दे सेमितिकशाखागताया. 'आरमेंग्' वर्णमालायाः परिगृहीता । अत एव तस्यास्तन्मूलभाषायामिवात्रापि लेखनपद्धतेर्वामा गतिः । अपरा च ब्राह्मीसमाख्या भारतीयानां राष्ट्रीया वर्णमाला । अद्यत्वे दृश्यमाना विरूपाः सरूपाश्च सर्वा अपि वर्णमालास्तन्मूलका एव । दक्षिणा च तल्लेखनपद्धतेर्गतिः । बुह्लराचार्यस्तावदत्राप्येवमातिष्ठते—

नैष तल्लेखनपद्धतेरादिम. सम्प्रदाय । यतो हि क्रिस्तो पूर्वं चतुर्थशतकाब्दोत्पन्ने कस्मिंश्चिन्नाणके समुपलभ्यते तल्लेखनस्य वामा गतिः। तस्मादेषापि वर्णमाला पुरातनेष्वसि नरियानां तोलेषु क्रिस्तोःपूर्वं ८९० तमवर्षे उट्टङ्किताया 'मोयबैट' शिलायां वा दृष्टायाः उत्तर-देशीयसमितिकलेखनपद्धतेः प्रतिकृत्या परिकल्पिता । सा चैषा क्रिस्तोः पूर्वं ८०० तमवत्सराभ्यन्तरे ससपटोमियाद्वाणिज्येनागतै-रिह प्रापिता सम्भाव्यत इति ॥

अत्रैव भारतीयलेखनपद्धतेरभिव्यञ्जकान्यतिविरलान्यत्यर्वा-चीनानि च । न खलु सर्वथापि क्रिस्तोः पूर्वस्मात् चतुर्थशतकादशोक-कालाद्वा प्राक्तनानि शिलालेखादिविमर्शोपकरणान्युपलभ्यन्ते । नात्र विषये तदभावात्तदभाव इति व्यतिरेकव्याप्तिर्ग्रहीतुं शक्या । यतो ह्यतिमहतः कालादारब्धेऽपि लेखनसामग्रीसौकर्ये भारतीयानामध्य-यनरीतिरद्याप्यनूचानपथेनैव वरीवृत्यते । श्रुतय शास्त्राणि च सर्वत्र गुरुमुखादेव श्रूयन्ते न पुनर्ग्रन्थात् । एवं ग्रन्थापेक्षया मुख-पाठ एवातिशयेनादृतो भारतीयैः । अयमेव च वैदिकसाहित्य-जाते ग्रन्थस्य लेखनस्य वा नाम्नोऽप्यनिर्देशे हेतुरित्याकलयामः । इदानीन्तनाः कवयोऽपि खलु यथा स्वकृतीनां लोकैरुद्गारेण तुष्टा भवन्ति न तथा तैरवलोकनमात्रेण । अपि च स्मृतिपथातिगात् कालात् प्रवृत्तोऽयं सम्प्रदायः—— क्वचिदनभिज्ञातलेखनोपाये काले भारतीयानि च्छन्दांसि शास्त्राणि चारब्धानीत्यनुमापयति । ऋग्वेदो-पक्षिप्तः परम्परापाठसम्प्रदायोऽपि लेखनोपकरणोपयोगारम्भात् पूर्व-

मेवाभिवृद्धः । अतश्चैषां लेखनप्रकाराभिव्यञ्जकानां शिलालेखादी-
नामुत्पत्तेः प्रागेव जनैर्लेखनोपायः परिज्ञातः प्रयुक्तश्चेति निश्चीयते ।
अशोकीयाशिलालेखारूढानामक्षराणां समीक्षायामप्येतदेवावधार्यते
यद्—नैष लेखनसम्प्रदायः क्रिस्तोः पूर्वं तृतीयशतकाब्दे तच्छिलाले
खोट्टङ्कनकाले नूत्नतयारब्ध इति । यतो हि तत्र बहून्यक्षराणि
बहुधा विकृतानि, कानिचिन्नवधा दशधा वा भिन्नरूपतया लिखितानि
च दृश्यन्ते । अपि च तावत् सेमितिकशाखावलम्बिन्या केवलं
द्वाविंशत्यक्षरात्मिकाया वर्णमालायाः षट्चत्वारिंशदक्षरात्मकब्राह्मीव-
र्णमालात्वेन परिणतावपेक्ष्यत एवातिदीर्घः कालः । शिक्षाशास्त्र-
विचक्षणैर्ब्राह्मणैः परिकल्पितैषा पूर्णावयवा वर्णमाला बुह्लरकृतवीरवा-
दानुसारेण क्रिस्तोः पूर्वं पञ्चमशतकाब्द एवावर्तिष्टेत्यवगम्यते । एषैव
क्रिस्तोः पूर्वं प्रायेण चतुर्थशतकाब्दोत्पन्ने पाणिनीयमहाव्याकरणेऽ
नुस्मृता ततः पश्चादविकृताकृति समवर्तत । किञ्च न केवलमस्यां
वर्णमालायां संस्कृतभाषादृष्टानि सर्वाण्यक्षराणि यथाकथञ्चित् संग्र
थितानि किन्तु शास्त्रीयरीत्या सन्निवेशितानि । तत्रायं रचनाक्रमः—
प्रथमं मूलस्वरा ह्रस्वा दीर्घाश्च । ततः सन्ध्यक्षराणि, पश्चाद्
व्यञ्जनानि चेति । व्यञ्जनान्यपि तेषां स्थानसाम्यानुरोधेन वर्गी-
कृतानि । तथा हि—त्, थ्, द्, ध्, न्, इति दन्त्यानि, प्,
फ्, ब्, भ्, म्, इत्योष्ठ्यानीत्येवंरूपेण पृथग्वर्गतया विन्यस्तानि ।
अहो बत यौरोपास्तु अतिक्रान्तेष्वपि पञ्चशतोत्तरसहस्रवत्सरेषु
विविधशास्त्रालोकसमुद्भासितेष्वपि दिगन्तरालेषु पश्यताद्यत्वेऽपि
तदीयभाषागतानां समग्राणां ध्वनीनामाविष्करणेऽसमर्थामपूर्णां

वर्णमालामाश्रयन्ते । या खलु त्रिसहस्रवत्सरात् पूर्वं प्राक्तनसेमितिकादुपादाय ग्रीकायां संयोज्यमाना यथा तथैवाद्यापि संकुलीभूतस्वरव्यञ्जना संस्कारहीना च अहो ! यथा जातावस्थामनुभवति ॥

क्रिस्तोःपूर्वं तृतीयशतकाब्दोत्कीर्णेषु शिलालेखेषु दृश्यमाना ब्राह्मी वर्णमाला उदीच्यावाच्यभेदेन द्वेधा विभागमर्हति । तत्रौत्तराहो वर्णमालासमुदायः सर्वोऽप्युदीच्यशाखातः सम्भूतः पश्चात् क्रमेणार्यभाषाप्रभवाणां प्राकृतानां मध्ये प्रतिष्ठां गतः । तत्र प्रधानतमा देवनागरीत्युच्यमाना नागरीवर्णमाला । तयैव संस्कृतग्रन्थाः सर्वेऽपि लिखिताः । तयैव च पश्चात् संस्कृतहिन्दीमराठीपुस्तकानि नियमेन मुद्रितानि । वर्णानामुपरिष्टादायताभिः समरेखाभिस्तस्याः स्वभावविशेषो व्यावृत्त एव । तत्समुत्कीर्णः शिलालेखस्तु क्रैस्तवाष्टमशतकाब्दीयः । तन्मयः प्राचीनतमो ग्रन्थश्च क्रिस्तोः परमेकादशे शतकाब्दे लिखितः । अवाच्यशाखायां तु पञ्चविधा वर्णमालाः प्रादुर्भूताः । ताः सर्वा अपि दक्षिणेन विन्ध्याद्रिमुपयुज्यन्ते । कर्णाटकान्ध्रदेशीया अपि वर्णमालास्तत्प्रभवा एव ॥

अचिरस्थायितया लेखनोपयुक्तवस्तूनां क्रिस्त्वब्दीयचतुर्दशशतकात् पूर्वं लिखिता ग्रन्थाः परिमिता एवा । भूर्जत्वचां खण्डानि तालपत्राणि च परं भारतीयैर्लेखनार्थमुपयुक्तानि । तत्र भूर्जत्वचामुपयोगः प्रथमं पश्चिमोत्तरभागे भूर्जवृक्षबहुले हिमाद्रेः कटकदेशे समारब्धः पश्चात् क्रमेण भारतवर्षस्य मध्यभागे पूर्वपश्चिमप्रान्तयोश्च व्याप्तः । इह तावदवधेयम् । यद्यप्यद्योपलभ्यमानः प्राचीनतमो भूर्ज-

त्वङ्मयः संस्कृतग्रन्थः क्रिस्तोः परं पञ्चमे शतकाब्दे लिखितः तथा क्रिस्तो परं १८९६ तमे वर्षे प्राप्तः खरोष्ठीनिबद्धः कश्चित्पालीग्रन्थस्तत किञ्चित् प्राक्तनश्च तथापि तेषामुपयोगस्ततोऽतितरां प्रागेवारब्ध इति । निर्बोधिताश्च वयं क्विण्टस् कर्टियस्नाख्येन यथा—पूर्वमलक्सान्द्रप्रवेशकाल एव भारतीयैस्तान्युपयुक्तानीति । अपि च लौकिकसंस्कृतग्रन्थानां परामर्शनेन अल्बेरूणेर्वचनेन च मध्यकालारम्भे भूर्जवृक्षाणां पत्राण्यपि भारतीयैः पत्रिकालेखनार्थं बाहुल्येनोपयुक्तानीति निश्चीयते ॥

अस्माभिरधिगतः प्राथमिकस्तालपत्रमयो ग्रन्थः क्रिस्तोः परं षष्ठे शतकाब्दे लिखितः । स च जापानिकपुस्तकशालायां परिरक्ष्यते । तस्यैकं प्रतिरूपं 'बाड्लीयन' पुस्तकालयेऽप्यस्ति । हियान् त्साङ्नाम्नश्चैनक्षपणकस्योक्त्या क्रिस्तोः परं सप्तमे शतकाब्दे तालपत्राणि भारतभूमौ साधारण्येनोपयुक्तानीत्यवगम्यते । किञ्च तेषामुपयोगस्ततः सुतरां प्रागेवाभूदित्ययमर्थः क्रिस्तोः परं प्रथमेशतकाब्दे तालपत्राकृत्या निर्मितेन ताम्रशासनपत्रेणानुमीयते ॥

काकलानि तावज्जैत्रयात्रागतैर्महाम्मदीयैरानितानि पश्चाल्लेखनकार्येषु तान्येवातिशयेनोपयुक्तानि । प्राथमिकं च काकलमयं पुस्तकं क्रिस्तोः परं त्रयोदशशतकाब्दस्य पूर्वार्धे सम्पादितं गुर्जरदेशादधिगतम् । काकलप्रवेशात् पूर्वमेवोत्तरभारतवर्षेलेखनार्थं मष्याः उपयोगात् ततः परं तालपत्रादीनां कथा मन्दसञ्चारा समभूत् ।

दक्षिणभारतवर्षे तु बाहुल्येन नाराचस्योपयोगादद्यापि क्वचिद् क्वचिद् ग्रन्थानां पत्रिकाणां च लेखने तालपत्राण्येवोपयुज्यन्ते । लिखितानां भूर्जवल्कलानां तालपत्राणां वा मध्ये रन्ध्रमेकमुपाग्रयोस्तथाविधं रन्ध्रद्वयं वा समुत्पाद्य तदन्तः प्रवेशिते सूत्रे पुटक्रमेण तानि संग्रथ्य तेन बध्यन्ते। एवंरीत्या ग्रथनादेवैषां ग्रन्थव्यपदेशः सिद्धः ॥

यज्ञकर्मणामपवित्रतापत्तिभिया भारतीयैर्न जातु मृगाणां चर्म लेखनार्थमुपायुज्यत । शासनलेखनार्थं तावदादौ ताम्रपत्राण्येवोपयुक्तानि । तानि च नियमेन तालपत्राकृत्या भूर्जवल्कलखण्डाकृत्या वा समुत्पादितानि ॥

मष्या उपयोगो भारतभूमौ क्रिस्तोः पूर्वं द्वितीये शतकाब्देऽवर्तिष्टेति बुद्धमुनेः खननस्थाननिर्मितेन मषीन्यस्ताक्षरेण वप्रेण, ततः पूर्वं चतुर्थशतकाब्देऽप्यवर्तिष्टेति नीयार्कस्-क्विण्टस्कर्टियसो. युक्तिवचनैश्चावधार्यते ॥

पत्रात्मकाश्चैते ग्रन्थाः प्रतनुभ्यां फलकखण्डाभ्यामाच्छाद्य सूत्रेणावध्यन्ते । क्वचिल्लोहितैः पट्टवस्त्रैश्च परिवेष्ट्यन्ते । तथाविधाश्च ते ग्रन्थाः सम्प्रत्यपि संरक्ष्यन्ते देवालय—मठ—विद्यालय—राजभवनादिग्रन्थागारेषु विशेषतः केषुचिद् गृहेषु च । अतिविशालः कश्चिद् ग्रन्थागारः पुरा क्रिस्तोः परमेकादशे शतकाब्दे धाराधिनाथेन भोजराजेन स्वराजधान्यां परिकल्पितः स्थितः । तर्कयामश्च पुराबहवो

ग्रन्थागारास्तत्र तत्र परिरक्षिता अभूवन्निति । यतो हि बाणकविः कस्मिंश्चिद् ग्रन्थागारे ग्रन्थानुवाचनपद्वीमलञ्चकारेति तच्चरित्रादव-गम्यते । अद्यत्वेऽपि बहवो ब्राह्मणास्तत्र तत्र बहून संस्कृतग्रन्था-लयान श्रद्धया परिपालयन्तो दृश्यन्ते ॥

संस्कृतभाषा तावत् तद्गतग्रन्थसमुदायस्वभावविशेषानुरोधेन वैदिकी लौकिकी चेति द्वेधा विभक्तु शक्यते । यथा होमारिकभाषा पश्चात्कालिकग्रीकभाषातः यथा च प्राक्लिकश्लोकदृष्टा लेतिनभाषा वारोभाषातश्च भिद्यते तथा वैदिकी वाग्लौकिकीतोऽपि । अपरं च वै-दिकभाषायामपि नानावस्था साक्षात्क्रियन्ते । सर्वात्मना संस्कृ-ततापन्ने, प्रागेषा रङ्गे रङ्गे नवनवानवस्थाविशेषाननुबभूव । तत्र प्र-थमरङ्गेऽप्येषा नैव पण्डितपामरसाधारणी व्यावहारिकी समभूत् । किन्तु केवलमृषिभिः स्वकपोलकल्पिता पुरोहितवंशपरम्परामात्राधि-ष्ठिता च बभूव । विषयेऽस्मिन भाषागतिरेव बहुतराणि लिङ्गान्यु-पस्थापयति । तत्र तावद्भिन्नकालिकानां शब्दरूपाणां पार्श्वत. प्रयोगः किञ्चिल्लिङ्गम । किन्तु नायमर्थो होमरभाषायामिवास्या-मत्यारूढो दृश्यत इत्यन्यदेतत् । अतश्च वेदद्रष्टॄणां व्यावहारिकी भाषा वैदिकभाषापेक्षया विशेषतश्छन्दोबन्धरहिता आर्षकल्पनाहीना च स्थितेति शक्यवचनम । वस्तुतस्तु वेदकालेऽपि काचिदन्यैवाभूद् व्यावहारिकी भाषा । अव्यभिचरितोह्येष आचारः—यत्र यत्र ग्रान्थिकी भाषा तत्र तत्र काचिदन्या व्यावहारिकीति । स एष आ-चारः सविशेष. समुपलभ्यते भारतवर्षे ॥

यद्येवं वैदिकभाषैव न सर्वसाधारणी किन्तु पण्डितगोष्ठीमात्रप्रसिद्धेत्याशङ्क्यते तर्हि का वा स्यात्कथा लौकिकसंस्कृतभाषायाः । सत्यमेषा लौकिकी वैदिकीतो भिद्यत एव । परन्तु नैते विकारा नैसर्गिकभाषासाधारणाः । प्रायेण हि लौकिकसंस्कृतेऽपि वैदिकभाषादृष्टैव वर्णानां परिस्थितिः । शब्दरूपाण्यपि भूयसा तान्येव । अथाप्यनुभूयतेतरां महदन्तरमुभयोः । कोनु स्यादत्र हेतु ? सत्यं. नैष भेदः प्रत्ययोदितैः शब्दरूपैरुपनतः किन्तु कालक्रमागतैः प्रत्ययादिलोपैः । तथाहि पश्यत, लेटः प्रचारः संस्कृतभाषातः परिभ्रष्ट एव । उपद्वादशाश्च तुमुन्नर्थकाः प्रत्यया संस्कृतभाषायामेकमात्रावशिष्टाः । एव समानार्थकानि नानाविधानि विभक्तिरूपाण्यपि प्रयोगपथात् प्रच्युतानि । एवं च वेदद्रष्टॄणां व्यावहारिकी भाषा मन्त्रभाषापेक्षया संस्कारविशेषसहिता सङ्करीभावरहिता चांशतो लघुतापादनद्वारा लौकिकसंस्कृतभाषायाः सृष्टौ कारणतामगात् । विकाराश्च प्राधान्येन शब्दशास्त्रकृताः । निरतिशयो हि भारतभूमावादितः प्रभृति शब्दशास्त्रे व्यासङ्गः । तन्नियमैकमूलका. खलु संस्कृतभाषायां पदान्ते पदमध्ये वा संहितादशायां जायमानाः प्रयत्नकल्पिता नानाविधाः सन्धिविशेषाः ॥

लौकिकसंस्कृतभाषायाः शब्दकोशोऽपि सुदूरं विपर्यस्तः । सर्वभाषासाधारणोऽयं विशेषः, न तु वैयाकरणकल्पितः । न खल्वेवंविधा विषया. वैयाकरणकुलायत्ताः । तस्मात् सोऽयं विपर्यास. भाषाशास्त्रानुमतेनैव पथा निष्पन्नः । तथा हि कचि-

शब्दान्तरप्रवेशेन क्वचित् प्रकृतिप्रत्ययसंश्लेषेण च शब्दकोशोऽयं सर्वतोमुखः सम्प्रवृद्धः । अन्यतश्च केचन शब्दाः प्राचीना एव सन्तो नवीना इवाभान्ति । ते तु यादृच्छिकाः न तु वैदिकभाषास्थिताः । अपरे च कैश्चिन्नीचभाषातस्तान् तदोपादाय संस्कृते संयोजिताः । अपरे च वैदिकभाषारूढा एव भूयांसः शब्दा अर्थान्तरवाचिनः परिणताः ॥

एषा च लौकिकी भाषा महावैयाकरणेन पाणिनिमुनिना क्रिस्तोः पूर्वं चतुर्थशतकाब्दस्यान्तिमे पादे दृढबद्धसर्वावयवा भूयोविकारानुगमान्निवारिता । तेनैवमस्याः संस्कृतत्वात्संस्कृतव्यपदेशः सिद्धः । न चैष संस्कृतशब्दः प्राचां वैयाकरणानां परिचितः । आदिकाव्ये रामायणे परं प्रथमप्रयुक्तो दृश्यते । मन्यामहे संस्कृतमित्ययं व्यपदेशः प्राकृतमित्यस्य प्रतिद्वन्द्वितया कल्पितः । दर्शितश्चायमेवाभिप्रायः क्रिस्तोः परं षष्ठशतकाब्दोत्पन्ने काव्यादर्शे । इदमत्रावधेयं यद्—क्रिस्तोः पूर्वं पञ्चमशतकाब्दादारभ्य यास्काचार्यप्रभृतयः प्राञ्चो वैयाकरणा वैदिकीतो व्यावर्तयन्त इमां भाषाशब्देन निर्दिशन्ति । व्यावहारिकत्वमात्रसुलभान् बहून् विशेषान् प्रदिशन्ति च । भाष्यभाषी भगवान् पतञ्जलिरिमां लौकिकीत्याह । आचार्यः पाणिनिरपि व्यवहारमात्रोपयुक्तान् बहून् कार्यविशेषाननुशास्ति । तथाहि दूराद्धूते, प्रत्यभिवादे, प्रश्नोत्तरयोश्च प्लुतविधिरस्या व्यावहारिकत्वमन्तरा नोपपद्येत । अपरं च नैषा केवलं ग्रन्थमात्राश्रया विद्याशालामात्राधिगम्या वा बभूव । यतो ह्यस्यामपि

प्राकृतभाषास्विव बहवः स्वरूपभेदाः समभूवन्निति प्राचीनतरैरेव लिङ्गैर्निश्चीयते । तथा हि यास्कपाणिनी मुनिप्रवरौ प्राचामुदीचां च मतभेदान्निर्दिशतः। तत्रभवान् कात्यायनोऽपि देशभेदेन प्रयोगभेदान् दर्शयति । भगवान् पतञ्जलिश्च तत्तद्देशखण्डेष्वर्थभेदेन प्रयुज्यमानान् शब्दविशेषान् शृङ्गग्राहिकया निर्दिशति । एवमेतैरन्यैश्च कारणैरेषा क्रिस्तोः पूर्वे द्वितीये शतकाब्दे विन्ध्यहिमाचलयोरन्तरालवर्तिन्यार्यावर्ते सर्वतो व्यवहारार्थमुपयुक्ता बभूवेत्यवधार्यते । किन्तु कैरेषा तत्र भाषिता ? ब्राह्मणैः परम् । यतो हि संस्कृतभाषिणो जानान् शिष्टानाह पतञ्जलिर्भगवान् । शिष्टा नाम शब्दप्रयोगकुशलाः । न च नेयमब्राह्मणैरप्युपयुक्ता । दृश्यते हि महाभाष्ये सूत कश्चित् सूतशब्दव्युत्पत्तौ केनचिद्वैयाकरणेन सह कलहायमानः । एवं चेन्नाटकेष्वनुभूयमानो नीचपात्राणां प्राकृतभाषाव्यवहारः सङ्गच्छते । तत्र हि राजानः केचिदुत्कृष्टवर्गीयाश्च केवलं संस्कृतव्यवहारिणः । स्त्रियो नीचपात्राणि च प्राकृतानि भाषन्ते । किञ्च नाटकेषु प्राकृतभाषिभिः सह संस्कृतेन व्यवहारदर्शनात् संस्कृतवाक्यप्रयोगेऽसमर्था अपि ते तदर्थज्ञानकुशलाः समभूवन्नित्यध्यवसीयते । एवं नाटकप्रेक्षितारः पुराणश्रोतारश्च सर्वे स्त्रीशूद्रादयोऽपि संस्कृतभाषाग्रहणपटव एवाभूवन् । एवमेषा संस्कृतभाषा यद्यप्यादितः प्रभृति केवलं ग्रान्थिकी कृत्रिमा चावर्तिष्ट तथाप्यस्या व्यावहारिकभाषासाधारणः स्वभावविशेषो दुरपह्नवः । तथा हि पूर्वमेवोक्तमस्माभिर्यथा भारतवर्षे परश्शतैर्ब्राह्मणैरद्याप्येषा सविशेषं व्यवहारार्थमुपयुज्यते, दिने दिने ग्रन्थाश्चैतद्रूपामयाः प्रणीयन्त इति । इत्थमेषा ज्यूव-

र्गमध्यप्रसिद्धया हीब्रूभाषया, मध्यकालिक्या लेतिनभाषया च समानयोगक्षेम दशाविशेषमन्वभूदनुभवति च ।

तस्माद्यो य संस्कृताभिज्ञः स सर्वोऽप्यन्यां सर्वसामान्यामेकामनेकां वा प्राकृतभाषां बभाषे । कुतः प्रादुरभूवन्निमानि प्राकृतानीत्ययं प्रश्नः संस्कृतप्राकृतयोर्मिथ संम्बन्धसम्पादने पर्यवस्यति । तथा हि वन्यैरादिनिवासिभिरुपयुक्ताः काश्चिद्भाषा अपहाय विन्ध्यहिमाचलान्तःपातिन्यार्यावर्ते गोवाधिष्ठितपोर्टगीसराज्यपर्यन्तं मुम्बामण्डले च भाष्यमाणानि सर्वाण्यपि प्राकृतानि प्राचीनसंस्कृतादुत्पन्नानि । अनेन हि व्यक्तीभवति किं प्रयोजनमिदानीन्तनानां भारतीयानां संस्कृतभाषाचरित्रान्वेषणप्रयासेनेति । तानि च प्राकृतानि प्रथमं भारतवर्षस्य पश्चिमोत्तरभागे लब्धजन्मानि क्रमेण तत प्रस्थाय पूर्वदक्षिणप्रान्तवर्ज भारतवर्षस्य समग्रं भागमभिव्यापुः । तेषामुद्भवोऽप्यतीव प्रागेव । वस्तुतश्च वेदमन्त्रप्रादुर्भावकालेऽपि सर्वसाधारणी विलक्षणवर्णमाला काचिदन्या भाषा स्थितेत्यनुमीयते । यतो हि वैदिका एव शब्दाः केचिद्भाषान्तरसंसर्गवशाद्विकृतवर्णाः संलक्ष्यन्ते । न चात्र कश्चिदन्यो हेतुरुद्भावयितुं शक्यः ॥

अपरं च जानीमः—क्रिस्तोः पूर्वं षष्ठे शतकाब्दे बुद्धमहर्षिः स्वकीयं मतं सर्वेषां सुखबोधाय विश्वजनीनया कयाचिद् देश्यभाषया प्रचारयामासेति । अपि च क्रिस्तोः पूर्वं चतुर्थे पञ्चमे च शतकाब्दे

समुत्पन्नाः सर्वेऽपि बौद्धग्रन्था तन्मतोत्पत्तिस्थानभूते मगधदेशे प्रसिद्धया प्राकृतभाषयोपनिबद्धाः । लेनिनभाषोत्पन्नायां एतालिक्यामिव मागध्यामपि संयुक्ताक्षराणां सङ्कोचनं हलन्तशब्दानामजन्तत्वापादनं च विशेषतोऽनुभूयते । तथा हि—सूत्रं, धर्म. इत्येतौ संस्कृतशब्दौ सुत्त धम्मं. इति, विद्युत्. इत्ययं शब्दो विज्जु इति च मागध्यां विपरिणता । एवमेव सर्वसाधारणी काचिदन्या भाषा दाक्षिणात्यैर्बौद्धैः पवित्रत्वेन परिगृहीता पालीसमाख्यया प्रथते । तदीयमुत्पत्तिस्थानमद्याप्यनिर्णीतम । किन्तु क्रिस्तोः पूर्वं तृतीये शतकाब्दे सा प्रचारे स्थितेत्येतावत्परमशोकीयैः शिलालेखैः स्तम्भलेखैश्च निश्चेतुं प्रभवामः । सैव क्रिस्तो पूर्वं तृतीये शतकाब्दे सिंहलद्वीपं प्रापिता तत्राद्यत्वे प्रचरन्त्याः सिङ्हलभाषायाः प्रभवतां गता । इत्थं बुद्धमतप्रचारार्थमादृतत्वाल्लब्धप्रतिष्ठानि मध्यकालिकानि प्राकृतानि राजभाषापदेऽभिषिच्य तैरेवाशोककालात्प्रभृति सर्वाणि शासनपत्राणि व्यवस्थापत्राणि च समपादिषतेति शिलालेखप्रामाण्यादवधार्यते । प्राकृतभाषामयेष्वपि शिलालेखेषु संस्कृतश्लोकलिखितानां शिरोनाम्नां दर्शनाद् यद्यपि संस्कृतभाषायाः प्रचारस्तदात्वेऽप्यकुण्ठित एवाभूदित्यनुमीयते तथाप्यसंशयं नाभूत्तस्याः प्रवेशो राजकीयेषु न्यायाधिकरणेषु । यतोह्यादौ सर्वे बौद्धा जैनाश्चानाघ्रातसंस्कृतगन्धा अभूवन् । अतस्तदानीन्तना राजानस्ते केवलं प्राकृतान्येवोपायुञ्जत राजकार्येष्वित्ययं साधीयान वादः ।

गच्छति काले बौद्धा जैनाश्च संस्कृतभाषायाः परिशीलने प्रवृत्ताः प्राकृतशब्देषु संस्कृतप्रत्ययान संयोज्य विविधानन्यांश्च विकारविशेषान सम्पाद्य सर्वेषां प्राकृतानां प्रकृतिवदाभासमाना मिश्रात्मिकानन्या भाषामस्राक्षुः । या खलु ललितविस्तरादिबौद्ध-ग्रन्थान्तर्गतेषु गाथाभिधानेषु पद्येषूपलभ्यमानत्वाद् गाथाभाषेत्यन्वा-ख्यायत । परन्तु नैतदस्या अन्वर्थं नामधेयम । यतो हि बौद्ध-धर्मप्रतिपादका गद्यग्रन्थाश्चानयोपनिबद्धाः समुपलभ्यन्ते ॥

किञ्च शिलालेखानां सूक्ष्मेक्षणिकया परीक्षायां—अब्राह्म-णोपज्ञस्य मतद्वयस्य प्रचारणार्थमुपयुक्तेषु प्राकृतेषु क्रमिकः संस्कृता-नुप्रवेशः प्रकटीभवति । तथा हि मथुरानगरीयाः जैनशिलालेखाः परीक्ष्यन्ताम । तत्र शुद्धं प्राकृतं क्रिस्तो परं प्रथमशतकाब्दपर्यन्त-मविच्छेदेन प्रवर्तमानं दृश्यते । ततः क्रमेण संस्कृतीकरणादरः पदं चकार । अन्ते च शुद्ध संस्कृतमेवोपयुक्तमुपलभ्यते । एवं बौद्धशिलालेखेष्वपि शुद्धं प्राकृत क्रमेण गाथाभाषया गलहस्तितम । सापि पश्चात संस्कृतभाषया । एवं पश्चिमे भारतवर्षे नासिकादे-शीयेषु शिलालेखेषु क्रिस्तो परं तृतीयशतकाब्दपर्यन्तं गाथाभाषैव केवलमुपयुक्ता । संस्कृतं तु द्वितीयस्मिन शतकाब्दे समारब्धम । क्रिस्तोः परं षष्ठशतकाब्दादारभ्य जैनशिलालेखवर्जमन्येषु सर्वेष्वपि शिलालेखेषु प्राकृतच्छायादर्शनेऽपि प्राधान्येन संस्कृतभाषैवाहृता । एवं बौद्धग्रन्थेष्वपि क्रमेण गाथाभाषा संस्कृतभाषया निष्कासिता । अत एवोत्तरदेशीया. सर्वे बौद्धग्रन्थाः प्रायेण संस्कृतभाषामया

एवाधिगम्यन्ते । परन्तु तदीया भाषारीतिः प्राकृतशब्दबाहुल्याद् ब्राह्मणकर्तृकाणां लौकिकवैदिकग्रन्थानां भाषारीते सुदूरं विभिन्ना दृश्यते । क्रिस्तोः परं सप्तमे शतकाब्दे बौद्धानामात्मविद्याविचार-गोष्ठीषु वादप्रतिवादा संस्कृतेनैव प्रावर्तन्तेति मुक्तकण्ठं ब्रवीति हियान त्साङ् महाभागः । अन्ते जैना अपि सर्वात्मना प्राकृत-भाषाममुञ्चन्तोऽपि प्राधान्येन संस्कृतमेवाशिश्रियन्त । इत्थं मह-म्मदीयाक्रमणकाले भारतभूमौ प्रायेण संस्कृतमेकमेव ग्रान्थिकभा-षापदे व्यापारिष्ट । एवं क्रमेणात्मनः प्राक्तनीमवस्थां प्रतिपद्य-मानायां संस्कृतभाषायां द्विविधाः प्राकृतगुणास्तत्रोपसङ्क्रान्ता । तथा ह्येकतः—बहुभिः प्राकृतशब्दैः परिवर्धितः संस्कृतशब्दकोशः । अन्यतश्च—पाणिनेः पश्चात्कालेऽप्यविच्छेदेन प्रवृत्ता उदात्तादयः स्वरा गुरुलघुवर्णात्मना परिणता ॥

प्राकृतभाषाप्रशमदशायामुत्पन्नानामशोकीयपालीशिलालेखानां प्राथमिकबौद्धजैनग्रन्थानां च परीक्षया तदानीं प्राच्या प्रतीच्या चेति द्विविधा प्राकृतभाषा स्थितेत्यवगम्यते । क्रिस्त्वब्दारम्भा-त्प्रभृति सहस्रवत्सरपर्यन्ते मध्यकाले मिश्ररूपेणैव स्थिताः प्राकृत-भाषाश्चतुर्धा विभक्तुं शक्यन्ते । तत्र पश्चिमस्यां दिशि—सिन्धु-नद्यास्तीरेऽपभ्रंशः, मथुराप्रधाने डोयाबदेशे शौरसेनी चाभूदित्यव-गच्छामः । तत्र शौरसेन्याः प्रभेदाः—गौर्जरी, अवन्ती, महाराष्ट्री च । तथा पूर्वस्यां दिशि—मगधदेशप्रसिद्धा मागधी, वारणसीप्रसिद्धा अर्धमागधी चाभूताम् । संस्कृतनाटकेषु सर्वत्र

नीचपात्रैरुपयुक्तत्वादेता मध्यकालिक्य प्राकृतभाषा. संस्कृतग्रन्थ-समुदायविचारावसरेऽवश्यमनुसन्धेया भवन्ति ॥

ता एताः प्राकृतभाषाः सम्प्रति भारतवर्षे भाष्यमाणानां सर्वासामार्यभाषाणा प्रसवस्थानानि भवन्ति । तथा हि. अपभ्रंशात्—सिन्धी. प्रतीच्या पञ्जाबी काश्मीरीति भाषात्रयम. तथा शौरसेन्या.—प्राच्या पञ्जाबी पूर्वैरवन्तीशब्देन व्याहृता हिन्दी गुजरातीति भाषात्रय चोत्पन्नम । एव द्विविधाया मागध्याः—एकत्र मराठी. अपरत्र नानारूपा बङ्गभाषाश्च सम्भूता । किमतो परं महत्त्ववत्तरमितः पश्चादुत्पन्ना एताः प्राकृतभाषाः नैव संश्लिष्टभाषाकोटिप्रविष्टा किन्त्वाङ्गलेव विश्लिष्टरूपा एव । यादृशा हि विकारा लैटिनभाषात. सम्भूतासु रोमकभाषासु समुपलभ्यन्ते तादृशा एवानल्पीयांसो विकारा. प्राचीनसंस्कृतभाषातः सम्भूतास्वेतासु प्राकृतभाषासु समुपस्थिताः । न केवलमेताः प्राकृतभाषा व्यवहारार्थमेवोपयुक्ताः किन्तु ग्रान्थिकभाषापदवीमप्यारोपिता । दृश्यन्ते हि संस्कृतसाहित्यसर्वस्वोपजीविन. पुष्टाङ्गास्तत्तत्प्राकृतभाषोपनिबद्धा सुविशाला ग्रन्थसमुदाया । एवं दक्षिणापथप्रसिद्धा —तेलुगु-कर्णाटक-मलयाल-तमिलप्रभृतयो द्राविडभाषाश्चाप्यार्यभाषाभि. सुदूरमाक्रान्ता एव । तथा हि पश्यतैता संस्कृतादुपात्तैरुच्चावचै शब्दै. परिपुष्टि प्रापिता. संस्कृतसाहित्यसर्वाङ्गशोभानुकारेण सम्पादितैस्तत्तद्ग्रन्थसमुदायै. परिमण्डिताश्च विलसन्ति ॥

## ॥ द्वि ती यो ऽ ध्या यः ॥

### वैदिककालः

इह तावद्भारतवर्षीयसाहित्यारम्भप्रघट्टमारोहतां नः सम्मुखीभवति प्रायेण त्रिसहस्रवर्षदेशीयः छन्दोमयो गानयोग्यः कश्चिद् ग्रन्थसमुदायः । इण्डो—यौरोपवंशीयानां यावच्छाखाश्रितग्रन्थसमुदायानां मध्ये प्राचीनतमोऽप्यसौ विषयसौन्दर्येण भाषामाधुर्येण च्छन्दोबन्धनचातुर्येण च शिरोरत्नायमानः समुल्लसति । तदारभ्य सहस्राधिकान् वत्सरान् यावद् भारतभूमावुत्पन्ना. सर्वे ग्रन्थाः मतधर्मैकविषयका । वैदिककालस्य चरमावस्थायां निष्पन्नेषु ग्रन्थेषु साक्षात्तत्प्रतिपादनाभावेऽपि तत्रैव तेषां पर्यवसाय । अयमर्थो वैदिकव्यपदेशेनापि व्यज्यते । वेदशब्दो हि ज्ञानार्थकाद्विदधातोर्निष्पन्नः ज्ञानोपदेशपरान् ग्रन्थान् सामान्येन निर्दिशन् प्रथमं सामान्याभिधायी दृष्टः । स एव शब्दः क्रमेण ग्रन्थविशेषे निरूढः पश्चाद्विशेषार्थवाची परिणत ॥

वैदिककाले परस्परविलक्षणस्वरूपास्त्रयो रङ्गाः संलक्ष्यन्ते । तत्र प्रथमरङ्गे चतुर्णा वेदानामवतारः । तेषामादिम साहित्यसृष्ट्युपक्रमे प्रादुर्भूतः सोमसवनयजनयोः घृतार्पणस्य वा काले पठनीयः सूक्तैरुपगुम्फितः स्तोत्ररूप च्छन्दोमयश्च । चत्वरोऽमी

वेदाः तैस्तैरेवार्थं तत्तद्यज्ञक्रियार्थकतया प्रणीतानां तत्र तत्र विप्रकीर्णतया स्थितानां सूक्तानां समाहरणेन संग्रथितत्वात् संहितान्यपदेशमवापु । चत्वारोऽप्येते न केवलं भिन्नकाला किन्तु भिन्नगतयश्च । तत्र प्रधानतम. प्राचीनतमश्च पश्चात्काले सशाखोपशाख प्रसृतस्य वैदिकग्रन्थजातस्याङ्कुरायमाणः ऋग्वेदः । स च स्तोत्ररूपाभिः ऋग्भिर्घटितत्वादन्वर्थाभिधानः । ऋगित्ययं हि ऋचस्तुताविति धातोर्निष्पन्नः । सामवेदस्तु नैव स्वत प्राधान्यमर्हति । यतस्तत्र पञ्चसप्तति मन्त्रान वर्जयित्वा सर्वोऽप्यन्यो भाग. ऋग्वेदादुद्धृत्य सोमयागक्रियाक्रमानुरोधेन संयोजितः । कैश्चिद्रागविशेषैर्गीयमानः श्रोत्रानन्दमापादयन्नसौ सामवेद इत्यन्वर्थामाख्यां प्राप । सामशब्दो हि गीत्यर्थेऽपि शक्तः । तृतीयो यजुर्वेदस्तु ऋङ्मन्त्रघटितत्वादंशेन सामवेदतुलामधिरोहन्नपि प्रधानभूते कस्मिश्चिदंशे महान्तमात्मनो विसंवादमाविष्करोति । तथा हि यजुर्वेदे दत्प्रथमतया गद्यप्रस्थानमुपक्रान्तं दृश्यते । अथ च सामवेदवत्त्रापि तत्तद्यागक्रियाक्रमानुरोधेन मन्त्रा व्यवस्थापिताः । तेनायं यजुर्वेद इत्याख्यामविन्दत । यजुश्शब्दो हि यजतेर्निष्पन्नः । अत्र प्रतिपाद्यो विषयः द्वेधा निबद्धः । एकत्र केवलात्मकानि विधिवाक्यानि परं सङ्ग्रथितानि । अपरत्र तान्येव विधिवाक्यानि इतिकर्तव्यताबोधकैरर्थवादवाक्यै. सह मिश्रीकृत्य पठितानि । आदावेते त्रयो वेदाः परं प्रामाणिकत्वेनाभ्युपगता अभूवन् । अत एव ब्राह्मणादिग्रन्थेषु त्रयी विद्येति व्यवहारः ॥

चतुर्थस्तावदथर्ववेदः । तस्य प्रामाण्यं तु महता यत्नेन साधितम् । तदीयभाषाशैल्याः भिन्नत्वेन तत्र ऋग्वेदीयविषय-संवादभाजां केषाञ्चिदंशानामुपलम्भेन च तस्य ऋग्वेदादत्यन्त-मर्वाचीनता गम्यते । अत्रेदमवधेयम्—यद्यप्ययमसौ भूयसा ऋग्वे-दीयदशममण्डलादुद्धृतैश्छन्दोमयैः सूक्तैः सङ्घटितत्वादाकारतः ऋग्वेदेन समानरूपस्तथापि तत्रतिपादितानां विषयाणामत्यन्तं पुरा-तनत्वाद् अर्थतस्तदपेक्षया सुतरां विभिन्नः । ऋग्वेदो हि प्रायेण समुत्कृष्टरूपाः शिष्टदेवताः प्रस्तौति । अथर्ववेदस्तु रक्षःपिशाचा-दीनां स्तम्भनमारणाद्युपयुक्तैराभिचारिकमन्त्रैः संदृग्रथितः पामर-समुदायप्रादुर्भूतान् विचारपथातिवर्तिनः कालादुपसङ्क्रान्तानाभि-चारिकानन्धविश्वासानुपस्थापयन्नत्यन्तं विलक्षण एव । इत्थमालो-च्यमाने परस्परं विभिन्नविषयप्रतिपादकाविमौ वेदौ चतुर्णां मध्ये प्रधानभूतौ । इमौ हि सर्वानपि भारतीयेतरग्रन्थसमुदायानतीत्य ततोऽपि प्राचीनतरान् मतधर्मानुपाहरन्तौ—मतधर्मेषु तत्तत्काले परिणामविधया समुत्पन्नान् भेदप्रकारान् विमृशतां दूरदृशामत्यन्त-मुपकुरुतः ॥

एवम्प्रायैरुदन्तैः पर्यवसितो वेदनिर्माणकालाभिधानः प्रथम-रङ्गः । अथ द्वितीयो रङ्गः । नास्मिन् काले कणिकयाप्यवर्तिष्ट देवतोद्देशेन नूतनस्तोत्रनिर्माणेच्छा जनेषु । किन्तु विशुद्धज्ञानैः पूर्वपूरुषैर्दृष्टानां पुरोहितकुलेषु पितापुत्रपरम्परागतानां वेदानामध्यय-नमेव परमो धर्म इत्यवधारितम् । अवसरेऽस्मिन् वेदा पूर्वोक्तदिशा

समाहृत्य सङ्ग्रथिता शाश्वतिकीं प्रतिष्ठामविन्दन्त । नवीन-स्तोत्रनिर्माणेच्छाविच्छेदात् पुरोहितानां व्यवसायो महामखानुष्ठानो-न्मुखः समजनि । तत्फलत्वेन च सर्वतोमुखः सुतरां व्यामोह-जनकोऽलोकसामान्यः क्रियाकलापः साङ्गोपाङ्गः प्रपञ्चितः । वैदिका मन्त्राश्च तत्तद्यज्ञक्रियान्वयित्वेन व्यवस्थापिताः । तस्मिन्नेवा-न्तरे वैदिकमन्त्राणां क्रियाकलापानां च प्रत्यासन्नः कश्चिदन्यो धर्म-मार्गः पुरोहितपरम्परायामाविर्भूतः । तमिमं धर्ममार्गमध्यात्मविद्या-विषयकं प्रतिपादयन्तो ग्रन्थाः ब्रह्मसम्बन्धितया ब्राह्मणव्यपदेश-मवापुः । यावद्वेदाः सुखावगाह्याः स्थितास्तावन्नाविरभूवन् ब्राह्म-णानि । यदा च वेदानां रक्षितारः पुरोहिताः क्रमिकोपचयेन भाषाया विपर्यासात् तेषामर्थावबोधे कुण्ठितमतयोऽभूवंस्तदैतानि समपीपदन । सर्वात्मनैतानि गद्यमयानि क्वचिद्वेदा इव स्वरचिह्नै-रङ्कितानि च । इण्डो—यौरोपवंशीयगद्यसरणेः प्रथमादर्शायमान-त्वादेतानि विशेषतः स्मरणार्हाणि । सत्यमेव तेषां वाक्यसरणिरतीव क्लिष्टा परस्परमनन्विता च । अथापि साहित्यरङ्गेऽस्मिन् लाघवोत्कर्षः प्रकृष्टमनुभूयते ॥

ते च ब्राह्मणग्रन्थाः वैदिकवाक्यानामन्योन्यमैत्रीं यज्ञ-क्रियाणामङ्गाङ्गिभावं पदानां परस्परानुगतत्वेन सङ्केतितमर्थं च बोधयन्ति । तत्रोपलभ्यमानानि प्रासङ्गिकान्युपाख्यानानि हृदय-ग्राहिणः कांश्चिदाशयविशेषांश्च वर्जयित्वा नान्यो भागः साहित्य-व्यपदेशयोग्यः । यज्ञकर्मणां व्याख्यानाय प्रवृत्तास्ते तदानुगुण्येन

पदानि निब्रुवन्तस्तत्प्रसङ्गादध्यात्मविद्याजगत्सृष्टिसिद्धान्तानुपष्टम्भयन्त. पुरावृत्तानि तत्वविद्यां च प्रस्तुवन्ति । अपि चात्र पाण्डित्यावलेपकलुषाः प्रलापप्राया विविधाश्चर्चा. स्वकपोलकल्पितार्थस्थापनकाम्यया प्रवार्तिता. । नैतादृशी कापि सरणिर्भारतवर्षादन्यत्र कुत्रापि भूतपूर्वा । अथाप्ययमीदृशस्तेषां व्यवसायः सामान्यतो मतचरितचर्चकाणां परमावलम्बो भवति । विशेषतश्च भारतवर्षीयं चिरन्तनं चरितमन्विष्यताममी ग्रन्थाः प्रदीपकल्पा. कल्पन्ते ॥

एतावतोक्तेन प्रथमरङ्गद्वयाविर्भूतयोः वेदब्राह्मणयोरन्तरं सुव्यक्तमभूत । तथा चायमत्र सङ्ग्रहः—वेदाश्छन्दोवद्धाः. ब्राह्मणानि गद्यमयानि. वेदवाक्यानामार्थाः प्रकृत्यनुगताः परिपुष्टाश्च, ब्राह्मणवाक्यानां तु कृत्रिमा सङ्कुचिताश्च । वेदानां मुख्योद्देशो देवतोपाख्यानवर्णने. ब्राह्मणानां कर्मस्वरूपनिरूपणे चेत्यवधार्यम् ॥

तत्तद्वेदसम्बद्धानां ब्राह्मणग्रन्थानां प्रतिपाद्यवस्तूनि तत्तद्वेदाधिकृतानामृत्विजां कर्मभेदानुरोधेन भिद्यन्ते । तथा हि—तत्तत्क्रियासु यथायथं मन्त्राणां विनियोगेन यस्य शास्त्रघटनाधिकारस्तस्य होतृनाम्न. ऋत्विजः कर्माणि परमृग्वेदब्राह्मणान्युपदिशन्ति । एवं सामवेदब्राह्मणान्युद्गातुः यजुर्वेदब्राह्मणान्यध्वर्योश्च कर्माण्युपपादयन्ति । एतदप्यवगन्तव्यं यद्—ऋग्वेदसम्बन्धीनि ब्राह्मणानि वेदमन्त्रपरिपाटीतो भिन्नं कियाक्रममाश्रयन्ति । सामयजुस्सम्बन्धीनि तु ब्राह्मणानि तत्तद्वेदे क्रियाक्रमानुरोधेनैव मन्त्राणां सङ्ग्रथान् तत्तद्वेदमन्त्रपरिपाटीमेवानुसरन्ति । तत्र सामवेदब्राह्मणानि

न प्रत्येकं मन्त्राणामर्थाननुप्रवर्णयन्ति । यजुर्वेदब्राह्मणानि पुन प्रायशः सर्वेषामपि मन्त्राणामर्थान् सङ्ग्रहेण निरूपयन्ति ॥

ब्राह्मणग्रन्थोऽयं भारतवर्षीयसाङ्घिकचरित्रचर्चकाणामत्यन्त-मावश्यकः । अद्यत्वे हि भारतवर्षे सङ्कीर्णतया विस्तीर्णस्य वर्णजालस्य मूलभूतश्चातुर्वर्ण्यविभागस्तत्र पूर्णरूपतां प्रपन्नो दृश्यते । वेदकाल एव सर्वतो लब्धोच्चपदाः पुरोधसः कृतायां वर्णव्यवस्थायां ततोऽप्युच्चतरं पदमधिरूढाः । यथा हि भारतीयास्तथा नान्ये कदापि पौरोहित्यस्यैतादृशं महत्त्वमन्वमन्यन्त । सुप्रतिष्ठित खलु भारतीये-ष्वद्यापि कुलक्रमागतेषु पुरोहितवर्गीयेष्वेव वेदाध्ययनाधिकारः । ननु विदेशीये पुरातनजनसङ्घैः राजकुमारेषु योधाग्रणीषु वा लम्भितोऽयमीदृशो लोकोत्तरप्रकर्षः कथङ्कार भारतभूमौ पुरोहित-वर्गीयैः प्राप्त इति चेदवधेहि—आर्याणामिह प्रवेशकाले पश्चिमोत्तर-प्रान्तेषु किञ्चिदपेक्षितोऽपि समराङ्गणव्यवसायो दस्युभिरनुपद्रुतेषु समभूभागेषु प्रवेशात्परमनपेक्षितत्वात् परिक्षीणो यदा जनेष्वालस्य-मुदपीपदत् तदा पौरोहित्यवृत्ते सैषा प्रतिष्ठा समजनि । एवंविधेन व्यतिकरेण कृतविद्याः पुरोहिताः सर्वशक्तिमतां यागानां रहस्यानि स्वयं गोपायन्तो राज्ञामप्युपरि विरेजुः ॥

तानि च ब्राह्मणानि गच्छति काले पवित्रात्मनामविन्दन्त । श्रुतिकोटौ च परिगणितानि । तत पश्चादात्मविद्योपपादकानि विविक्तारण्ये पठितव्यान्यारण्यकान्युदपद्यन्त । तान्यपि क्रमेण

श्रुतिपर्वसमारोपितानि । आरण्यकोत्पत्तेरनन्तरमुपनिषदाख्या ग्रन्थाः सविशेषमात्मतत्त्वं प्रकाशयन्तः प्रादुरासन् । इयमेव ब्राह्मणरङ्गस्य पर्यवसानभूमिः । अत्रोपक्षिप्तो विश्वदेवतावाद एव क्रमेणोपबृंहितो वेदान्तरूपेण परिणतः, यः खल्वद्यापि भारतीयैस्तत्त्वविद्भिरुपलाल्यते ॥

कालेनैते वैदिकग्रन्थाः सुमहत्यां प्रामाण्यपदव्यामभिषिक्ताः । विवादास्पदे विषये श्रुतिस्मृत्योः श्रुतेरेव प्राबल्यमन्वमन्यत । न्याय्यं चैतत् । स्मृतयो हि पूर्वाचार्येभ्यः सम्प्रदायक्रमेणागतान् मतधर्मान् राजकीयधर्मांश्च संगृह्योऽर्वाचीनाः कृतयः ॥

इतस्तावद् वैदिककालस्यान्ते भवं तृतीयरङ्गं प्रविशामः । स चैष सूत्रकालः । अत्रैकत्र यज्ञक्रियागतिः अपरत्र लौकिकव्यवहारधर्मश्च सङ्ग्रहेण निरूपितः । ब्राह्मणग्रन्थाधिगतानां सम्प्रदायागतानां च सुविशालानां धर्माणां कर्मकलापानां च समग्रान् विषयान् पिण्डीकृत्योपपादनेन अध्यापनाध्ययनविषयकमतिगुरुकं भारं शिरसि धर्तुमशक्यं लघूकर्तुमेष सूत्रग्रन्थसमुदायः समुत्पन्नः । विशकलितानां विषयाणामेकीकृत्य व्यवस्थापन एव सूत्रग्रन्थानां परमोद्देशः । न तु पुनरेतेऽभिनवान् धर्मानुपदेष्टुं प्रवृत्ताः, किन्तु पूर्वैरुपवर्णितान् विषयान् करतलामलकायमानान् कर्तुमुद्यताः । तदर्थमनन्यसाधारणी संकुचिता कापि सरणिः समादृता । सूत्रमिति नाम्नैवैषां सूत्रग्रन्थानां स्वभावः प्रवृत्युद्देश-

आभिव्यज्यते । सूत्रमिति हि सीव्यतेर्निष्पन्नम् । तेषां वाक्यै-स्तोल्यमानानि संक्षिप्ततमान्यपि तन्त्रीवार्तावाक्यानि सूत्रापेक्षया गुरुतराक्षराण्यवेक्षन्ते । कतिचन सूत्राणि विवरणैकशरणां बीज गणितसरणिमनुहरन्ति । इदमनुसरन्तो हि शब्दशास्त्रकारा मात्रा-लाभं पुत्रलाभं मन्यन्ते । अस्य चानुसन्धानस्यार्थः पुत्रोत्पत्तेर्महि-मावगतौ व्यक्तीभविष्यति । पुन्नाम्नो हि नरकात् त्रायमाणस्य पिण्डदातुः पुत्रस्याभावे न कश्चित् स्वर्गसाधनक्षमः । तस्माज्जनि-मतामनिर्वचनीयो महान् प्रमोदः पुत्रलाभेन । मात्रालाभोऽपि तादृशत्वेनाभिमतः । पश्यत, सङ्ग्रहकरणे कीदृशी दृष्टिः सूत्र-काराणाम् ॥

यद्यपि तत्तद्वर्गीया सूत्रग्रन्था सर्वे प्रायेण समानरूपास्त-थापि तेषामुत्पत्तौ कालभेदा अवश्यमभ्युपगन्तव्याः । तत्राति-लघ्वक्षरसूत्रग्रन्था सुतरामर्वाचीनाः । यतो हि सूत्राणां शैली क्रमिकाभिवृध्या तादृशीं पचेलिमामवस्थां प्रपन्ना भवितुमर्हति । विमर्शोपकरणानि तावत् तेषां कालभेदनिर्णयेऽप्रभविष्णूनि दृश्यन्ते । भाषास्वारस्यानुसन्धाने तु ते सर्वे पाणिनेराचार्यस्य समकालिका. प्रतिभासन्ते । वस्तुतस्तु केचित् ततोऽतिप्राक्तना एव । इत्थं च क्रैस्तवाब्दारम्भात् पूर्वं पञ्चमशतकाब्दाद् द्वितीयशतकाब्दपर्यन्तं सूत्रग्रन्थानामाविर्भावस्य काल इति निर्णयन्तो वयं, मन्यामहे, नापभाषिण. स्मः ॥

साम्प्रदायिको वैदिकक्रियाकलापः द्वाभ्यां मार्गाभ्यामुपमग्क्रान्त. । तत्राद्य. श्रुतिमूलकः श्रौतसूत्रोपदिष्टः । यानि खलु श्रौतसूत्राणि त्रिभिस्ततोऽप्यधिकैर्वा अग्निभिराचार्यमुखेन कर्तव्यान् महायागान लक्षयन्ति । किन्तु नैतेष्वेकस्मिन्नपि ग्रन्थे तत्तद्यज्ञानां स्वरूपं साकल्येन प्रतिपादितम । तस्माद् यज्ञानां पूर्णस्वरूपावगमायान्येऽपि श्रौतसूत्रग्रन्थाः शरणीकरणीया वर्तन्ते ॥

अपरो मार्गः स्मृतिमूलको गृह्यसूत्रोपदिष्ट । यानि खलु गृह्यसूत्राणि गार्हपत्याग्निना प्रत्यहं गृहेष्वनुष्ठेयानि कर्माण्यादिशन्ति । न चैतानि कर्माण्याचार्यमुखेन कर्तव्यानि किन्तु गृहिणैव स्वयं पत्नीद्वितयेन । अत एव शब्दार्थघटनाप्रकारभेदं विषयैकदेशहानोपादानभेदं चान्तरा नान्यः कश्चिदुपलभ्यते विविधानां गृह्यसूत्रग्रन्थानामन्योन्यभेदः । सर्वेष्वपि तेषु समाना एव विषयाः प्रतिपाद्यन्ते । तत्तत्क्रियासु पठनीया मन्त्रा. परं तत्तद्गृह्यसूत्रसम्बन्धिभ्यो वेदेभ्यः समुद्धृता इत्येतावानस्ति विशेषः । यद्यप्येते गृह्यसूत्रग्रन्थाः स्वस्वशाखीयान श्रौतसूत्रग्रन्थान् परामृशन्तः स्वेषां तत्परिचयं सूचयन्ति तथापि नैतौ श्रौतगृह्यमार्गावेकीभवत. ॥

द्वितीयः सूत्रग्रन्थसमुदायो वर्णाश्रमधर्मान् व्यावहारिकधर्मांश्चानुशास्ति । स एव धर्मसूत्रग्रन्थसमुदायो नाम । सोऽपि गृह्यसूत्रवत् स्मृतिमूलक. । तेऽमी धर्मसूत्रग्रन्था. भारतवर्षीयलौकिकव्यवहाराणां मूलप्रमाणभूताः । यद्यपि धर्मशब्दो वर्णाश्रम-

धर्म-सदाचाररूपेऽर्थद्वये शक्तस्तथाप्यत्र वर्णाश्रमधर्म एव प्राधान्येन विवक्षितः । तस्मात् स एवेह भूयस्तया प्रतिपद्यते । अपि चैषां वेदैः सहैव साक्षात्सम्बन्धो दृश्यते । यतो ह्येते वेदवाक्यान्येवोदाहरन्तस्तेषामेव परमं प्रामाण्यमनुमन्यन्ते ॥

एवं सारवत्तरान् विषयानतिपरिमितैः शब्दैः संक्षिपन्तीं विकृतां क्लिष्टां च भाषासरणिमनुसरमाणा एते सूत्रग्रन्थाः साहित्यकोटौ निवेश्य विमृश्यमानाः बाढं ब्राह्मणग्रन्थेभ्योऽप्यवरं स्थानमर्हन्ति । तदीयविषयविचारणायां तु महार्घास्ते विस्मापयन्ति नश्चेतः । प्राक्तनेषु खलु ब्राह्मणादिग्रन्थेषु विषयाणामितस्ततो विप्रकीर्णत्वाद्दुर्बोधा कर्मणां गतिः । सूत्रग्रन्थेषु पुनः पुरातनैराचार्यैः यथानुष्ठितानां तत्तत्प्रकरणानामेकत्रैव सङ्गृहीतत्वेन विषयाणां व्यवस्थितत्वात् सुबोधानि कर्माणि । अतः प्रत्यक्षतो यागानुष्ठानानवलोकनेऽपि सूत्रग्रन्थपरिशीलनबलात् साङ्गोपाङ्गास्तत्तद्यागा यथावदनुष्ठातुं शक्याः । त एते सूत्रग्रन्थाः धर्मचरित्रान्वेषिणां परमोपकारमाचरन्ति । तत्रापि विशिष्य गृह्यसूत्रग्रन्था धर्मसूत्रग्रन्थाश्च वैदिककालेऽपि भारतीयानां लोकयात्रायाः निस्तुलैर्नित्यनैमित्तिकात्मकैरुच्चावचैः कर्मजालैराक्रान्तत्वं बोधयन्तः प्राक्तनीं भारतवर्षीयसङ्घस्थितिं मीमांसमानानां पुरस्तात् तत्वार्थानुपहरन्ति । ते खलु भारतवर्षीयाणां सर्वविधानामाचाराणां प्राचीनतमानि प्रमाणानि ॥

सूत्ररङ्गेऽस्मिन न केवलं धर्मकर्मोभयविषयका एव किन्त्व-न्येऽपि नानाविधा ग्रन्थास्तामेव रीतिमनुसरन्तः प्रादुर्भूताः । यद्यपि न ते साक्षाद्धर्मप्रतिपादकास्तथापि धर्ममूलका एव स्वाध्या-यसम्बन्धित्वात्तेषाम् । तथा हि भाषाविपर्यासेन हेतुना वेदाध्ययना-र्थज्ञानयोः क्लेशैकसाध्यतां दृष्ट्वा तादृशक्लेशपरिजिहीर्षया स्वाध्याय-निष्णातैरेतद्वर्गीयाः सूत्रग्रन्थाः प्रणीता । अतस्ते सूत्रग्रन्थाः प्राधान्येन वेदमन्त्राणामध्ययनप्रकारानर्थविशेषांश्च निरूपयन्ति । तेष्वन्यतमः सूत्रग्रन्थसमुदाय. प्रातिशाख्यसमाख्य संहितादशायां छन्दस्स्वरवर्णोच्चारणादिषु जायमानान् विकारविशेषान् प्रतिपादयन् प्राधान्येन स्वरविद्यामाश्रित । तत्र निपुणतर निरूपिता एव स्वर-शास्त्रस्य विषयाः पाश्चात्यैराधुनिकैः स्वरशास्त्रविद्भिरुपबृंहिताः । इतोऽप्यतितरां माननीयः सूत्रग्रन्थसमुदायो व्याकरणविषयक. । स च शब्दव्युत्पत्तिप्रदर्शनकौशलेन भारतीयेतरान् व्याकरणमार्गा-नतिशेते । तत्र प्राक्तन्यः कृतयो मार्गमेनं मनागेव स्पृशन्ति । पाणिनेराचार्यस्य कृतिरष्टाध्यायी तु सर्वाङ्गीणशब्दव्युत्पादनेन सर्वेषां व्याकरणग्रन्थानां धुरि प्रतिष्ठामविन्दत । सूत्रकालस्य मध्यभागे समुत्पन्नोऽयमाचार्यः पाणिनिरात्मना लौकिकभाषारम्भ-सीमानं परिकल्पयतीत्यवगन्तव्यम् । यतो हि तस्य कालादारभ्य समुत्पन्ना सर्वे ग्रन्थास्तदनुशिष्टैर्नियमैरनुगताः सर्वात्मना लौकिकसंस्कृतभाषामया दृश्यन्ते ॥

अपिचास्मिन् सूत्ररङ्गे पुनर्विकारापत्तेर्वेदानां रक्षार्थमन्या काचिन् सूत्रप्राया कृतिः सम्पादिता । सैवेयमनुक्रमणिका नाम । तत्र प्रत्येकं सूक्तानामादिमाः शब्दाः, तेषां कर्तारः, तदुद्दिष्टा देवताः, तत्तत्सूक्तानां मन्त्रसङ्ख्याः, तद्घटितानां च्छन्दसां लक्षणानि च निर्दिश्यन्ते । तेषामन्यतमः कश्चित् ग्रन्थो नानाविधान् विषयान् क्रोडीकुर्वन् न केवलं सूक्तानां न च केवलं मन्त्राणां नापि केवलं शब्दाना किन्तु ऋग्वेदान्तर्गतानामक्षराणामपि सङ्ख्याविशेषानियत्तया निर्दिशति ॥

एवं वेदकालाश्रितस्य रङ्गत्रयस्य स्वरूपं सामान्यतो निरूपितवन्तो वयमितःपरं तत्प्रविष्टानि पृथग्वस्तून्यधिकृत्य गाढतरं चर्चिष्यामः ॥

॥ तृ ती यो ऽ ध्या यः ॥

## ऋग्वेदः

भारतवर्षीयसाहित्योदयात् पूर्वं नातिभास्वरे काले प्रतीच्य-देशादुद्वेलितस्यार्यजनसमुदायाब्धेः केचिदूर्मयो हिमाद्रिकूटान्तराल-वर्तिना दुर्गमार्गेणाभिद्रवन्तो भारतवर्षं प्राविक्षन्निति ह स्माहुश्चरित्र-कुशलाः । कृतप्रवेशैस्तैः प्राच्यकाबूलस्थान—पञ्जाबाख्यौ सिन्धु-नदीतीरदेशावधिवसद्भिः काचिच्छन्दोमयी कृतिः समपादि । येषां भाषाविज्ञानवैभवं च क्रमेण पश्चात्काले भारतभूमौ सर्वत्र प्रसरति स्म । या खलु तेषामभिनवा कृतिः सैव पारम्पर्योपदेशप्राप्ता ऋग्वेदसंहिता नाम । तत्र सूक्तानां ग्रथने समाश्रित क्रमो न सामयजुषोरिव क्रियाक्रमनिबन्धनः किन्तु सयुक्तिकश्चारित्रिकश्च । यतो हि पितृपैतामहानां सूक्तानां क्षेममनुध्यायन्तो महर्षयस्तत इतो विक्षिप्तानि सूक्तानि सर्वाण्येकत्र सङ्ग्रथ्य तेषां विकारो-त्सादाभ्यां परिरक्षणमात्रमीहमानास्तत्रैव दत्तावधाना बभूवुः । नाभूत्तेषां क्रियानुगुण्येन मन्त्रव्यवस्थापने यत्न. । अद्योपलभ्यमा-नशाकलपाठानुसारेण तद्गतानां सूक्तानां सङ्ख्या—१०१७, अष्टम-मण्डले खिलांशत्वेनोपलभ्यमानानां एकादशानां वालखिल्यसूक्तानां योगे—१०२८ च भवति । सूक्तान्येतानि दशभिर्मण्डलैर्विभज्यो-पनिबद्धानि । अत्र प्रतिमण्डलं विभिन्नसङ्ख्याकानि सूक्तानि सङ्ग-

टितानि । प्रथमदशमयोः परं समानसङ्ख्याकान्युपलभ्यन्ते । तान्येतानि दशमण्डलीसूक्तानि शिष्यमाणहोमरग्रन्थेन तुल्यपरिमाणानि भवन्ति ।

यद्यपीमानि मण्डलानि मिथो विजातीयान्येव तथाप्याद्वितीयाद्यासप्तम षण्मण्डलानि किञ्चित्साजात्यं भजन्ति । तथाहि तावत्—षण्णामेषामेकैकमपि मण्डलमेकैकगोत्रीयाणामृषीणां कृतिरिति चिरन्तनैर्वचनैः आन्तरैर्लिङ्गैश्चावधार्यते । तानीमानि षण्मण्डलानि तत्तद्गोत्रीयैरेव पुरुषैरनुपूरुषं पृथगात्मतया चिरकालं परिरक्षितानि पश्चादेकीकृतानि । एवमेकैकगोत्रसम्बन्धाद् गोत्रमण्डलत्वेन व्यपदिश्यमानेष्वेतेषु मण्डलेषु मण्डलान्तरव्यतिरिक्तया रीत्या सूक्तानि ग्रथितानि । प्रथमाष्टमदशमानां तावदेकैकस्यापि मण्डलस्य नैकगोत्रीया बह्वो द्रष्टार । दृश्यन्तेह्यत्र मण्डलत्रयेऽपि तत्तदृषिसम्बन्धानुरोधेन विभज्य विन्यस्ताः शतार्चिनादयो बह्व सूक्तसमुच्चया. । नवममण्डलसंविधानं तु न ऋषिसम्बन्धनिबन्धनं किन्तु तद्गतानां सूक्तानां सर्वेषां सोमदेवताकत्वाद् देवतासम्बन्धनिबन्धनम् । सूक्तसमुच्चयाश्चात्र तत्तच्छन्दोजात्यनुरोधेन सम्पादिताः । यावन्ति हि यद्यज्जातीयकच्छन्दोबद्धानि सूक्तानि तानि सर्वाण्यपि तत्तज्जात्यनुरोधेन पृथक् पृथक् समुच्चितानि । गोत्रमण्डलेषु पुनर्देवतासम्बन्धानुरोधिन सूक्तसमुच्चयाः ॥

अपि चैषां गोत्रमण्डलानां सङ्घटनौचित्ये विचार्यमाणे—यदि तत्र केषाञ्चित् सूक्तानां प्रक्षिप्तत्वं सम्मन्यते तर्हि गोत्रमण्डलेषु यथोत्तरमधिकाधिकसङ्ख्यानां सूक्तानां सम्भवेन सन्दृश्यते क्रमिकः स्थूलभावः। एवमन्यादृशेन घटनाविशेषेण पूर्वोक्तरीत्या गोत्रसम्बन्धसाम्येन सूक्तग्रथनसरणिसारूप्येण च गोत्रमण्डलान्येव ऋग्वेदस्य मूलभूतो भागः, मण्डलान्तराणि तु पश्चात्काले संयोजितानीति शक्यवचनम्। तत्र तावत्—प्रथममण्डलस्योत्तरार्धात्मकाः क्षोदीयांसो नवानुवाकाः विभिन्नद्रष्टृकसूक्तसमुच्चयघटिता अप्यवान्तरविभागसारूप्याद्गोत्रमण्डलानामग्रे संयोजितास्तर्क्यन्ते ॥

यत्सत्यमष्टममण्डलीयसूक्तेषु गोत्रमण्डलीयसूक्तवदुपलभ्यन्त एवान्योन्यसम्बन्धाः। दृश्यते हि गोत्रमण्डलवदत्राप्यामूलाग्रं समानानुपूर्वीकाणां वाक्यैकदेशानां चरणानां च प्रत्यावृत्तिः। अथापि नैतद्गोत्रमण्डलत्वेन गणनामर्हति। यतो हि नैकगोत्रीया अस्य द्रष्टारः। नन्वेतदीयद्रष्टॄणां मध्ये कण्वगोत्रीयाणां प्राधान्यात् प्रधानव्यपदेशन्यायेनास्य एकगोत्रीयद्रष्टृकत्वमव्याहतमिति चेदस्तु काममभ्युपगच्छामः। अथाप्यशक्यमेवास्य गोत्रमण्डलत्वेन परिगणनम्। यतो ह्येतदीया विलक्षणा सूक्तग्रथनरीतिरस्य गोत्रमण्डलव्यतिरिक्तरूपत्वमावेदयति। अपि चात्र पूर्वमण्डलापेक्षयाऽल्पीयस्याः सूक्तसङ्ख्यायाः दर्शनमप्यस्मदुक्तमेवार्थं समर्थयति ॥

प्रथममण्डलस्य पूर्वार्धात्मकानि पञ्चाशत् सूक्तानि स्पष्टमेवा-ष्टमेन मण्डलेन साधर्म्यं भजन्ति । तथाहि—तेषु पञ्चाशति सूक्तेष्वर्धाधिको भागः कण्वगोत्रीयैर्दृष्टः । अष्टमे दृष्टाः कण्वगो-त्रीयोपज्ञाता गानानुकूल्याः केचिच्छन्दोविशेषाः पूर्वार्धेऽत्र प्रयुक्ताः । अपि चात्रान्यत्राप्युपलभ्यन्ते समानार्थकानि समानरूपाणि च बहूनि वाक्यानि । एवम्भूतेऽपि वस्तुनि—कतरोऽनयोः प्राचीनतरो भागः ? कस्माच्च तथासन्निकृष्टतरसम्बन्धशालिनोरनयोः दूरान्तरे विश्लिष्टतया सन्निवेश ? इत्येतद्दुरुपपादम् । मन्यामहे, भिन्न-कालिकत्वात् कण्वगोत्रीयशाखाद्वयोत्पन्नत्वाद्वा तौ तथा सान्निवे-शितौ स्याताम् ॥

नवममण्डलं तावदष्टानां मण्डलानां निष्पत्तेः परं सङ्घटित-मित्यसन्देहम् । वस्तुतश्च तेषां निष्पत्तिरेवास्योत्पत्तौ हेतुरभूत् । तथाहि—एतद्गतानि सोमपवमानसूक्तानि सन्त्वैकदेशप्रत्यावृत्यादि-साम्येन गोत्रमण्डलद्रष्टॄणामेव मध्ये प्रादुर्भूतान्यवधार्यन्ते । तानि च कस्यापि हेतोर्गोत्रमण्डलेष्वलब्धप्रवेशानि विक्षिप्ततया स्थितानि पश्चात्काले समुच्चित्य मण्डलान्तरत्वेन निबद्धानीत्युत्पश्यामः । अपि चास्य प्रथमाष्टमगण्डलाभ्यामपि भूयस्संवाददर्शनात् ततोऽप्य-र्वाचीनता व्यक्तैव । एतेनैतानि पवमानसूक्तान्यर्वाक्कालोत्पन्नानीति न भ्रमितव्यम् । अत्र हि यद्यपि कतिपयानि सूक्तानि दशम-मण्डलसमकालिकानि सम्भवन्ति तथापि भूयान् भागो वैदिकसा-हित्यारम्भकाल एवाविर्भूतः । यतो ह्येतदुपवर्ण्यमाना बहवो विषया

अवस्तासंवादं भजन्ति । तथा भूयांसः क्रियाविशेषाश्च इण्डो-ऐरेणियकालिकाः । नवममण्डलीयानामेषां सूक्तानामुत्पन्नौ काल-भेदाः सम्भवन्तोऽपि विमर्शोपकरणानामपर्याप्तत्वादद्यत्वे दुर्बोधा एव ॥

इतः किञ्चिद्दशममण्डलस्योत्पत्तिमधिकृत्य विचारयामः । तत्र तावन्न केवलमिदं मण्डलमेव पश्चात्काले विरचितं किन्त्वेत-दन्तर्गतानि सूक्तान्यपि पूर्वेषां नवानां मण्डलानां निष्पत्तेः परमा-विर्भूतानीति निश्चप्रचम् । यतो ह्येतदीयानां सूक्तानां द्रष्टारो नव-मण्डलीपरिशीलनोपचितविज्ञानाः स्वेषां तत्परिचयं पदे पदे व्यञ्जयन्ति । तथाहि—अत्र विंशादारभ्य षड्विंशपर्यन्तः षट्सू-क्तात्मको भागः 'अग्निमीळे' इतिऋग्वेदीय प्रथममन्त्रैकदेशेनारब्धः । तेन हि तदुत्पत्तिकाले प्राथमिकानि नव मण्डलानि परिनिष्ठितान्यभू-वन्निति शक्यमेवाभ्यूहितुम् । अपि चास्य सोममण्डलादुत्तरत्र संयोजनेन प्रथममण्डलसमानसङ्ख्यानां सूक्तानां संग्रथनेन च मण्डल-स्यास्य परिशिष्टसूक्तसमुदायात्मकत्वं बोध्यते । एषां सूक्तानामिह सङ्-ग्रथने समानकालिकत्वमेव सम्बन्धः । यतो हि मण्डलमिदमर्वाचीनैः सूक्तैः सम्पादितम् । अथापि तावदत्रत्यानि परिशिष्टसूक्तानि पूर्वमण्डलगतेभ्यः खिलांशेभ्यः प्राचीनतराण्येव ॥

अपि चास्य दशममण्डलस्य विषये स्वरूपे च सम्यग्वि-भाव्यमानेऽस्य अर्वाचीनतासाधकानि बहूनि लिङ्गान्युपतिष्ठन्ते ।

तत्र प्रथमतो देवताख्यानं विमृशामः—अत्र हि पुरातन्यः काश्चि-द्देवताः अर्वाचा मन्वकृतां कल्पनाकोलाहलेषु निलीनाः निजपदात् प्रच्यवमानाः संलक्ष्यन्ते । विलुप्ताश्च काश्चिदुषःप्रभृतयो देवताः । प्रधानतमाः केचिदिन्द्राग्न्यादयः परं स्वस्थानमाधितिष्ठन्ति । विश्वे-देवास्तु समुत्कृष्टां पदवीमारोपिता बहुशः स्तूयन्ते । अन्या काचिदभूतपूर्वा रीतिर्मण्डलेऽस्मिन्नैदम्प्राथम्येन समारब्धा । तथा हि—केवलगुणात्मकानां भक्तिक्रोधादीनां देवतात्वोपचारः अत्रैव प्रथमारब्धः । अपि चात्रोपवर्ण्यमानाः तत्वविद्या—जगत्सृष्टि—विवाह—प्रेतसंस्कार—सम्मोहनाकर्षणादयो विषयाः न केवलमस्य अर्वाचीनतामेव किन्तु विलक्षणरूपतामप्यावेदयन्ति ॥

एवं भाषास्वरूपविचारेऽपि मण्डलमिदमर्वाचीनमिति व्यक्तीभवति । एतदीया हि भाषासरणिः पूर्वावस्थां परित्यज्य विकारोन्मुखीभूता दृश्यते । तथाहि—अव्यवहितयोर्द्वयोः स्वरयोः असन्धिस्वभावोऽत्र प्रक्षीणप्रायः । स्वरसन्धयः सर्वत्र सम्पादिताः । अद्यत्वे लौकिकसंस्कृतग्रन्थेषु प्रसिद्धो रलयोरभेद-स्तत्रारब्धः । 'आसस्' इत्ययं प्रथमाबहुवचनप्रत्ययो मण्डलेऽस्मिन् न कुत्राप्युपयुक्तः । एवं शब्दकोशेऽपि महान् भेदो दृश्यते । प्राक्तना बहवः शब्दाः प्रनष्टाः । नूतनाः केचित् प्रविष्टाः । 'सीम्' इत्ययं निपातो मण्डलान्तरेषु पञ्चाशत्कृत्वः प्रयुक्तो दशमेऽस्मिन् सकृदेवोपयुक्तः । किञ्च लौकिकसंस्कृते प्रसिद्धाः लभ्-काल-

ग्वं-लक्ष्मीप्रभृतयः शब्दाः ऋग्वेदे दशममण्डले केवलमुपलभ्यन्ते । अथापि केचित् प्राचीनाश्चापि प्रयोगाः सुलभा एव ॥

इत्थं च मण्डलमिदमर्वाक्कालायोजितमित्यविवादः । पूर्वमण्डलेष्वपि कतिपयानि सूक्तान्यर्वाचीनानि भवन्तीति युक्ततरैः कारणैः साधितमन्यैर्विमर्शकैः । तानि च त्रिषु पञ्चसु वा भिन्नकालेषु निर्मितानीति सोपष्टम्भमुपन्यस्तं परैः । वस्तुतस्तु पूर्वमण्डलीयसूक्तानामवान्तरकालभेदनिर्णये विमर्शोपकरणान्यकृतार्थानि दृश्यन्ते । इदं तावदवधारणीयं यत्—सूक्तानां संग्रथनेन मण्डलनिष्पत्तेः पश्चात्कालिकत्वमात्रेण सूक्तानामुत्पत्तेः पश्चात्कालिकत्वं न सिध्यतीति ॥

बहूनि वत्सराणां शतकान्यपेक्षितान्यभूवन् समग्राणामृग्वेदसूक्तानामुत्पत्तौ । अपि च भारतीयानामैरेणियेभ्यो विश्लेषात् परम् ऋग्वेदमन्त्राणामुत्पत्तेः पूर्वं च मध्यपातिनि नातिदीर्घे कालेऽनभिज्ञेयरूपा. केचिन्मन्त्रा. स्थिताः सम्भाव्यन्ते । ये खलु कालवशादुत्सन्नाः । तेषां रीतिरेव पश्चादभिवृद्धा ऋग्वेदे समाश्रिता । अत एव ऋग्वेदद्रष्टारो मुनयः स्वयं येषां मार्गः समनुक्रान्तः येषां च मन्त्राः समुद्दिधीर्षिता. तेषां पूर्वपूरुषाणां नामानि निर्दिशन्ति, पुरा कल्पीयान् मन्त्रानधिकृत्य व्याहरन्ति च । भाषारीतिस्तावद् दशमवर्जमितरेषां मण्डलानामवान्तरकालभेदनिर्णीतौ नैव मात्रयाप्युपकरोति । यतो हि कर्तृभेदसद्भावेऽपि भाषा तावत् प्रायेण सर्वेषु सूक्तेषु समानरूपैव व्यापारिता ॥

यद्यपि तेषां शैल्यां कल्पनासरणौ कविताशक्तौ च भेदाव-गमः सुलभस्तथापि तेषां भाषारीतौ न कश्चिद्भेदः प्रतिभासते । अथापि तावत् सूक्तघटना-छन्दोबन्धन-विषयोपवर्णनस्वभावविशे-षोपलक्षितायाः भाषायाः स्वरूपे सूक्ष्मदृशा समीक्ष्यमाणे तदीया-वान्तरकालभेदप्रकाशकान्यामाद्येरन् कतिपयानि लिङ्गानि ॥

यद्यपि तत्कालीनतत्वनिर्णयाय तालपत्रलेखानां साह्यमस-म्भाव्यमेव तथापि ऋग्वेदतत्वनिर्णयाय पर्याप्नुवन्तः समुपलभ्यन्त एव प्रायेण द्विसहस्रवर्षदेशीयाः पाठभेदाः । अवलोक्यन्तामन्ये वेदा—ये खलु भूयसा ऋग्वेदादुद्धृतैः सूक्तैर्मन्त्रैर्मन्त्रपादैश्च सम्मिश्रिताः । सामान्यतो ग्रन्थान्तरविमर्शे यथा तालपत्रलेखा-स्तथैव ऋग्वेदविमर्शेऽन्ये वेदा बहूपकुर्वन्ति । यास्कनिरुक्तात् प्रातिशाख्येभ्यश्च प्राचीनतरैर्वेदान्तरोपस्थापितैरेतैः पाठैः सह परम्प-राप्राप्तमृग्वेदपाठं परीक्षमाणास्तत्वार्थं वेत्स्यामः ॥

तथा हि वेदान्तरीयपाठानामनेन सह तोलनायां क्वचित् क्वचिद्विरलतया पाठभेददर्शनेऽपि ऋग्वेदोऽयमितरेषां त्रयाणां वेदाना-मुत्पत्तिकालेष्वेवंविध एवाभूत्, न त्वस्य कदापि पाठान्तराण्यभूव-न्निति पर्यवस्यति । यश्च खलूपलभ्यते वेदान्तरीयपाठानामस्य चान्योन्यभेदः सोऽप्यत्यल्प एव । इत्थमवलोक्यमाने वैदिकग्रन्थ-शेखरायमाणः ऋग्वेदोऽयमादितः प्रभृति महतावधानेन विकारानु-गमात् संरक्षितः सर्वकालमनन्यरूप एवावर्त्तिष्टेति व्यक्तीभवति ॥

युक्तं चैतत् यद्—अन्येषां वेदानां कर्मकलापानां चोत्पत्तेः पूर्वमनूचानपरम्परागतस्य तर्कैकवेद्योत्पत्तिचरितस्य कस्यचित् पुण्यग्रन्थस्य महतादरेण परिरक्षणं नाम । न चानन्तरोत्पन्नेषु सामादिवेदेषु जनानां तादृशी प्रतिपत्तिरभूत् । यतो हि सामादयो वेदाः नूतनाविर्भूतयज्ञक्रियानुवृत्त्यौपयिकतया यथापेक्षमृग्वेदादुद्धृतैः अभिनवकृतैश्च सूक्तैरुपकल्पिताः । तस्मादेते वेदान्तरद्रष्टारः परमर्षयः स्वदृष्टसामवेदाद्यपेक्षया प्राचीनं परम्पराधिगतमृग्वेदमादरातिशयेन पर्यपालयन् । न्याय्यं चैतत् । यतो हि यादृशी जनानां पुरातने वस्तुनि प्रतिपत्तिः न तादृशी क्वापि नूतने वस्तुन्याविरस्ति ॥

विमृश्यमाने च वस्तुतत्वे ऋग्वेदोऽयं द्वयोः कालयो. द्विविधामवस्थामनुभवन् संलक्ष्यते । तथा हि—अयं वेदान्तराणामुत्पत्ते. पूर्वमसांहिताङ्गश्चिरकालमसंहितारूपेण स्थितः । ततः पश्चाद् गच्छति काले शब्दविद्यानियमैः संहिताङ्गः संहितारूपेण परिणतः । तथा हि—आविर्भावकालादारभ्य केवलमनूचानपथेनागतोऽयं संहिताकाले पदान्त्यवर्णविकारैः स्वरूपभेदं प्रापितः । अतिदवयिसः कालात् परम्पराप्राप्तेषु ग्रन्थसमुदायेषु सम्भाव्यमानो भाषाविपर्यासः ऋग्वेदेऽप्युपनतः । एवं च यद्यप्यनपलपनीयाः केचिदल्पीयांसः शब्ददोषाः पुरैव परापतितास्तथापि संहिताश्रितविकारोत्पत्तेः पूर्वं प्रथमावस्थायामयमृग्वेदः महतावधानेन यथास्थितरूप एव संरक्षितोऽभूत् । यत्सत्यं संहितापाठो मन्त्रकृतां पाठात् परश्शतान् भेदान् प्रकटीकरोति । परन्तु नैते भेदाः शब्दान्यत्व-

कृताः । न खलु कोऽत्र साधुशब्दः सुम्नं वा द्युम्नं वेत्येवंरूपः शब्दसन्देहो जायते । तर्हि किन्निमित्तका इमे भेदाः? श्रूयताम्—एते भेदाः प्राधान्येन लौकिकसंस्कृतस्थितानां सन्धिनियमानां सञ्चारणेन समुत्पन्नाः । तथा हि प्रथमं 'तुवं हि अग्ने' इत्येवंरूपेण स्थितः पश्चात् 'त्वंह्यग्ने' इत्येवमात्मना परिणतः । सन्धिनिमित्तकोऽयमीदृशो विकारः कश्चित्कः कचिदसङ्गतश्च श्रोत्रमाधुर्यसम्पादनेच्छया प्रवर्त्तितोऽयं सन्धिनियमश्छन्दोलक्षणमनुगृह्णाति । एवं निष्पादितेऽपि संहितापाठे शक्यमेवैतदीयं पूर्वरूपं प्रत्यभिज्ञातुम । अपि चास्मिन् संहितापाठे क्षोदीयांसः प्राक्तनाः शब्ददोषाः स्वरभेदाः वैकल्पिका रूपभेदाश्च रक्षिताः । यद्यपि ते सुखापनेया अभूवंस्तथापि नापनीताः । एवमादयो विशेषाश्च प्रथमावस्थायामपि महतावधानेन ऋग्वेदस्य प्रमादात् संरक्षितत्वे गमकान्तराणि । इत्थं च प्रथमावस्थोपस्थितान् क्षोदीयसः शब्ददोषान् द्वितीयावस्थाप्रविष्टान् सन्धिनिमित्तकान् विकारांश्च वर्जयित्वा सर्वेष्वन्येषु विषयेष्वेष ऋग्वेदः पूर्वकालादारभ्य परम्परानुक्रमेणैकरूपतया परिरक्षितः लोकोत्तरामात्मनः परिशुद्धिं बोधयति ॥

तत्र तावत् ब्राह्मणग्रन्थेषु दृश्यमानानाम् ऋग्वेदविषयकविचाराणामनुसन्धाने ऋग्वेदपाठोऽयं ब्राह्मणग्रन्थानामुत्पत्तिकाले यजुर्वेदीयगद्यभागापेक्षया सविशेषं प्रतिष्ठितोऽभूदित्यवधार्यते । यतो हि शतपथब्राह्मणे यजुर्वेदवाक्यानामंशतः पाठभेदसहत्वमभ्युपेत्य

ऋङ्मन्त्राणां तत्सहत्वसम्भावनामात्रमपि कैश्चिदाचार्यैरुपक्षिप्तं निराक्रियते । किञ्च केषुचिद् ब्राह्मणग्रन्थेषु केषाञ्चित् सूक्तानां मन्त्रसङ्ख्यास्तत्र तत्रेयत्तया निर्दिश्यमानाः साम्प्रतिकमृग्वेदपाठमनुवर्तन्ते । ननु केषुचिद् ब्राह्मणग्रन्थेषु ऋङ्मन्त्राणां केषाञ्चित् परित्यागेन केषाञ्चित् स्थानव्यत्ययेन च पाठभेदो दृश्यते । सोऽयं भेदस्तत्र मन्त्राणामृग्वेदीयपाठान्तरादुद्धृतत्वमन्तरा नोपपद्येत । एवं च तस्मिन् काले ऋग्वेदस्याप्यनुमत एवाभूत् पाठभेद इत्यनुमीयत इति चेदत्रोच्यते—सम्प्रत्युपलभ्यमानादेतस्मादेव ऋग्वेदपाठाद् यज्ञापेक्षितमन्त्रमात्रस्योद्धरणेन, उद्धृतानां च मन्त्राणां क्रियाक्रमानुरोधाय विभिन्नगत्या सन्निवेशेन च तादृशभेदोपपत्तौ तत्र मन्त्राणामृग्वेदीयपाठान्तरादुद्धृतत्वकल्पनमयुक्तमेव, तादृशपाठान्तरकल्पनायां मानाभावादित्यवधेयम् ॥

तथा सूत्रग्रन्थेष्वपि पाठभेदं प्रापितत्वेनोपलभ्यमानानामृङ्मन्त्राणां पाठान्तरमूलकत्वं न सम्भवति । किन्तु नूतनक्रियापरिभाषणार्थं तेषां तथा संयोजनमित्यवगन्तव्यम् । वस्तुतश्च सर्वे सूत्रग्रन्थाः सम्प्रत्युपलभ्यमानमेव ऋग्वेदपाठं सर्वत्राप्यनुसरन्ति । विशेषतस्तत्र शाङ्खायनसूत्रकथिताः सूक्तस्यैकस्य मन्त्राणां स्थाननियमाः तत्तत्सूक्तसमुच्चयेषु स्थितानां मन्त्राणां सङ्ख्याविशेषाश्च सम्प्रत्युपलभ्यमानमृग्वेदपाठं नोल्लङ्घन्ते ॥

इतस्तावन्नियमशतनियन्त्रिताङ्गः संहितापाठः कदोत्पन्न इति विचारयामः । तत्र तावद् ब्राह्मणग्रन्थेषु तत्तत्पदगतानामक्षराणां परिगणनं कृतमुपलभ्यते । तच्चात्र केषाञ्चिद्वर्णानां सन्धिनिमित्त-काल्लोपात् संहितापाठेन विसंवदति । अपि च प्राचीनेषु ब्राह्मण-ग्रन्थेषु न कचिदपि वर्णविकारविषयिणी वार्तापि प्रस्तूयते । अतश्च ब्राह्मणग्रन्थोत्पत्तिपरिसमाप्ति यावन्नायं वेदः संहितात्मतां प्रापद्यतेति व्यक्तम् । ब्राह्मणग्रन्थानुबन्धात्मकानामारण्यकानामुपनिषदां च गतिर्न तादृशी । अत्र हि न केवलं तत्तत्सन्धिविशेषाणां वैयाकरणैः परिकल्पिताः संज्ञाविशेषा एव किन्तु वैदिकसंहितोपस्थापिताः सर्वविधा वर्णविकाराश्च सविशेषं प्रदिष्टाः । किञ्चात्र शाकल्यमा-ण्डूक्यप्रमुखाः कतिपये शब्दविद्याविद्वांसोऽपि निर्दिष्टाः । तानी-मान्यारण्यकान्युपनिषदश्च ब्राह्मणग्रन्थानां निष्पत्तेः परं यास्कनिरु-क्तप्रातिशाख्यादीनामुत्पत्तेः पूर्वं च मध्यपातिनि काले प्रादुर्भूतानि । तस्मात् संहितापाठोऽपि तस्मिन्नेव काले तथा च क्रिस्तोः पूर्व षष्ठे शतकाब्दे समुत्पन्न इति शक्यमभ्युपगन्तुम् ॥

निष्पन्नप्राये च संहितापाठे तादृशं दृढसहितं तं भूयोऽपि शक्यसम्भवाभ्यां विकारोत्सादाभ्यां परित्रातुमलोकसामान्याः पूर्वो-पायाः समपादिषत । वेदानां रक्षणमेव तेषां परमं प्रयोजनम् । तत्र प्रथमसम्पादितः पूर्वोपायः पदपाठः । यः खलु सन्धिनियमैः संहितानि पदानि च्छित्वा संहितापाठस्य प्राग्रूपं प्रदर्शयति । नैष पदपाठः संहितापाठसमकालिकः । अयमर्थः पदपाठकृतादप-

व्याख्यानादवगम्यते । अथाप्ययं संहितापाठनिष्पत्तेः परमचिरेणै-वोत्पन्नः । यतोह्ययमैतरेयारण्यककृतः शाकल्याचार्यस्य परिचितो दृश्यते । य खलु निरुक्ते निर्दिश्यमानो यास्काचार्यात् पदपाठ-मवष्टभ्य प्रवृत्तस्य ऋग्वेदप्रातिशाख्यस्य कर्तुः शौनकाचार्याच्च प्राचीनो विभाव्यते ॥

ऋग्वेदीयमूलांशप्रक्षिप्तांशयोर्विवेचने पदपाठस्तत्त्वनिकषग्रा-वायते । तथा हि—पदपाठे समुपलभ्यन्तेऽविभक्तपदाः षण्मन्त्रा. । न तान् शाकल्याचार्यो मूलांशत्वेनाभ्युपैतीति व्यक्तमेव । आन्तर-लक्ष्यपरीक्षयाप्ययमर्थो निर्धारितः । त एते षण्मन्त्राः शाकल्याचार्येण मूलांशतया निर्ज्ञातानां सूक्तानां सङ्ग्रथनात् परं पदपाठे मन्त्ररूपे-णाप्यलब्धावकाशानां खिलसमाख्यानां सूक्तानां संयोजनात् पूर्वं च कस्मिंश्चिदान्तरालिके काले तत्र प्रक्षिप्ताः सम्भाव्यन्ते ॥

अन्य कश्चिदुपाय. संहितापाठस्य रक्षार्थमुत्पन्नः क्रमपाठ. । अयमप्यैतरेयारण्यककृतः परिचितत्वात् पदपाठ इव प्राचीन एव । क्रमपाठेऽस्मिन् पदपाठगतमेकैकमपि पदं पूर्वोत्तरपदाभ्यां सङ्गतं द्विरुच्चार्यते । तथा हि—'अग्निं ईळे, ईळे पुरोहितं, पुरोहितं यज्ञस्य, यज्ञस्य देवं, देवं ऋत्विजम्' इत्येवंविधः क्रमपाठ. । अपरः कश्चित् पूर्वोपायो जटापाठः । क्रमपाठमूलकोऽयमेकैकस्य पदयु-गलस्य त्रिरुच्चारणं सम्पादयति । तत्र द्वितीयावृत्तौ पदयोः प्राति-लोम्येनोच्चारणम् । तथा च—अग्निं ईळे, ईळे अग्निं, अग्निं ईळे;

ईळे पुरोहितं पुरोहित ईळे, ईळे पुरोहितं, पुरोहितं यज्ञस्य यज्ञस्य पुरोहितं. पुरोहितं यज्ञस्य, यज्ञस्य देवं, देव यज्ञस्य, यज्ञस्य देवं, देवं ऋत्विजं ऋत्विजं देव देव ऋत्विजम्, इत्येवंविधो जटापाठः। चतुर्थ पूर्वोपायो घनपाठ । तत्र सङ्कुलीभावः परां कोटि-मारोहति । अथ तस्य पाठक्रमः—अग्नि ईळे ईळे अग्नि अग्नि ईळे पुरोहितं पुरोहित ईळे अग्नि अग्नि ईळे पुरोहितं. ईळे पुरोहितं पुरोहितं ईळे ईळे पुरोहितं यज्ञस्य यज्ञस्य पुरोहितं ईळे ईळे पुरोहित यज्ञस्य पुरोहितं यज्ञस्य यज्ञस्य पुरोहितं पुरोहितं यज्ञस्य देवं देवं यज्ञस्य पुरोहितं पुरोहितं यज्ञस्य देवं. यज्ञस्य देवं देवं यज्ञस्य यज्ञस्य देवं ऋत्विजं ऋत्विजं देवं यज्ञस्य यज्ञस्य देवं ऋत्विजम्, इति ॥

प्रातिशाख्यान्यपि संहितापाठस्य रक्षार्थमेवोत्पन्नानि । यानि खलु पदपाठे विश्लेषितानां पदानां पुनः सश्लेषे जायमानान् वर्ण-विकारविशेषान् प्रतिपादयन्ति ॥

अन्ततः परिशिष्टात्मिका काचिदनुक्रमणी नाम शाखाऽपि वेदानां रक्षार्थमेवोत्पन्ना । सूचीपट्टिकात्मिकैषा न केवलं संहिता-पाठगतानां सूक्तानां मन्त्राणा पदानामक्षराणां च तांस्तान् सङ्ख्या-विशेषानेव निर्दिशति किन्तु तदीयविषयानुक्रमानपि बहुधा दर्शयन्ती तस्याभेद्यतां सम्पादयति च ॥

तस्य चैवंविधस्य ऋग्वेदस्य केवलमेकविध एव पाठोऽस्माभि-रिदानीमधिगम्यते । अपि नाम तस्य पुराकाले पाठान्तराण्यभूवन् ? अपि नामात्र विषये क्वापि किमपि लिङ्गमुपलभ्येत ? गवेषयाम-स्तावत् :—

सूत्रकालोत्पन्नः परिशिष्टात्मकश्चरणव्यूहसमाख्यो ग्रन्थः शाकल-बाष्कल-आश्वलायन-शाङ्खायन-माण्डूकेयाख्याः पञ्च शाखाः सन्ति ऋग्वेदस्येत्याह । तत्र तृतीयतुरीयशाखयोः शाकलशाखा-पेक्षया विशेषतो नाभूत् पाठभेदः । शाकलैः खिलत्वेनाभ्युपगतानि यान्येकादश वालखिल्यसूक्तानि तान्याश्वलायनैः मूलांगत्वेनाभ्युपग-तानि शाङ्खायनैः कतिपयमन्त्रपरित्यागेन स्वीकृतानि चेत्येतावानाकि-ञ्चित्करो विशेषः समभूत् । अत एव पुराणेषु शाकल-बाष्कल-मण्डूकाख्य शाखात्रयमेव परिगण्यते । तत्रापि माण्डूकशाखावलम्बी पाठभेदो यद्यभूत् तर्हि स प्रथमकाल एव नामावशेषं गतः स्यात् । अत एव क्वापि तदीया वार्ताऽपि न श्रूयते । अतोऽत्र शाकल-बाष्क-लाभिधानं शाखाद्वयमात्रमधिकृत्य विचारः कर्तव्यः । तत्र बाष्कलानां पाठे शाकलपाठापेक्षया विशेषतोऽष्टानां सूक्तानां संयोजनं, प्रथममण्डले कस्यचिद् भागस्य स्थानपरिवर्तनं च कृत-मभूदित्यर्वाचीनैर्वैदिकग्रन्थैरवबोध्यामहे । सोऽयं विशेषांशः साम्प्रतिके संहितापाठे नोपलभ्यते । इत्थं च शाकलपाठ एवैकः परमोत्कृष्टः परम्परासम्प्राप्तश्च सम्प्रत्युपलभ्यते । वस्तुतश्च अय-मेवैकः पाठः सर्वसम्मतः सार्वकालिकश्च ॥

ऋग्वेदोऽयं वेदान्तराणीव शतपथब्राह्मणमिव तैत्तिरीयब्राह्मणारण्यके इव च सस्वरं पठ्यते । निरतिशयोऽस्य पवित्रतागुण एव वर्णोच्चारणसौष्ठवापादनपूर्वकं स्वरसम्प्रदायं पर्यपालयत् । ग्रीकभाषायामेवंविधः स्वरः सुप्रसिद्धेषु प्रधानग्रन्थेषु परमुपलभ्यते । नादस्य पातोत्पातावनुसृत्य प्रवर्तमानो वैदिकः स्वरः प्राक्तनग्रीकभाषास्वर इव गानानुकूलोऽभूत् । सोऽयं स्वरसम्प्रदायः पाणिनिमुनेरनन्तरकालेऽपि लब्धप्रचारः स्थितः । ततः क्रमेण गच्छति काले यथा प्राक्तनग्रीकभाषागतोऽक्यूतादिः स्वरः क्रैस्तवाब्दारम्भात् परं स्वरभाररूपेण परिणतस्तथा संस्कृतभाषायामप्युदात्तादि. स्वरः क्रिस्तात् परं सप्तमे शतकाब्दे ततः प्रागेव वा विपर्यासं प्रापद्यत । तत्र तावदर्वाचीनग्रीकभाषायां स्वरभारो यथा प्राक्तनस्य गानानुकूलस्य स्वरस्य स्थान एवान्वयव्यतिरेकाभ्यामुपलभ्यते न तथा संस्कृतभाषायाम् । न खलु वैदिकस्वरस्य संस्कृतभाषास्वरभारस्य च मिथः स्थान्यादेशभावः । अद्यत्वे हि संस्कृतभाषायां स्वरभारः प्रायेण लेतिनभाषावत् पदान्ते स्थितानां द्वित्राणामक्षराणां मात्राविशेषानाश्रित्य प्रवर्तते । तथा हि—उपधाक्षरं दीर्घं चेत् स्वरभारेणोपस्क्रियते, यथा—कालिदासः । उपधोपान्त्यमपि तादृशं चेत् तदपि तथा क्रियते, यथा—ब्राह्मणः, हिमालयः । संस्कृतभाषायामेवंविधः स्वरविपरिणामः प्राकृतसंसर्गादुत्पन्नः । यतो हि प्राकृतेष्वीदृशः स्वरभारनियमः क्रिस्तोः पूर्वं बहुभ्यः शतकाब्देभ्यः प्रागेव स्थितोऽवगम्यते ॥

ऋग्वेदे तथा वैदिकग्रन्थान्तरेषु च त्रिविधा स्वराः सन्ति। तेषामुच्चस्वर उदात्तस्त्रयाणां प्रधानः। य खलु ग्रीकभाषागतेन अक्यूतस्वरेण तुल्यः। मूलार्यभाषायामयं स्वरो यस्मिन् वर्णे स्थितस्तस्मिन्नेव वर्णे संस्कृतभाषायामपि व्यवस्थितत्वेन प्रत्यभिज्ञायते भाषाशास्त्रकारैः। अत एव ग्रीकभाषायामपि पदान्ते वर्तमानानां त्रयाणामक्षराणां मध्ये बहुत्र प्राप्तावेकत्र नियन्त्रयन्तं विशेषविधिमपहायान्यत्र सर्वत्राप्ययं संस्कृतभाषासमान एव वर्णे समवलोक्यते। तथा हि—ग्रीकभाषागतः 'हेप्त' इत्यादिः शब्दः संस्कृतभाषादृष्टेन 'सप्त' इत्यादिना समानरूपः। एवमनुदात्ताख्यो नीचस्वर उदात्तात् पूर्वमक्षरं स्वरिताख्यः पतनशीलः स्वरो नियमेनोदात्तात् परमक्षरं च संश्रयति॥

चतुर्विधाः समुपलभ्यन्ते स्वराणामङ्कनप्रकाराः। तत्र ऋग्वेदीयो मार्गः प्राचुर्येणाद्रियते। यत्रोदात्तस्य न कापि चिह्नरेखा। अनुदात्तोऽधस्तात् समरेखया स्वरितं उपरिष्टादूर्ध्वरेखया च चिह्नयते। तथा च—'युज्ञस्य' इत्यस्मिन् शब्दे द्वितीयमक्षरमुदात्तं तृतीयं स्वरितं चेत्यवगन्तव्यम्। अत्रोदात्तस्य चिह्नरेखाया अपरिकल्पनादृग्वेदे तस्य स्वरद्वयमध्यावस्थाभाक्त्वेनाङ्कितत्वमनुमीयते*॥

---

*अपरे त्रिविधाः स्वराङ्कनप्रकाराः क्रमेण काठकमैत्रायणाख्यकृष्णयजुर्वेदीयसांहिताद्वये, शतपथब्राह्मणे, सामवेदे च समा-

ऋग्वेदीयेषु सूक्तेषु त्र्यवरा अष्टचत्वारिंशत्परार्श्च मन्त्राः सङ्ग्रथिताः । भूयांसि तु सूक्तानि दशभिर्द्वादशभिश्च मन्त्रैः सङ्घटितानि । पद्यप्राया इमे मन्त्राः परस्परविलक्षणैः पञ्चदश-प्रकारैश्छन्दोभिर्बद्धाः । तत्र सप्तविधानि च्छन्दांसि क्रियासमभि-हारेणोपयुक्तानि । तत्रापि त्रिविधैश्छन्दोभिः ऋङ्मन्त्राणां पञ्चसु चत्वारो भागाः सम्पादिताः ॥

ग्रीकवैदिकच्छन्दश्शास्त्रयोरुपलभ्यते किञ्चिद्वैलक्षण्यमेकस्मिन् विषये । ग्रीकभाषायां छन्दोबन्धः पादरूपेण विभज्यते । वैदिक-भाषायां तु पङ्क्तिरूपेण न तु ग्रीकभाषागतपादरूपेण । यस्तु वैदिकच्छन्दोमार्गेऽपि पङ्क्तेः पादशब्दव्यवहारस्तत्र हेतुस्तावदन्य एव । तत्र हि भूयस्तया मन्त्राणामंशचतुष्टयघटितत्वात् पादशब्द-श्चतुष्पात्पादसाम्येन चतुरंशरूपेऽर्थे लाक्षणिकः । तत्रैकैकस्मिन्नपि पादेऽष्टावेकादश द्वादश वाऽक्षराणि भवन्ति । तादृशैः समानाक्षरै-स्त्रिभिश्चतुर्भिर्वा पादैः ऋचो निबध्यन्ते । ऋग्वेदे चतुर्विधाः पञ्चविधा वा मन्त्राः केवलमसमानाक्षरपादैश्छन्दोभिरुपनिबद्धाः ॥

---

श्रिताः । तत्र प्रथमे— उदात्त उपरिष्टादूर्ध्वरेखया, द्वितीये—स एवाधस्तात् समरेखया चाङ्क्यते । तृतीये तु—स्वरत्रयस्योच्चैस्त्वा-द्यवस्थाविशेषाभिव्यञ्जनार्थं १, २, ३ इत्येतानि सङ्ख्याक्षराण्युप-युज्यन्ते । तत्र प्रथमसङ्ख्याक्षरेण निर्दिश्यमान उदात्त एवोच्चस्वरः ॥

इदं तावद्विशेषतोऽनुस्मरणीयं यद्——ग्रीकच्छन्दस्स्वदृष्टः लेतिनसतूर्णियपद्येषु दृष्टश्च नियमानायत्ततारूपो विशेषः समुपलभ्यते वैदिकच्छन्दस्सु । तथा हि——वैदिकच्छन्दःपादेष्वन्तिमानां चतुः-पञ्चाक्षराणामेव केवलं मात्रानियमायत्तत्वात् तत्पूर्वभागस्य तन्नियमानायत्तता व्यक्तैव । छन्दसामेषां चरित्रतस्तुविचारे क्रियमाणे——ग्रेगियच्छन्दसां विकृतिभूतानि लौकिकसंस्कृतच्छन्दसां प्रकृतिभूतानि चैतानि वैदिकच्छन्दांसि तयोरुभयोर्मध्यवर्तिनि काले समुत्पन्नान्य-वधार्यन्ते । अवस्तायां हि अष्टाक्षरा एकादशाक्षराश्च पादाः मात्रा-नियमरहिता अपि पद्यरूपतां प्रापिता उपलभ्यन्ते । अतश्च पारसीकानां भारतीयानां च मिथो विश्लेषात् पूर्वमेकत्वेनावस्थितानां च्छन्दोमार्गः पादेष्वक्षरसङ्ख्यानियमानात्मको बभूवेत्यध्यवसीयते । ततः पश्चाल्लौकिकसंस्कृतकाले पुराणग्रन्थारूढं श्लोकाभिधानं वृत्त-मपहाय सर्वेष्वन्येषु वृत्तेषु सर्वत्र मात्रानियमः सञ्चारितः । सोऽयं नियमः प्रथमं पादानामन्ते कृतपदः पश्चात् क्रमेण सर्वाङ्गीणः सम्प्रवृत्तः । वैदिकपादानामन्ते स्थितः मात्रानियमानुगतो भागः 'वर्तेरे' इत्यनेन लेतिनधातुना तुल्यरूपाद् वृतधातोर्निष्पन्नेन निवर्त-नार्थकेन वृत्तशब्देनाभिधीयते । यश्च खलु वृत्तशब्दः शब्दव्युत्पत्ति-सादृश्याल्लेतिनभाषागतेन 'वर्सस्' इत्यनेन संवादमर्हति ॥

अष्टाक्षराः पादाः प्रायेण ह्रस्वदीर्घयुगलाभ्यां विरमन्ति । प्रथमाक्षरचतुष्टयेऽपि प्रतिद्विकं ह्रस्वदीर्घघटनासक्तिः प्रबलीभूता

विलोक्यते । तदिदं छन्दः प्रायशो ग्रीकभाषागतेन डिमीटराख्येन वृत्तेन समानाभावं भजति ॥

एवंविधैस्त्रिभिः पादैरुपलक्षितं छन्दो गायत्रीत्युच्यते । छन्दसाऽनेन ऋङ्मन्त्राणां चतुर्थैको भागः (१४५०) सङ्घटितः । अस्य चोदाहरणमृग्वेदीयः प्रथमो मन्त्रः —

अग्निमीळे पुरोहितं
यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥

एतैरेवाष्टाक्षरैश्चतुर्भिः पादैर्घटितं छन्दोऽनुष्टुभित्युच्यते । अस्याः प्राथमिकौ द्वौ पादावुत्तरेण पादद्वयेन समानलक्षणौ भवतः । अनयोपनिबद्धा मन्त्राः गायत्रीमन्त्रापेक्षया त्र्यंशसङ्ख्या एव । यदा हि वेदकालानन्तरं क्रमेण गायत्रीच्छन्दः प्रचारपदापगतं तदैतदनुष्टुप्छन्दः स्वरूपभेदं प्राप्य लौकिकसंस्कृतग्रन्थानां परमादरस्य पात्रतामगात् । ऋग्वेद एवास्याः क्रमिको विपर्यासः सुनिरूपः । तथा हि—प्राचीनतमेषु सूक्तेषु स्थितानामेतच्छन्दोबद्धानां मन्त्राणां पादाः सर्वेऽपि ह्रस्वदीर्घाक्षरयुगलक्रमेण सङ्घटिताः । तदनन्तरकालिकेषु सूक्तेषु तेषां प्रथमतृतीयपादौ द्वितीयचतुर्थपादाभ्यां व्यावर्तयितुं तत्र ह्रस्वदीर्घाक्षरघटनानियमः पाक्षिकीकृतः । अन्ततश्च दशममण्डलीयेष्ववर्चीनतमेषु सूक्तेषु नियमोऽयं प्रथमतृतीय-

पादयोर्विषये सर्वात्मनैव परित्यक्तः । परन्त्वत्रान्तिमेऽक्षरचतुष्टये यथायथं ह्रस्वदीर्घयोः स्थाने तत्तुल्यरूपो मात्रानियमः सम्पादितः । तथा चैवंरूपो भेदः पूर्वापेक्षया द्रष्टव्यः ⏑ - - ⏑ । वेदकालानन्तरभाविनः श्लोकाभिधानस्य वृत्तस्य प्रथमतृतीयपादयोरेवंविध एव विरामो नियमेनादृतः ॥

द्वादशाक्षरस्य च्छन्दसः पादस्य विरामस्त्वेवंरूपः - ⏑ - ⏑ ⏑ । एवंप्रकारैश्चतुर्भिश्चरणैः सङ्घटितं छन्दो जगतीत्युच्यते । त्रिष्टुभाख्यं छन्दस्त्वेकादशाक्षरैश्चतुर्भिः पादैः सम्पाद्यते । एषा च केवलमन्त्याक्षरविकला जगत्येव । अतस्तत्रैवंविधो विरामः सम्पद्यते - ⏑ - ⏑ । समानरूपयोरनयोश्च्छन्दसोः पादा एकस्मिन्नेव मन्त्रे मिश्रीकृत्य प्रयुज्यते । जगत्यपेक्षया त्रिष्टुभो बाहुल्येन प्रयोगः । ऋङ्मन्त्राणां पञ्चसु द्वौ भागावनयोपनिबद्धौ ॥

एकैकमपि सूक्तं सामान्यतः सजातीयैरेव च्छन्दोभिः सङ्घटितम् । किन्तु प्रत्येकं सूक्तानामन्ते सूक्तविरामद्योतनाय विजातीयानि च्छन्दांस्युपयुक्तानि ॥

ऋग्वेदे न केवलमुक्तविधाः केवलात्मका एव किन्तु युग्मकादिरूपा अपि मन्त्राः समुपलभ्यन्ते । ते च प्रायेण गायत्रीघटितमन्त्रत्रयात्मका वा विजातीयच्छन्दोघटितमन्त्रद्वयात्मका वा भवन्ति । तत्र मन्त्रद्वयात्मकं छन्दो गानानुगुणत्वात् प्रगाथाख्यया समाख्यायते । तच्चाष्टमे मण्डले बहुलमुपलभ्यते ॥



## ॥ चतुर्थोऽध्यायः ॥

### ऋङ्मन्त्राः

ऋग्वेदगतानां विषयाणां निरूपणात् पूर्वं प्रश्नः कश्चिदय-मापतति—कियद्दूरमेतादृगस्यैकान्तोत्पन्नस्य कस्यचिद् ग्रन्थस्य वास्तविकोऽर्थः परिज्ञातुं शक्यः ? इति । अस्य चोत्तरं प्राचीन-ग्रन्थस्य तस्य योग्यत्वेन प्रतिपत्तव्यस्य सद्व्याख्याप्रकारस्य प्रतिपत्तौ पराधीनम् । अतः कीदृशी व्याख्या प्रतिपत्तव्येति प्रथमं विमृ-शामः । ऋग्वेदस्य प्रथमपरिचयकाले लौकिकसंस्कृतग्रन्थसमुदाय-मात्रे कृतपरिश्रमाः पाश्चात्या विपश्चितः—वेदोऽयमतिप्राक्तन्या कयापि भाषया निबद्धः । एतदुपवर्णिता विषयाश्च लौकिकसंस्कृत-ग्रन्थपरिशीलितेभ्यो विषयेभ्यः सुतरां विलक्षणा एवेत्यमंसत । अतश्च पाश्चात्यानां प्रथमदृष्टौ तदर्थावबोधो दुश्शक एवादृश्यत । तथापि तदैव दैवयोगादतिविस्तृतं किमपि व्याख्यारत्नं प्रतिपदार्थ-प्रतिपादकं पुरा सञ्चितं महाभाग्यमिव पुरस्तादुपनतम् । तच्च तत्रभवतो वैदिकाग्रेसरस्य सायणाचार्यस्य भाष्यम् । योऽयमाचार्यः क्रिस्तोः परं चतुर्दशशतकाब्दस्योत्तरभागे दक्षिणभारतभूमौ बल्लारि-देशप्रत्यासन्नं विजयनगरमलञ्चकार । तद्भाष्ये च चिरन्तनोक्तीनां शश्वदनुसन्धानादाचार्योऽयं पुराकालादारभ्य व्याख्यापरम्पराधिगतं यथास्थितमर्थं प्रतिपादयतीति प्रतीतं प्रथमतः पाश्चात्यैः । प्रायेण पञ्चशताब्देभ्यः पूर्वं प्रचारे स्थितस्यैवार्थस्य सायणाचार्येण स्वकृतौ

प्रतिपादनात् तद्भाष्यादन्यन्न किञ्चिद् वेदार्थावबोधार्थमपेक्ष्यत इति च तैराकलितम् । इदमेवानुसन्धायोक्षतरणकलाशालायाः प्रथमेन संस्कृताध्यापकेन होरस् हेमन् विल्सनाख्येन १८५० तमे क्रिस्त्वब्दे ऋग्वेदस्याङ्गलीपरिवर्तनं तद्भाष्यानुरोधेन कर्त्तुमुपक्रान्तम् । अयमेको व्याख्यामार्गः ॥

अन्यः कश्चिन्मार्गो वैदिकभाषाशास्त्रोपज्ञात्रा यशोमात्रावशिष्टेन तत्रभवता रोठाचार्येण पुरस्कृतः । यः खलु महापण्डितः प्रतिजानीते—सायणाचार्येण ततोऽपि प्राचीनेन यास्काचार्येण वा वेदमन्त्रार्थत्वेनोत्प्रेक्षितस्यापार्थस्यानुधावनमात्रपरया न भवितव्यं वेदार्थव्याख्यया, किन्तु मन्त्रकृतामभिप्रेतस्यार्थस्य प्रत्यभिज्ञाने यत्नवत्या भवितव्यम् । न च दृश्यते तदर्थको यत्नः सायणभाष्यादौ । तस्माद्दुर्लभैव समीहितसिद्धिरेषां व्याख्याकृतां शुश्रूषया । एते हि पश्चात्कालाविर्भूतयोः वासनाबलादभ्यासवशाच्चात्यन्तपरिचितयोः प्रवृत्तिनिवृत्तिविद्ययोः सम्बन्धं प्रकल्प्य तत्परत्वेन वेदमन्त्रान् व्याचक्षते, न तु मन्त्रकृतां विवक्षितान् वास्तविकानर्थान् निरूपयन्ति । अतस्तेषां काले नाभून्मन्त्रकृतां कालादविच्छेदेन प्रवृत्ता शब्दार्थोपदेशपरम्परेत्याकलयामः । तैरधिगतस्तु तत्सम्बन्धः कुतश्चित् पूर्वेषां व्याख्याकृतां मध्यादारब्धो न तु मन्त्रकृतां कालात् । न च कश्चिदन्यः सम्प्रदायः स्थितत्वेनानुमातुं शक्यः । विच्छिन्ने हि शब्दार्थोपदेशपारम्पर्ये प्रायेण व्याख्यानानि प्रवर्तन्ते । तस्मादेते व्याख्यातारो वेदमन्त्राणामन्योन्यान्वयक्लेशान् परिहरन्तः

यथा कथञ्चिन् तेषामन्योन्यसम्बन्धमात्रं प्रदर्शयितुं प्रवृत्ता. । अत एवैते भाषागतिमन्यथा नयन्तस्तत्प्रतिपाद्यानाधिधार्मिकानाधिदैविकानाधिभौतिकांश्च विषयान् प्राक्तनकालानुरोधेन प्रवृत्तानपि स्वकीयवासनानुगुण्येन प्रतिपादयन्ति ॥

अपि च खलु वेदार्थोपवर्णने चिरन्तनेषु तत्तच्छाखीयेषु वृत्तिकारेष्वभूवन् मतभेदा इति यास्काचार्यवचनादवधार्यते । यो हि वेदार्थविषये मिथो विवदमानान् सप्तदशाननूकान् पूर्वाचार्यान् निर्दिशति । तथा हि—तेषामेको नासत्यावित्येतत् सत्यावेव नासत्याविति. अन्यः कश्चिन् सत्यस्य प्रणेताराविति च विभिन्नगत्या व्युत्पादयतः । यास्काचार्यश्च नासिकाप्रभवौ स्यातामित्यभिप्रैति । ईदृशेन हि वैमत्येन तेषां काल एव सुदूरं विच्छिन्नाऽभूच्छब्दार्थोपदेशपरम्परेत्यनुमीयते । अत एव यास्काचार्यात् प्राचीनः कौत्साख्यः कश्चित्—अविस्पष्टार्थत्वादनर्थकत्वाद्विप्रतिषिद्धार्थत्वाच्च विधिमन्त्रयोः वेदार्थप्रत्ययाय शास्त्रारम्भो निरर्थक इति मुक्तकण्ठमाह । यास्काचार्यः पुनरीदृशमाशयं—न ह्येष स्थाणोरपराधो यदेनमन्धो न पश्यति, पुरुषापराधः स भवतीत्यादिवाचोयुक्त्या सुदूरं निरास्थदित्यन्यदेतत् । यास्काचार्योऽपि ऋग्वेदस्यात्यल्पमेव भागं व्याख्याति । व्याचिख्यासितानां च मन्त्राणामर्थनिर्णये शब्दनिर्वचनभङ्गीमेव प्राधान्येनाङ्गीकरोति । शब्दस्यैकस्य वैकल्पिकान् बहुविधानर्थान् निर्ब्रूते । इत्थमर्थवैचित्र्यप्रदर्शनादसंशयमवधार्यते नाभूत् तस्य काले पूर्वाचार्योपकल्पितः शरणीकरणार्हो

वेदार्थनिर्णायकः कश्चिदवलम्बः इति । तस्यारम्भस्तु केवलमूहैकमूलकः । न खलु कश्चिदपि मन्येत मन्त्रकृतो नानार्थविवक्षावन्तो बभूवुरिति ॥

अथापि तावदयं यास्काचार्य. प्रायेण द्विसहस्रवत्सरीतः पश्चादवतीर्णैः सायणाचार्यप्रमुखैः स्वप्नेऽप्युल्लेखितुमशक्यान् बहूनां पदानामर्थान् स्वकालावस्थितैरुपकरणैर्निश्चेतुमक्षमिष्टेत्यवगन्तव्यम् । एवम्प्रायेऽपि वस्तुनि सायणाचार्यो बहुत्र यास्काचार्येण प्रहतादन्येन पथा सञ्चरते । तत्र हेतुं न जानीमः । किन्तु तावत् प्राचीनो व्याख्याता स्खलितगतिः स्यादाहोस्विदर्वाचीनो व्याख्याता प्रतिपथासक्तमति. स्यादित्युभयकोटिकः सन्देहः परापतति । अपरं चायमाचार्यो यास्काचार्यसरणिमुल्लङ्घ्य स्वच्छन्दमेकस्यैव शब्दस्य विप्रतिपन्नाननेकानर्थान् दर्शयति । यथा हि—'शारद' इत्यस्य शब्दस्य क्वचित् 'शरद्व्यापि' इति, अन्यत्र क्वचित् 'नवीनं वा शरद्व्यापि वा इति. अपरत्र क्वचित् 'शरन्नाम्न्या राक्षस्या सम्बद्धम्' इति च बहवोऽर्थाः प्रदर्शिताः । अस्य तावदाचार्यस्यायमप्येको महान् दोषः—यदयं प्रकरणविशेषानपरामृशन् केवलमेकैकस्मिन् मन्त्रे कृतदृष्टिस्तान् मुक्तकश्लोकरीत्या विवृणोति । सायणीये भाष्ये यास्कीये निरुक्ते च सम्यग्विमृश्यमाने ताभ्यामनिर्धारितार्था बहवः शब्दा मन्त्राश्च ऋग्वेदे समासाद्यन्ते । तस्मादिदमुच्यते—युक्त्या प्रकरणेन सिद्धपदसान्निध्यादिना वा दुर्बोधानामृचामर्थो निर्णेयः । यत्र पुनस्तादृग्रीत्या निर्णयो दुरासदस्तत्र केवलमगत्या व्याख्यातृणा-

मुक्तय: शरणीकरणीयाः । अनया रीत्या विचार्यमाणे वेदार्थे न क्वापि ऋङ्मन्त्रेषु सन्देहाः सम्भविष्यन्ति । तस्मात् सायणाचार्य-भाष्यैकमूलकतया क्रियमाणो भाषान्तरानुवादोऽसमञ्जस एव स्यात् । वस्तुतो हि प्राक्तनतत्तमन्तभाषागतानां हीब्रूग्रन्थानामर्थनिर्णये तल्मुदरबीमौ यावदुपकुरुतस्तावन्मात्रमेव वेदार्थनिर्णये सायणा-चार्योऽपि । एवंभूतेऽपि वस्तुन्येतदेकमवश्यमनुमन्तव्यं यदयमा-चार्यवर्योऽतिविशालेन भाष्येण वेदाब्धिमपारं सुतरं व्यधादिति । अथापि तावदस्मदीयेन लौकिकसंस्कृतपरिज्ञानेन सम्प्रत्युपलभ्यमा-नानां वैदिकग्रन्थानां परिशीलनेन पाश्चात्योपज्ञस्य भाषाशास्त्रस्य साहाय्येन चास्माभिरिदानीमुत्प्रेक्षितुं शक्यान्नाधिकः कश्चिदर्थः सायणाचार्येण प्रतिपादितोऽस्ति ॥

तस्माद् रोठाचार्यो भारतवर्षीयाणामार्याणां विशदयशःपता-कायमानस्यात्युच्छ्रितशिखराधिष्ठितस्यास्य ऋग्वेदस्य तत्वार्थविचारे भारतीयानां व्याख्यातृणामक्षरशः प्रमाणीकरणमयुक्तमित्यनुसन्धाय नवीनं प्रस्थानमपश्यत् । तन्मतानुसारेण अप्रसिद्धानामतिगहनानां च वाक्यानां स्वतःसिद्ध एवार्थस्तात्विकः । उक्तं हि केनचिद् भारतीयेनापि व्याख्यात्रा—स्वयम्प्रकाशाः स्वतःसिद्धाश्च भवन्ति वेदार्था इति । अपरं च रोठाचार्यो वेदार्थविचारे भारतीयब्राह्मणा-पेक्षया व्युत्पन्नमतयः पाश्चात्याः प्रशस्यन्त इत्यभिप्रैति । युक्तं चैतत् । न खलु भारतीयानामिव यौरोपाणां चित्तमध्यात्मविद्या-ग्रहिलम् । ते हि चरित्रार्थचर्चाचुञ्चवः सर्वशास्त्रादर्शायमान-

विशालमतयस्तत्वार्थावलोकने कामं प्रभविष्यन्ति । अत एव रोठाचार्यो वेदार्थविचाराय प्रवृत्तः साम्प्रदायिकेषु व्याख्यामार्गेषु सञ्चारयन्नपि लेशतो दृष्टिं प्राधान्येन प्रकरणं व्याकरणं निरुक्तं चानुसन्धाय शब्दतोऽर्थतश्च संवादभाजां वाक्यानां सारूप्यवैरूप्ये निरूपयितुमारभत । एवंरीत्या ऋग्वेदोऽयं शास्त्रीयमार्गेण चर्चाविषयीकृतः । अपि चायं रोठाचार्यो न केवलमुक्तविधया सारूप्यवैरूप्यनिरूपणविधेरेव किन्तु भाषाविषयाभ्यामृग्वेदेनात्यन्तं सन्निकृष्टाया अवस्तायाः, नूतनोपक्रान्तस्य भाषाशास्त्रस्य च साहाय्यकं बहुमन्यत । अयमीदृशो व्याख्यामार्गः प्राचां भारतीयानामविज्ञात एव ॥

एवमादिविधया प्रत्येकं पदानामर्थान् निश्चिन्वता भूतलिङ्गाचार्यद्वितयेन तत्रभवता रोठेन १८५२ तमवत्सरादारभ्य १८७५ तमवत्सरपर्यन्तं विरचिते सप्तखण्डात्मके विस्तृते वैदिकशब्दार्थकोशे शास्त्रीययुक्तिसहस्य वेदव्याख्यानस्य मूलबन्धाः परिकल्पिताः । स एष रोठीयो मार्गः सम्प्रति शास्त्रीयपथाभिलाषिणा वेदाध्येत्रा सर्वत्राप्यद्रियते । परन्तु भारतीयानां व्याख्या न परित्यागयोग्येति मन्वानैस्तदर्वाचीनैर्विमर्शकै. सायणीया व्याख्यैव सविशेषमनुसन्धीयते । एवमादिरूपैः परिकरबन्धैः साम्प्रतमतिशयेनारब्धो वेदार्थविमर्शः सुबहून् सन्देहग्रस्तानंशान् निर्णयन्नत्याश्चर्यमावहति । अत्र ह्यल्पीयान् वैदिकग्रन्थव्यवसायकालः । विरलाश्च व्यवसायिनः, तत्रापि द्वित्रा एवाङ्गलाः । अथाप्यद्य यावत् कृतेन व्यवसायेन

चिरादपव्याख्यानान्धतमसे निलीनश्चरित्रार्थः, तद्द्वारा भारतवर्षीय. प्राक्कालिकोऽवस्थाविशेषश्च प्रकाशतां प्राप्तः । नूनमितोऽप्यवशिष्यन्त एवास्मदनुगामिनां विदुषां विमर्शनीया बहवो विवादग्रस्ता विषयाः । अथापि प्राक्तनतत्तमन्तभाषाया दशामनुस्मरतामस्माकं नेदमतिखेदमावहति । तत्र ह्यसङ्ख्या हीब्रूकोविदा व्यवसायिनः । नैके च शतकाब्दा व्यवसायकालः । तथापि तत्र बहूनि गीतानि सिद्धवाक्यानि चाद्यत्वेऽप्यनिर्धारितार्थानि दृश्यन्ते । इत्थमालोच्यमाने वस्तुनि वैदिकग्रन्थसमुदायभूमौ केवलं पञ्चाशतावर्षैरियत्कर्म कृतमिति भृशं सन्तोष्टव्यम् । अपि च मन्यामहे, सूक्ष्मया दृशा सम्प्रत्यनुवाचितानि पारसीकदेशीयानि विकृताक्षराणि, भारतवर्षीयशिलालेखार्पितानि गूढाक्षराणि, तत्रान्तर्हितानां भाषाणां स्वरूपाणि चाधिकृत्येदानीं पटुप्रज्ञैः पण्डिताग्रेसरैः क्रियमाणेन विमर्शेन बहवो वैदिका विषयाः विवादविनिर्मुक्ता भविष्यन्ति ॥

अनेन मार्गेण वेदोपवनद्वारमुपगता वयं वैदुषीसौवर्णकुञ्चिकया द्वारमुद्घाट्य यावदन्तः प्रविशामः दृश्यतां तावत्—भूयसाऽयमृग्वेदो मतधर्मविषयकैर्मन्त्रैः सङ्घटितः । लौकिकविषयपरा मन्त्राः केचिद्दशममण्डले परमुपलभ्यन्ते । ऋग्वेदीया मन्त्राः प्राधान्येन वेदोक्तविश्वदेवतान्तर्गतास्तास्ता देवताः स्तोतुं प्रवृत्ताः तासां महिमानं महान्ति कर्माणि हितकारितां च प्रशंसन्तः पशून्, पुत्रपौत्रान्, श्रेयः, दीर्घमायुः, विजयं च ताः प्रार्थयन्ते । संस्कृताध्ययनारम्भकाले यथा पाश्चात्यैश्चिन्तितं न तथाऽयमृग्वेद-

पामराणां मध्ये प्रादुर्भूतः । किन्तु ब्राह्मणग्रन्थोपपादितकर्मजाला-पेक्षया सरलतरेष्वपि नातिसरलेषु नानाविधेषु यज्ञकर्मसु सोमघृतयोराहुतीकरणावसरे यथायथं पठितव्यैः सयुक्तिकमुपनिबद्धैः सूक्तैरुपशोभमानः कृतधियां याज्ञिकानां मध्ये लब्धोदयः । तत्र सामान्यतः सर्वत्र तत्राऽपि विशेषतोऽग्निसोमाख्यदेवताद्वयविषयकेषु सूक्तेषु क्रियासमभिहारेण यज्ञक्रियापरामर्शाद् भृशमुपहता तदीया कविताशोभा । अथाप्येवंविधदोषग्रस्तेऽस्मिन् यावती सम्भावयितुं शक्या न तावत्येव किन्तु ततोऽधिकतरा नैसर्गिकी शोभाऽनुभूयते । यतो ह्यत्र प्राकृताः पदार्था एव पुरुषविधत्वमारोप्य देवतात्वेन स्तूयन्ते । तेन च रमणीयानां कल्पनाविशेषाणामुत्पत्ताववकाशो जातः । सूक्तानां घटनारीतिः प्रायेण सरला निर्दोषा च । अत्यल्पः समस्तपदानामुपयोगः । केवलं पदद्वयपरिमिताः खण्डसमासाः परं वैरल्येनोपयुक्ताः, न तु लौकिकसंस्कृतवद्दीर्घदीर्घसमासाः । आशयाश्चापि प्रायेण प्रकृतिसुन्दराः सरलाश्च । यज्ञदेवतापरेषु पुनः सूक्तेषु न तथा, यत्र ह्याशयाः क्लिष्टकल्पनादोषग्रस्ताः सहृदयानां वैरस्यमापादयन्ति । इह वर्णनीयस्य वस्तुनः परिमित-विषयत्वादेकस्यैवार्थस्य भङ्ग्यन्तरेण बहुधा वर्णनीयतया मन्यामहे मन्त्रकारैरेवं क्लिष्टकल्पनासरणौ पदं न्यधायि ॥

अपि च, लौकिकसंस्कृतग्रन्थेषु प्रकटमनुभूयमाना वर्णना-रीतेः क्लिष्टता शब्दसङ्कोचग्रहिलता च ऋग्वेदेऽपि मनागारब्धा दृश्यते । या खलु रीतिः 'गहनार्थाभिः ऋग्भिः देवास्तृप्तिमाया-

न्तीत्याचक्षाणैर्ब्राह्मणवाक्यैरभिनन्दिता । किञ्च पश्चात्काले काव्यचारुताहेतुत्वेनाङ्गीकृत. शब्दाडम्बरोऽप्यत्र क्वचित् क्वचिदाश्रितः । अपि च निसर्गतः पश्चात्कालसम्भवयोग्यः सहृदयाह्लादी कवितांविलासोऽप्यत्र बहुषु सूक्तेष्वनुभूयते । तत्र कानिचित् सूक्तान्यतिमहतीं काव्यशोभां बिभ्रति । कानिचित् पुनः यन्त्रवद् दृढतरं सन्दानितानि मध्यमावस्थां भजन्ति । अथाप्यस्योत्पत्तिकालमनुस्मरतामस्माकमेतदीयमीदृशं लावण्यं भृशमेव श्लाघनीयं भवति । तत्तद्देवतोद्देशेन निर्मितानामेषां सूक्तानां स्वरूपविशेषाः प्रायेण प्रतिसूक्तमन्तिमे मन्त्रे प्रतिपाद्यन्ते । तथा हि—ऋषय. प्रायेण स्वकीयानि सूक्तानि विदग्धेन शिल्पिना तष्ट्वा सङ्घटितेन रथेनोपमिन्वन्ति । कश्चिदपि. सम्यगूतेन चारुणा वाससा तुलयति । अपरः कश्चिद् वराय वधूरिव स्वकीया स्तुतिरर्पितेत्याह । ऋषय एते यथाशक्ति यथामति च दैवताः स्तुवन्तीति ६–२१–२ अनेन मन्त्रेण स्वचेतसि यत् प्रतिभाति तदुद्गिरन्तीति १०–३९–१५ अनेन मन्त्रेण चावधार्यते । एवं च पश्चात्कालप्रसिद्धो वेदानादित्वसिद्धान्तः काल्पनिक एव । यद्यपि तत्तत्सूक्तानि तत्तद्देवैस्तत्तदृषिभ्यो दत्तानीत्येतावन्मात्रं तत्र तत्रोच्यते तथापि वेदानादित्वमधिकृत्य न किञ्चिदृग्वेदे प्रस्तूयते ॥

यत्पुनरुच्यते वैदिकसूक्तेष्वेकार्थवर्णनारोहात्मकः कश्चिद्दोषो जागर्तीति तत्तथ्यमेव । परन्त्वयमीदृशो दोषः प्रतिमण्डलमेकैकदेवतासम्बन्धिनां सर्वेषां सूक्तानामव्यवधानेनैकत्रैव राशीकरणा-

दुपनतः सर्वथा मर्षणीय एव । अपि च खल्वीदृशो दोषः परमोत्कृष्टत्वेनाभिमतेषु 'अन्तोलजि' प्रभृतिष्ववाचीनेषु पाश्चात्यसाहित्यप्रबन्धेष्वपि वसन्तवर्णनादौ दृश्यत एव । तत्र हि क्रमशो विंशत्या त्रिंशता वा पद्यैरेक एवार्थः प्रकारभेदैरुपवर्ण्यते । ऋग्वेदे खलु देवताद्वयोद्देशेन प्रवृत्तेष्वासन्नपञ्चशतेषु सूक्तेष्वेकमेवार्थं बहुप्रकारैर्भङ्गीभेदैरुत्प्रेक्षितमवलोकयतां नः परमाश्चर्यमाविर्भवति ॥

ऋग्वेदीयानां सूक्तानां देवतास्तुतिरूपत्वात् तत्प्रतिपाद्यो विषयः प्राधान्येन देवतातत्त्वमेव । देवतातत्त्वाख्यानेऽत्र महती श्रद्धा कर्तव्या भवति, यतो हि साहित्यान्तरदुरवापाः प्राक्कालिका भावनाविशेषास्ततोऽधिगन्तुं शक्याः । अपि च येन प्राकृताः पदार्थाः देवतात्वं प्रापिताः सोऽयं चेतनधर्मारोपप्रकारस्ततो व्यक्तीभवति । इह खलु चेतनव्यापारेणैव घटपटादिष्वचेतनेषु पदार्थेषु चलनभ्रमणादिव्यापारोत्पत्तिं पश्यन्तो वैदिकभारतीयाः संस्कारहीना इव प्राकृतपदार्थानामचेतनत्वात् तन्निष्ठव्यापाराणां चेतनव्यापारमूलकत्वमाकलयन्तस्तेष्वन्तर्यामितया चेतनशक्तिमुत्प्रेक्षन्ते । किञ्च ते प्राकृतपदार्थानां कर्माणि बालिशा इव साश्चर्यहृदयाः पश्यन्ति । तथा हि—तेषु कश्चित् 'कस्मादसौ सूर्यो न पतत्यन्तरिक्षात्' इति, अन्यः कश्चित् 'कुत्रैतास्तारा दिवा निलीयन्ते' इति, अपरः कश्चित् 'रात्रिन्दिवं स्यन्दमाना अपि नद्यः कदाचिन्न समुद्रं जलेन पूरयन्ति' इति चैवंरूपेण विस्मयन्ते । अथापि तैः सूर्याचन्द्रमसोरविश्रान्तेन परिभ्रमणेन यथावेलमुषसः प्रत्यावर्तनेन च प्राकृताः पदार्था

नियतकर्माणो भवन्तीत्यधिगतम् । सोऽयं नियमस्तैः ऋतशब्दे-नोक्तः । स एष ऋतशब्दः ऋग्वेदे प्रथमतो यज्ञक्रियानियमवाच-कत्वेन स्थितः पश्चात् क्रमेण सत्यरूपार्थाभिधायी परिणतः । ऋग्वेदोपवर्णितानां देवतानां मध्ये काश्चिदतिदवीयसः पूर्वकाला-दागताः प्रत्यभिज्ञायन्ते । तथा ह्यवस्तीयदेवताभिः सह सादृश्ये निरूप्यमाणे—तत्र काश्चिद्देवता पारसीकानां भारतीयानां च मिथो विश्लेषात् पूर्वमाविर्भूताः प्रत्यवसीयन्ते । तथा हि—वेदोक्तः परेतराड्यमः पारसीकानां मध्ये स्वर्गाधिपतित्वेन प्रसिद्धः 'इम' एव । अत्र विषये मित्रो मूर्धाभिषिक्तमुदाहरणम् । यः खलु पारसीकैः 'मिथ्र' इत्युच्यमानः क्रिस्तो, परं द्वितीयशतकाब्दादारभ्य चतुर्थशतकाब्दपर्यन्तं रोमकदेशे समान्ताल्लब्धप्रचारस्तत्रत्यैरधःकृत-देवतान्तरैर्लौकिकनायकत्वेनाराधितः ॥

अपि च सोमादिशब्दानामवस्तायां हयोमादिरूपेणोपलम्भात् सोमाग्निपूजादयो धार्मिकाश्चापि केचिद्विषयाः इण्डो-ऐरेणियकालिका द्रष्टव्याः । तथा गोपूजासम्प्रदायोऽपि तदानीमेवारब्धः । अपि च ऋग्वेद इवावस्तायामप्येकादशाक्षरैश्चतुर्भिः पादैर्घटितायास्त्रिष्टुभः, अष्टाक्षरैस्त्रिभिः पादैर्घटिताया गायत्र्याः, तथाविधैश्चतुर्भिः पादै-र्घटिताया अनुष्टुभश्च दर्शनात् तस्मिन् काले विलक्षणरूपाणि कानिचित् सूक्तानि स्थितान्यनुमीयन्ते ॥

अपरं च देवानां देवत्वेन रूपेण द्यावो दिव्यपितृत्वेन रूपेण च बोधस्ततोऽपि प्राचीनतराद् इण्डो-यौरोपकालादारब्धः । यतो

हि देवाः लेतिनायां 'डेवुस्' इत्युच्यन्ते । तथा द्यौष्पितेत्ययं शब्दो ग्रीकाया 'ज्यूस्पटेर्' इत्येवंरूपः लेतिनायां 'ज्यूपिटर्' इत्येवंरूपश्च श्रूयते । अपि च मन्यामहे द्यावापृथिव्योः प्रपञ्चमातापितृत्वबोधोऽभिचारक्रियावासना च ततोऽपि प्रागाविर्भूता ॥

मन्त्रकारैः प्रपञ्चोऽयं 'भूमिः अन्तरिक्षं द्यौः' इति त्रेधा विभक्तव्यत्वेन दृष्टः । अयमेतादृशो विभागः प्राचीनानां ग्रीकाणामपि मध्ये स्थितः । मन्त्रकारैरिदमेव त्रिकमभिधाव्यञ्जनाभ्यां तत्र तत्रोपवर्ण्यते । तत्र द्यौरित्यनेन सूर्यस्य स्थानम् अन्तरिक्षमित्यनेन वायुवृष्टिविद्युतां स्थानं च विवक्षितम् । द्युलोकावस्थायिनोऽपि केचिद्देवाः स्वच्छन्दानुरोधेन त्रैलोक्येऽपि कर्माणि कुर्वन्तः स्तूयन्ते । अन्तरिक्षं बहुत्र स्वर्गीयजलनिधित्वाभिप्रायेण समुद्र इति व्यपदिश्यते । तत्रत्या विपुला निर्जला मेघास्तु ग्रावत्वेन अद्रित्वेन देवद्रुहामसुराणां हर्म्यत्वेन चोत्प्रेक्ष्यन्ते । मन्निर्घोषाः सजलाश्च मेघाः पयोधारया पृथिवीपुष्टिकारित्वहेतुना हम्भारवयुक्ताभिर्गोभिरुपमीयन्ते ॥

ऋग्वेदोपवर्ण्यमानाः सूर्याग्निवायुप्रभृतय उत्कृष्टवर्गीया देवताः सर्वाः प्राकृता एव पदार्थाश्चेतनधर्मारोपेण कल्पिताः । प्राक्कालादागताः काश्चिदपहायान्याः सर्वा अपि देवताः शरीरयुक्तत्वेन वर्णिताः । तत्र पुरुषविधत्वकल्पनायामत्यल्पमेव प्रवृत्तोऽपि चेतनधर्मारोपव्यापारः प्राकृतानां पदार्थानां नैसर्गिकं स्वरूपभेदं

स्वभावभेदं च निगूहति । वस्तुतस्तु देवतीकृत्य वर्ण्यमानाः पदार्था एव परस्पराभिव्याप्तैः सामान्यधर्मैराक्रान्ताः । तथा हि—तेजोमयत्व-तमोहन्तृत्व-प्रभातकालोदेतृत्वादयो धर्मा उषस्सूर्याग्नित्रितयानुगता, सन्दृश्यन्ते । तस्मात् तत्तद्देवतासु धैर्यशौर्यौदार्यादयः सामान्यधर्मा एवोपचरिता । विशेषधर्माश्च विरलतया वर्ण्यमाना अपि सामान्यधर्मतिरोहिता न प्रकाशन्ते । इत्थमन्योन्यविलक्षणा अपि प्राकृताः पदार्था सामान्यधर्मारोपैरैकरूपतां प्रापिताः । अयमीदृशोऽभिनिवेशो देवतानां द्वन्द्वरूपेण वर्णनादुपनतः । ऋग्वेदे हि काश्चिद्देवता द्वन्द्वरूपेण स्तूयन्ते । तत्र चैकदेवतानिष्ठा विशेषधर्माः द्वन्द्वीकृतायामितरस्यां सङ्क्रामन्तस्तस्याः पृथक् स्तुतावपि तद्गतत्वेन स्तूयन्ते । तथा ह्यसकृदिन्द्रेण सह द्वन्द्वीकृत्य स्तुतौ वृत्रहन्तृत्वादिरूपैरिन्द्रधर्मैः संयुक्तोऽग्निः यदा तु पृथगेव स्तूयते तदापि तद्धर्मैः संयोज्यते । इत्थंरीत्या सर्वेषां देवानां सर्वविधशक्तिमत्ववर्णनात् तेषामभेदकल्पनाऽपि सुलभसाध्याऽभूत् । दृश्यते चायमभेदवादो बहुत्र ऋग्वेदे । तथा हि ऋषिः कश्चिदग्निं सम्बोधयन्नाह (५—३—१)—'त्वम॑ग्ने॒ वरु॑णो॒ जाय॑से॒ यत्त्वं॑ मि॒त्रो भ॑वसि॒ यत्समि॑द्धः । त्वे विश्वे॑ सहसस्पुत्र दे॒वास्त्वमिन्द्रो॑ दा॒शुषे॒ मर्त्या॑य' इति ॥

अपि च याज्ञिकदृशा प्रधानभूतस्याग्नेः लौकिकाग्निरूपेण भूमौ विद्युद्रूपेणान्तरिक्षे दिव्याग्निरूपेण सूर्यो चावस्थानमधिकृत्य प्रवृत्तैरविस्पष्टार्थैः प्रहेलिकाप्रायैः सूक्तैरपि देवानां सर्वेषामेकदेवता-

प्रभेदात्मकत्वमेवाभिव्यज्यते । अर्वाचीनेषु पुनः सूक्तेष्वयमर्थो बहुत्र व्यक्तमेवाभिहितः । तथा हि प्रथममण्डलीये कस्मिंश्चिदर्वाचीने सूक्ते (१६४)—'एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः' इति सर्वेषामेकदेवतात्मकत्वं, तथा दशममण्डलीये कस्मिंश्चित् सूक्ते (११४)—'सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति' इति सुपर्णपदवाच्यसूर्यदेवतात्मकत्वं चोपवर्णितम् । एवं च क्रमेण प्रथमारब्धो बहुदेवतावादः ऋग्वेदकालस्यान्तिमे भागे एकदेवतावादत्वेन परिणतो द्रष्टव्यः ॥

तदनुक्रमेण न केवलं विश्वानेव देवान् किन्तु विश्वमेवैकदेवतात्मकत्वेन प्रतिपादयन्नद्वैतवादोऽप्याविर्भूतः । तथा हि प्रथममण्डले ८९ तमे सूक्ते—'द्यौरन्तरिक्षं विश्वेदेवा. पञ्चजनाः जातं जनिष्यमाणं च सर्वमदितिरेवे'त्युक्तम् । तथा दशममण्डले १२१ तमे सूक्ते प्रजापतिर्न केवलं सर्वदेवतातिशाय्येकदेवतात्मकत्वेन किन्तु सर्वव्यापित्वेनाप्युक्तः । एवंरीत्या ऋग्वेदे सूक्ष्मरूपेणोपक्षिप्तोऽयमद्वैतवादः पश्चात्कालाविर्भूतेषु वैदिकग्रन्थेष्वभिवृद्धिं प्रापितः लौकिकसंस्कृतकालोत्पन्ने वेदान्तशास्त्रे परं परिपोषं नीतश्चाद्यत्वेऽपि भारतीयेषु लब्धास्पदो दृश्यते

ऋग्वेदीयेषु प्राचीनतरेषु सूक्तेषु तत्तद्देवतानां वर्णनावसरे तासामेकैकस्या अपि सर्वोत्कृष्टत्वं सर्वतन्त्रस्वतन्त्रत्वं च वर्णितमवलोकयन् मोक्षमूलराचार्यः सर्वदेवतोत्कर्षवाद एव मन्त्रकाराणा-

मभिमत इत्याविष्टत । वस्तुतस्तु हार्मरिकसूक्तेष्वप्युपलभ्यमानमेवं-रीत्या वर्णनं केवलमतिशयोक्तिरेव । यथा नाम स्तोतारः स्वय स्तोत्रविषयीकृतां तां तां देवतां सर्वोत्कृष्टत्वेन वर्णयन्तीति स्वाभा-विकमेवैतत । न तु वस्तुतस्तेषां सर्वदेवतोत्कर्षप्रतिपादने तात्पर्यम । अत एव सर्वत्रापि देवतानामुत्कर्षापकर्षौ जानन्तस्ते सोमयागे तासां तारतम्येन स्थानानि परिकल्पयन्ति ॥

ऋग्वेददृष्टया देवाः सर्वे जनिमन्तः । तथा हि—केचि-द्देवाः द्यावापृथिवीभ्यामपरे केचिद्देवतान्तरेभ्यश्चोत्पन्नत्वेनोपवर्ण्य-न्ते । एतेन तेषां भिन्नवंशाश्रयत्वं ध्वन्यते । उक्ताश्च तथाविध-त्वेन केचित प्राचीना देवाः । नापि देवाः प्रथममर्त्यधर्माणो बभूवुः, यतो ह्यमर्त्यत्वं तेषु पश्चादग्निसावित्रीप्रमुखैर्देवैर्लम्भितत्वेन सोमपानकर्मणा स्वयं सम्पादितत्वेन च श्रूयते । अग्नीन्द्रादयः केचिद्देवा निर्जरत्वेन निर्दिष्टाः । परन्तु निर्जरत्वमिदं मन्त्रकारै-र्नित्यत्वेन विवक्षितमाहोस्विदनित्यत्वेनेत्यत्र न किञ्चिद्गमकमुपलभ्यते । लौकिकसंस्कृतग्रन्थेषु तावद्देवानामपि प्रलयपर्यन्तमात्रावस्थायित्व-मभ्युपेत्य तदिदं निर्जरत्वमनित्यमित्युक्तम् ॥

देवानामाकारः पुरुषविधः । अत एव ते मनुष्योचितैः शिरोमुखचक्षुर्भुजपाणिपादाद्यवयवै संयुक्ताः स्तूयन्ते । अथापि तेषां शरीरं च्छायारूपमदृश्यं च वर्ण्यते । तथा तत्तदङ्गान्यपि तेषु कर्मकौशलसमर्थनार्थमारोपितान्येव । तथा ह्यग्नेः केवला

ज्वालैव तस्य रसनाद्यङ्गत्वेन वर्ण्यते । एवं सूर्यदेवस्य हस्ता नाम तस्य किरणा एव । तस्य चक्षुश्च केवलं तदीयं मण्डलमेव । एवमादिरीत्या देवानां पुरुषविधत्वस्यारोपविधया कल्पितत्वात् तत्तद्देवतासु तत्तत्प्राकृतपदार्थगतानां धर्माणामेव पुरःस्फुरणाच्च मन्यामहे मन्त्रकाराणां देवतासु परमार्थतः पुरुषविधत्वमविवक्षितम् । अत एव तैर्देवताप्रतिमानां तत्सद्भावानुमापकानां देवालयानां वा नामापि न प्रस्तूयते । या हि देवताप्रतिमाः सूत्रग्रन्थेष्वैदम्प्राथम्येन निर्दिष्टा उपलभ्यन्ते ॥

केचिद्देवाः योधा इव सन्नद्धवर्माणः समावद्धशिरस्त्राणाः करधृतकुन्तकुठारधनुर्बाणाद्यायुधाश्च श्रूयन्ते । ते सर्वे तेजोमयैर्विमानैरन्तरिक्षमार्गेण सञ्चरन्ते । प्रायेणाश्वास्तेषां रथस्य वोढारः । क्वचिद्गावोऽजा हरिणा वा वहन्ति । स्वकीयैर्विमानैस्ते सवनभूमिं प्राप्य स्वस्वहविर्भागान् गृह्णन्ति । अग्निर्वा तान् स्वर्गलोकं नीत्वा देवेभ्योऽर्पयति । ते सर्वेऽप्येकत्रैव शान्तात्मनो निवसन्ति । तेषामिन्द्रः परं क्वचित् क्वचित् सङ्ग्रामाभिलाषी धृष्टश्च श्रूयते ॥

फलितप्रयत्नैः सम्पूर्णमनोरथैश्च वैदिकभारतीयैः देवाः सर्वे महोपकारित्वेन दीर्घायुरारोग्याभ्युदयविधायित्वेन चोत्प्रेक्षिताः । रुद्रः पुनरेक एव तेषु नृशंसात्मकः । मनुष्याणां रोगादिरूपाः क्षुद्रा विपत्तयः क्षुद्रेभ्यः अतिवृष्ट्यनावृष्ट्यादयो महाविपत्तयः प्रबलेभ्यश्च वृत्रप्रमुखेभ्यो राक्षसेभ्यः सम्भवन्ति । तेषां वधेन विकसन्ति देवानामौदार्यादयो गुणाः ॥

देवानामाचारः सात्विकः । ते खलु सवत्र सरलगतयः सौजन्यसौशील्यादिमहागुणानां रक्षितारश्च श्रूयन्ते । परन्त्विद-मत्रावधेयं यत्—तादात्विकानां धार्मिकजनानामाचारा एव देवता-गतत्वेन वर्णिताः । अत एव च्छाद्मिकेषु विपक्षवर्गीयेषु परम-धार्मिकस्य वरुणस्य कौटिल्यप्रयोगो न निषिध्यते नापि दोषपक्षे परिगण्यते । वस्तुतस्तु देवानामाचारगुणास्तेषां प्रतापप्रभावाभ्या-मपकर्षिताः ॥

स्तोतृभिर्देवेभ्यः क्षमामनुग्रहं च प्रार्थयमानैस्तानुद्दिश्य हविषां सूक्तानां च समर्पणात् तेषां देवैः सह स्वामिचित्तानुवृत्ति-लक्षणः सेवकतासम्बन्ध एव ऋग्वेदे विवक्षितः । यत्किञ्चित्फल-कामनयैव तेषां तत्सेवायां प्रवृत्तिरित्ययमर्थः 'यदहं ते ददामि तन्मे प्रत्यर्पय' इत्येवमादिरूपैः प्रार्थनावचनैरवधार्यते । अपि च सूक्तै-र्मखैर्विशेषतः सोमोपहारैश्च देवानां शक्तिरुद्दीपिता भवतीत्यपि ऋग्वेदकाराः समामनन्ति । अपि च वैदिककाल एव समन्तात् प्रतिष्ठां गता पुरोहितोत्कर्षकल्पनाऽपि ऋग्वेद एवोपाक्षिप्ता दृश्यते । तदनु शुक्लयजुर्वेदे—देवास्तत्वविदां ब्राह्मणानामायत्ता भवन्तीत्यु-क्तम् । ब्राह्मणानि पुनस्ततोऽप्युपरि क्रमित्वा—इह द्वये देवाः सम्भवन्ति—एके सुराः अपरे भूसुरा ब्राह्मणाः इत्याचक्षते । अपि च ब्राह्मणानि सर्वेषां देवानां विचित्रतराणां प्रकृतिव्यापाराणां च यज्ञाज्ञावशवर्त्तित्वं परिकल्प्य यज्ञानां सर्वशक्तिमत्वमातिष्ठन्ते ॥

देवानां सङ्ख्या त्रयस्त्रिंशदिति ऋग्वेद एवाह । त्रिधा विभक्तस्यास्य प्रपञ्चस्य स्थानत्रयाधिवासित्वविवक्षया त्रेधा विभक्तास्ते देवा. 'त्रिरेकादश' इत्येवं बहुत्र निर्दिश्यन्ते । परन्तु नैषा परिगणना निश्शेषात्मिका । यतो हि त्रयस्त्रिंशतोऽन्येऽपि बहवो देवाः सूक्तभाजो दृश्यन्ते । नाप्यत्र नानाविधानां मरुद्गणानामन्तर्भावः ॥

तत्र व्यधिकैः समग्रै सूक्तैः स्तूयमानाः प्रधानदेवाः विंशतिसङ्ख्या अपि दुर्लभाः । तेषु २५० सूक्तैः स्तूयमान इन्द्रः, २०० सूक्तैः स्तूयमानोऽग्निः, शताधिकैः सूक्तैः स्तूयमानः सोमश्च प्रधानतमाः । वर्षदेवः पर्जन्यः मृत्युदेवो यमश्च त्रिभिस्त्रिभिः सूक्तै. स्तूयेते । अन्ये प्रधानदेवास्तु इन्द्राद्यपेक्षया न्यूनसङ्ख्यैः पर्जन्याद्यपेक्षयाऽधिकसङ्ख्यैश्च सूक्तैः स्तूयमानास्तदुभयमध्यगतानि नानाविधानि स्थानानि भजन्ते । इदं तावदत्रानुस्मरणीयं यद्—इदानी भारतीयैः सर्वोत्कृष्टं पदमधिरोपितौ विष्णुशिवौ त्रिसहस्रवत्सरीतः पूर्वमृग्वेदे विष्णुरुद्रत्वेन व्यपदिष्टाविन्द्रादिवत् प्रधानतमत्वेन परिगणनीयावपि तदपेक्षयाऽत्यन्तमप्रधाने स्थाने स्थापितौ । अथाप्यद्येव तदापि विष्णुर्दयालुत्वेन रुद्रः करालत्वेन च वर्णितौ दृश्यते ॥

तत्र द्युस्थानभाजां देवतानां मध्ये प्राचीनतमा द्यौरेव तस्या. 'ज्यूस्' इत्येतया ग्रीकदेवतया सह संवाददर्शनात् । द्यौरेषा देवती-

कृत्य वर्ण्यमानं व्योमैव । तत्र पुरुषविधत्वारोपः किञ्चिदेव कृतः । यतो हि तस्यां पितृत्वमात्रमारोप्यते । सैषा द्यौर्भूयसा पृथिव्या सह द्वन्द्वीकृत्य स्तूयते । तच्च द्वन्द्वं षड्भिः सूक्तैः प्रपञ्चमातापितृत्वेनोपवर्ण्यते । विद्युद्गर्जितवती द्यौर्वृष्टिद्वारा भुवनमाप्याययतीति हेतो. हम्भारवं कुर्वन् रक्तवर्णो गौरित्यभेदेन व्यपदिश्यते । अन्यत्र कचिन्नैशैर्नक्षत्रैर्विराजमाना सा मुक्तामालधारिणाऽश्वेनोपमीयते । कश्चिदृषिः विद्युन्मालालङ्कृतां तां दत्तार्गलामिव, अन्यः कश्चित् मेघान्तरितां तां स्मयमानामिव चोत्प्रेक्षते । बहुषु सूक्तान्तरेषु स्मिधातुरयं विद्योतनार्थे प्रयुक्तो दृश्यते । अत एव लौकिकसंस्कृतकवयः स्मितं सर्वत्र चक्षुःप्रतिघातिन्या प्रभयोपमिन्वन्ति ॥

अन्तरिक्षस्थानानां देवतानां मध्ये वरुणः प्रधानतमः । तस्मिन् पुरुषविधत्वारोपोऽतिमात्रं प्रवृत्तः । तस्मात् तदीयं मूलस्वरूपं सम्यगनभिज्ञायमानं केवलं तदीयस्वभावविशेषमात्रादनुमेयं वर्तते । ईदृशोऽयं विशेषः वरुणस्य भारतीयोपज्ञत्वाभावात् तन्नामधेयस्य द्यौरादिवत् प्राकृतपदार्थवाचकत्वाभावाच्चेत्याकलयाम । 'वरुणस्' इत्ययं शब्दः प्रथमं व्यापनशीले गगनरूपेऽर्थे प्रयुक्तत्वेनोपलभ्यमानः वर्णविकारनियमानां दुर्घटत्वेऽपि 'औरणस्' इत्यनेन ग्रीकशब्देन सगर्भ्यो विभाति । सोऽयं वरुणः यद्यपि इन्द्रादग्नेः सोमाच्चाल्पतरसङ्ख्यैः सूक्तैः स्तूयमानस्तदपेक्षयाऽधरीभूतस्तथापि महिम्ना वेदोक्तेभ्यः सर्वेभ्योऽपि देवेभ्य उत्कृष्टतमं स्थानमधिरूढो वाढमिन्द्रेण सह समानं स्थानं भजते । तत्रेन्द्रोऽप्रतिभटो वीरः ।

वरुणस्तु व्यावहारिकस्य पारमार्थिकस्य च ऋतस्य धारयितेत्येतावानस्ति तयोर्भेदः । तत्र वरुणस्तुतिपरा मन्त्राः सादरं नीतिधर्ममुपदिशन्ति । सोऽयमृग्वेदभागः सर्वथापि हीन्द्रस्तुतिरिव महतीं श्लाघामर्हति । प्रशान्तेन तस्य शासनेनैव द्युलोकवासिनः सूर्यचन्द्रतारादयो यथाकालमुदयन्तेऽस्तमयन्ते चेति तत्सूक्तादवगच्छामः । इन्द्रस्य तु रन्ध्रान्वेपित्वं समराभिलापित्वं च तद्गतत्वेन वर्ण्यमानैरनियतैरकालभवैश्चाशनिपातादिकर्मभिरभिव्यज्यते । वरुणस्य प्रभावः स्वभावश्च मन्त्रकारैरित्थं स्तूयतेः—वरुणस्याज्ञया द्यावापृथिव्योः पृथगात्मतया व्यवस्थानम् । स एव लोकस्य प्रकाशाय सूर्याभिधानां सौवर्णदोलां दिवि निरमात् । स एव च सूर्यस्य सञ्चाराय विशालं पन्थानमकल्पयत् । अन्तरिक्षे प्रतिध्वनन् वायुस्तस्य निश्वसितम् । तस्यैवाज्ञया चारुतरं प्रकाशमानश्चन्द्रो रात्रौ सञ्चरति । तथा ताराश्च तावद्दूरे स्थिता रात्रौ स्फुरन्ति दिवा निलीयन्ते च । तस्यैव प्रभावान्नद्योऽप्यविरतं स्यन्दन्ते, तथा स्यन्दमाना अपि न जातु समुद्रं जलेन पूरयन्ति । स एव विलक्षणरूपेण भाजनेन जलमापूर्य पर्वतेषु मेघावृतेषु तेन जलेन भुवमाद्रीकरोति । इत्थं वरुणोऽयमाकाशभवानां जलानामधिपतित्वेन वर्ण्यते । तस्य समुद्रेण सम्बन्धस्तु क्वचित्क एव ऋग्वेदे ॥

सर्वज्ञत्वं च वरुणस्य तत्र तत्राभिव्यज्यते । तथा हि स नभसि पक्षिणां डयनं, समुद्रे नावां चलनं, दूरगतेर्वायोः पन्थानं च जानाति । सर्वमुत्पन्नमुत्पत्स्यमानं वा रहस्यं वेत्ति । स

जनानां सत्यासत्ये अवगच्छति । तेन विना जन्तवो निमिषितुमपि न पारयन्ति । एवं कल्याणधर्मा भुवनस्य गोप्ता वरुणः सर्वोत्कृष्टमहिमत्वेन वर्णितः । तदाज्ञाविरुद्धेन पापकर्मणा तस्य मन्युरुपजायते । स तादृशान् पापीयसो भृशं दण्डयति । येन स पापकारिणो जनान् बध्नाति स पाशोऽपि ऋग्वेदे स्तूयते । यद्यप्ययमसत्यस्य हन्ता द्वेष्टा दण्डयिता च श्रूयते तथाप्यनुतापभाजामनुग्राहको भवति । न केवलमयं जनान् स्वकृतेभ्य एव किन्तु पितृकृतेभ्योऽपि पापेभ्यो मोचयति । यस्तु धर्ममुल्लङ्घमानोऽपि तं शरणं प्रपद्यते तमसौ परित्यजति । अपि च येऽज्ञानात् तदाज्ञामतिक्रामन्ति तानप्यनुगृह्णाति । वस्तुतो यथा ऋग्वेदेऽन्यदेवताकेषु सूक्तेषु लोकक्षेमाभ्यर्थनादयो विषया अपि वर्ण्यन्ते न तथा वरुणसूक्तेषु । एतदीयानि हि सर्वाणि सूक्तानि क्षमाभ्यर्थनमात्रपराण्येव ॥

पश्चाद्विश्वसृजः प्रजापतेर्लोकेशत्वकल्पनाव्यतिकरे, मन्यामहे, वरुणस्य महिमानः क्रमेण परिम्लाना अभूवन् । क्रमशस्तस्य जलाधीशत्वमात्रमवशेषितम् । अत एव पश्चादथर्ववेदे तदनन्तरं पुराणादौ च तस्य जलाधीशता परमुद्घुष्यते ॥

वरुणदेवताकात् कस्माच्चित्सूक्ताद् (७–८७) अपोद्धृत्याधस्तान्निदर्श्यमानैर्मन्त्रैस्तदीयस्तोत्राणां स्वारस्यं व्यक्तीभविष्यति:—

मोषु वरुण मृण्मयं गृहं राजन्नहं गमम् ।
मृळा सुक्षत्र मृळय ।

अपां मध्ये तस्थिवांसं तृष्णाविदज्जरितारम् ।
मृळा सुक्षत्र मृळय

यत्किञ्चेदं वरुण दैव्ये
जनेभिद्रोहं मनुष्याश्चरामसि ।
अचित्तीयत्तव धर्मा युयोपिम
मा नस्तस्मादेनसो देव रीरिषः ॥

ऋग्वेदे कर्मभेदाद्भिन्नाः पञ्च सौरदेवताः सन्ति । तासामेकः प्राचीनतमो मित्रः, यो हि सूर्यस्य कर्मणां मध्ये हितकारितारूप-कर्मप्रवृत्तत्वेन श्रूयते । इण्डो-ऐरोणियकालादवतीर्णोऽयं क्रमेण ऋग्वेदे आत्मनो रूपमपहाय वरुणाभेदं प्रपन्न. । अत एव ऋग्वेदे सर्वत्र वरुणेन सह द्वन्द्वीकृत्य स्तूयते । केवलमेकमेवाद्वितीयं सूक्तं (३–५९) पृथक्तया तं वर्णयति ॥

सौरदेवतानां मध्ये सूर्यः प्रधानतमः, यः खलु ग्रीकभाषायां 'हेलियस्' इत्युच्यते । सूर्यशब्देन तेजोमयत्वरूपस्यार्थस्याभिधानात् तस्य 'हेलियस्' इत्यनेन साजात्यमुपपन्नमेव । सूर्यस्य चक्षुरसकृ-

द्वर्ण्यते । तच्च देवानां चक्षुरुपसाऽऽनीयत इति च श्रूयते । सर्वसाक्षी सूर्यः भूमण्डले सर्वत्र गूढं सञ्चरन् समग्रं जीवजालं मनुष्याणां पुण्यपापे च पश्यति । मनुष्या सूर्येण प्रबोधिताः स्वाभीष्टं सम्पादयन्ति कर्माणि च कुर्वन्ति । स एव सर्वेषां चराचराणामात्मा रक्षिता च । स च सप्तभिर्वाजिभिरुह्यमानेन रथेन याति । सायमस्ताचलमवरूढस्तान् विश्रामयति (२–११५–४)—

यदेव युक्त हरितः सधस्था-
दाद्रात्री वासस्तनुते सिसस्मै ।

सूर्यः चर्मेव तमः पिण्डीकरोति । तस्योदये ताराश्चोरा इव विद्रवन्ति । स चायमुषसः क्रोडे विभ्राजते । स चोषसः पति । अग्निरूपेण तं देवा दिवि धारयन्ति । व्योमैकान्ते भ्रमन्नसौ खग इति गरुत्मानिति चोत्प्रेक्ष्यते । स वासराणि परिच्छिनत्ति, प्राणिनामायुश्च दीर्घीकरोति । दूरीकरोति दुःस्वप्नान् रोगांश्च । मित्रावरुणयोः पुरस्तादात्मनो निरागसः कथयितुमेनं जनाः प्रार्थयन्ते । सर्वे प्राणितस्तेन जीवन्तीति हेतोः स सर्वकर्तेत्युच्यते ॥

यथैव सूर्याय तथैवैकादश सूक्तान्यन्यस्मै सौरदेवाय सवित्रे विनियुक्तानि । स च सूर्यनिष्ठमुद्दीपकत्वांशं निर्वहति । सोऽयं सर्वातिशायी सुवर्णमयो देवः सौवर्णहस्तभुजाद्युपशोभितः सौवर्णरथाधिरूढश्च । स स्वकीयान् बलिनो दिगन्तपर्यन्तचुम्बिनः

सुवर्णमयान् भुजानुच्छ्रित्य सर्वान् प्राणिनोऽनुगृह्णाति प्रबोधयति च। स सुवर्णमयं रथमधिष्ठाय भुवनानि पश्यन् निम्नोन्नतमार्गाभ्यां परितो याति। स उषसः पश्चाद् धावति। हरिद्रकेश सविता सूर्यस्य किरणैः सह विद्योतमानः प्राचीतः स्वप्रभामुन्नयति। दुःस्वप्नान् दूरीकरोति, राक्षसान् मायाविनश्च दिगन्तरं प्रापयति। देवाना-ममृतत्वं मनुष्याणां दीर्घमायुष्यं च विधत्ते। परेतात्मानं सत्यलोकं च नयति। अन्ये देवाः सवितुः पन्थानमनुरुन्धते। मनुष्या इन्द्र-वरुणप्रभृतयो देवाश्च तस्येच्छां स्वतन्त्रं शासनं च निरोद्धुं नैव शक्ताः। सोऽयं सविता नैव बहुशः सूर्येणानुपक्तो दृश्यते। एकस्मिन् सूक्ते परं (२–३८) दिनान्तसूर्यत्वेन स्तूयते—

आशुभिश्चिद्यान्विमुचाति नून-
मरीरमदतमानं चिदेतोः।
अह्यर्षूणां चिन्न्ययाँ अविष्या-
मनु व्रतं सवितुर्मोक्यागात्॥

पुनः समव्यद्वितंत वयन्ती
मध्या कर्तोर्न्यधाच्छक्म धीरः॥

विश्वो मार्ताण्डो व्रजमा पशुर्गात्
स्थशो जन्मानि सविता व्याकः॥

ऋग्वेदीय सुप्रसिद्धः कश्चिन्मन्त्रः सवितारमुद्दिश्य प्रवृत्तस्तस्य वेदारम्भकाल एवाभिमतं प्रचोदकत्वं बोधयति । स च मन्त्रोऽद्या-प्यास्तिकैर्भारतीयैरहरहः सन्ध्योपास्तौ नियमेनोच्चार्यते । योऽयं मन्त्रः प्रतिपाद्यदेवतानुरोधात् सावित्रीति च्छन्दोऽनुरोधाद्गायत्रीति चोच्यते—(३–६२–१०)

तत्सवितुर्वरेण्यं
भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॥

विशेषतश्च तत्सूक्तेषु प्रेरणार्थकात् सूधातोर्निष्पन्नान्युच्चाव-चानि रूपाणि तन्नामत्वेनोपयुक्तानि दृश्यन्ते ॥

पूषा ऋग्वेदेऽष्टाभिः सूक्तैः स्तूयते । पूषा नाम पोषक इत्यर्थः । स च सर्वप्रधानभूतस्य सूर्यस्य पोषकत्वरूपं कर्म निर्व-हति । स चाविपालानां मुख्यो देवः । तस्य रथमजा वहन्ति । सोऽङ्कुशं च धरति । परलोकमार्गाभिज्ञः स मृतान् दविष्ठे पथि परिमुह्यतः पितॄणामन्तिकं प्रापयति । अपि च स मार्गरक्षको गोपालकश्च सन् हस्तधृतेनाङ्कुशेन गाः प्रचोदयति । इह लोके स मनुष्यान् मृगांश्च रक्षन् परलोके मृतानां पितृलोकगामिनं पन्थानं दर्शयंश्च परमोपकारी भवति ॥

अपरा सौरदेवता विष्णुः । यद्यप्ययं सूर्यसवितृपूषापेक्षया-ऽल्पतरैः सूक्तैः स्तूयमानः सूक्तसङ्ख्यापरिणामदृशा तदपेक्षयाऽधरीभूत. सौरदेवतानां मध्ये चतुर्थं स्थानमर्हति तथापि चरित्रदृशा प्रधानतमो भवति । यतो ह्ययमद्यत्वे भारतीयैः सर्वोन्नतं पदमारोपितयोर्द्वयोर्देवतयोरेकतरः । प्रधानभूतोऽस्य कर्मविशेषस्त्रेधा पदन्यास । इह चानेन पदन्यासेन प्रपञ्चस्य स्थानत्रये सूर्यस्यानुप्रवेशो विवक्षितः । तत्र तस्योन्नततमं पदं द्यौः, यत्र देवा. पितरश्च निवसन्ति । तस्य तल्लोकनिवासासक्तिरित्थमुपवर्ण्यते ऋषिभिः (१–१५४–५)—

तद॑स्य प्रि॒यम॒भि पाथो॑ अश्यां
नरो॒ यत्र॑ देव॒यवो॒ मद॑न्ति ।
उ॒रु॒क्र॒मस्य॒ स हि बन्धु॑रि॒त्था
विष्णो॑ः प॒दे प॑र॒मे मध्व॒ उत्स॑ः ॥

विष्णुशब्देनादौ सूर्यः सामान्यरूपो न विवक्षितः, किन्तु यः किरणैस्त्रैलोक्यं व्याप्नुवन् पादन्यासकारित्वेनोत्प्रेक्षित स तादृग्विशेषरूपो विवक्षितः । स एव बहुषु मन्त्रेषु मनुष्यस्योपकाराय त्रीणि पदानि निदधाविति श्रूयते ॥

अयमर्थो ब्राह्मणग्रन्थेष्वित्थमुपाख्यायते—विष्णुर्वामनरूपेण त्रेधा पदं निदधानो राक्षसापहृतां महीमुन्मोचयितुमवतीर्णः इति ।

अयमीदृशोऽस्य परोपकारितागुणः पश्चात्पुराणादौ वर्णितास्ववतार-कथासु स्पष्टीकृतः । लोकानुग्रहार्थं हि विष्णोरवताराः प्रवृत्ताः ॥

उषाः केवलमेकैव स्त्रीदेवता प्रायेण ऋग्वेदेऽखण्डसूक्तैः स्तूयते । सैव केवलमितरस्त्रीदेवतापेक्षया भूयांसि स्तोत्राणि भजते । सा हि ऋग्वेदे प्रायेण विंशत्या सूक्तैः स्तूयते । उषा नाम कान्ति-मतीत्यर्थः । अयं शब्दो लेतिनभाषागतेन 'औरोर' इत्यनेन, ग्रीक-भाषागतेन 'एओस्' इत्यनेन च सजातीयः । नैव तां वर्णयतः कवेर्हृदयादसन्निहितमासीत्तस्याः प्रकृतिस्वरूपम् । ननु सोमयागादौ तस्या हविर्भागाभावात् कथं तामृषयः प्राधान्येन स्तुवन्तीति चेद-वधेहि—उत्तरभारतवर्षे लोकोत्तरमात्मनो वैभवमाविष्कुर्वत्या-स्तस्याः सर्वातिशायिन्या शोभया समावर्जितमृषीणां चेतस्तस्या-स्तथा वर्णनायामासज्यत । आस्तामेतत् । सर्वथैव ऋषीणामन्या-दृशी सृष्टिरेव सा, न खलु तादृशं वर्णनारामणीयकं क्वचिदप्यन्यत्र मतग्रन्थेषु दृश्यते । न चात्र तदाकृतेश्चारुतादूषक पुरोहितानां वैदग्ध्यं व्यापारितम् । न चैव तद्वर्णनायाः नैसर्गिकशोभापकर्षहेतुः क्रियासम्बन्धोऽप्याहृतः ॥

उपस्तुतेश्चारुतोत्कर्षपरीक्षार्थमितस्ततः समाहृत्य तद्वर्ण-नाप्रकारान् वाचकानां पुरस्तादुपहरामः—उषा नाम तेजस्विनी कन्यका, नभसि जाता, दिवः सुता च । सा रात्र्याः स्वसा कान्तिमती । किञ्च सा स्ववल्लभस्य सूर्यस्य तेजसा

विद्योतते । स च तस्याः पश्चाद्भागे प्रकाशमानो युवेव युवतीं तामनुयाति । रक्ताश्वैः पशुभिर्वा नीयमानेन रथेन सा सञ्चरते । विलासोचितं वेषं परिगृह्य सा नर्तकीवात्मनो वक्षः प्रकटयति । तेजो वसाना कन्यका सा प्राच्यामुदेत्य स्वकीयं लावण्यमाविष्करोति । कृतमज्जनेव भ्राजमाना स्वकीयं सर्वाङ्गसौष्ठवं विवृणुते । अनुपमरूपेऽजस्रा सा नात्मनः कान्तिं क्षुद्रेभ्यो महद्भ्यो वा वस्तुभ्यः संहरते । सा दिवो द्वारमुद्घाटयति, गौर्गोष्ठेभ्येव तमसः कवाटमपावृणोति । समुद्योतमानास्तस्या मयूखा गोनिकरा इवाभान्ति । रक्षःपिशाचादिकं गाढान्धकारं च दिगन्तरं प्रापयन्ती सा रात्र्या नीलं वासः संस्रयति । सा पादोपेतान् प्राणिन उत्थापयति, पक्षिणो नभसि उत्पातयति च । सैव सर्वेषां प्राण आत्मा च । यदा हि सा प्रादुर्भवति तदैव सर्वे पक्षिणः स्वनीडान्निर्गत्य दश दिशो धावन्ति । मनुष्याश्च जीविकामन्विष्यन्ति । सैव तेजस्विनी मधुरमधुराणां कलकलारवाणामुत्थापयित्री मनोहराणां ध्वनीनामुत्पादयित्री च । दिने दिने सा नियते स्थाने समुद्भवन्ती न जातु नियतेर्देवानां चाज्ञां भञ्जयति । सर्वदा सा क्षुण्णेनैव पथा क्रामति । गन्तव्यमध्वानं जानती सा न कदापि विमुह्यति । यथा पुरमद्यापि द्योतमाना द्योतिष्यमाणा च सा न जातु जरसा मृत्युना वा ग्रसिष्यते ॥

प्रशान्तगम्भीराया, पुनः पुनरावर्तमानाया उषसः शाश्वतिकत्वं तद्विपर्यासेन मर्त्यानां जीवितस्य क्षणभङ्गुरत्वं च पर्यालोच-

यतामृषीणां चेतसि महती चिन्ता पदं चकार । आह च कश्चिदृषिः (१-११३-११)—

> ईयुष्टे ये पूर्वतरामपश्यन्
> व्युच्छन्तीमुषसं मर्त्यासः ।
> अस्माभिरू नु प्रतिचक्ष्याभू-
> दोते यन्ति ये अपरीषु पश्यान् ॥

अन्योऽपि कश्चिदाह (१-९२-१०)—

> पुनः पुनर्जायमाना पुराणी
> समानं वर्णमभिशुम्भमाना ।
> श्वघ्नीव कृत्नुर्विज आमिनाना
> मर्तस्य देवी जरयन्त्यायुः ॥

रमणीयतमादेकस्मादुषस्सूक्तादुद्धृता इमेऽधस्तना मन्त्राः वैदिकसूक्तानां चारुतातिशयं बोधयिष्यन्ति (१-११३)—

> इदं श्रेष्ठं ज्योतिषां ज्योतिरागा-
> च्चित्रः प्रकेतो अजनिष्ट विभ्वा ।

यथा प्रसूता सवितुः सवायँ
एवा रात्र्युषसे योनिमारैक् ॥

समानो अध्वा स्वस्रोरनन्त-
स्तमन्यान्या चरतो देवशिष्टे ।
न मेथेते न तस्थतुः सुमेके
नक्तोषासा समनसा विरूपे ॥

भास्वती नेत्री सूनृताना-
मचेति चित्रा वि दुरो न आवः ।
प्रार्प्या जगद्व्युनो रायो अख्य-
दुषा अजीगर्भुवनानि विश्वा ॥

एषा दिवो दुहिता प्रत्यदर्शि
व्युच्छन्ती युवतिः शुक्रवासाः ।
विश्वस्येशाना पार्थिवस्य वस्व
उषो अद्येह सुभगे व्युच्छ ॥

व्यञ्जिभिर्दिव आतास्व द्यौ-
दपकृष्णां निर्णिजं देव्यावः ।
प्रबोधयन्त्यरुणेभिरश्वै-
रोषायाति सुयुजा रथेन ॥

आवहन्ती पोष्या वार्याणि
चित्रं केतुं कृणुते चेकिताना ।
ईयुषीणामुपमा शाश्वतीनां
विभातीनां प्रथमोषा व्यश्वैत् ॥

उदीर्ध्वं जीवो असुर्न आगा-
दप प्रागात्तम आज्योतिरेति ।
आरैक् पन्थां यातवे सूर्याया-
गन्म यत्र प्रतिरन्त आयुः ॥

द्युस्थानभाजां देवानां मध्ये मुहुः स्तूयमानौ प्रातर्योगिनौ यमलरूपावश्विनौ । तौ दिवः पुत्रौ नित्ययौवनौ सुन्दरौ च । तौ सूर्यस्य दुहित्रा सूर्ययाऽधिष्ठितेन रथेन प्रयातः । यो रथः सूर्यवद् भ्राजते, यदीयान्यङ्गानि च सुवर्णमयानि । उषःप्रकाशारम्भात्

पूर्वं तयोरुदयः, यतो हि तयोरुदयकाले लोहितानां गवां मध्ये तमस्तिष्ठतीति श्रूयते । यदा तौ रथं योजयतस्तदोषाः प्रादुरस्ते ॥

अश्विनोः परहितकारिताभिव्यञ्जकानि बहून्युपाख्यानानि श्रूयन्ते । तौ लोकान् शोकाद्विमोचयत, जनान् नावा नौभिर्वा समुद्रादुत्तारयतश्च । प्रकृत्या तौ द्विविजौ भिषजावन्धाननन्धान् पङ्गूनपङ्गूंश्च कुरुतः । इदमेकं तयोरतिविचित्रमुपाख्यानं यत्— विश्पला नाम काचिद्युवतिः कस्मिंश्चिदायोधने भग्नचरणा ताभ्या-मायसेनाङ्गेन संयोजिता श्रूयते । तावेतौ ग्रीकोपाख्यानप्रसिद्धाभ्यां ज्यूसपुत्राभ्यां हलनसोदराभ्यां 'डियस्कौराय्' इत्येताभ्यामश्वपुरु-षाभ्यां सह साजात्यं भजतः । अथ चरित्रकारैरभ्यूहनीयमश्विनो-र्मूलस्वरूपं किमिति चेत्—सन्ध्याकाले सम्भिन्नौ तमःप्रकाशौ वा सायम्प्रातस्तारके वा स्यातामिति मन्यामहे ॥

अन्तरिक्षस्थानभाजां देवानामिन्द्रः प्रधानतमः । अयमिन्द्रो भारतीयानामिष्टतमा सामाजिकी च देवता । तस्य प्रधानतमत्वं च ऋग्वेदे चतुरंशाधिकानां सूक्तानां तत्स्तुत्यर्थं प्रवृत्तत्वा-दवगम्यते । सोऽयमिन्द्रः वेदोक्तदेवतान्तरापेक्षयाऽधिकतरैः पुरुष-धर्मैः नानाप्रकारैराख्यानैश्च संयोजितः स्तूयते । अथापि तस्य नैसर्गिकाः स्वभावविशेषा एतैः कल्पनाविशेषैर्न बाधिताः । अतस्ते सुबोधा एव । स च प्रथमं वृत्रपदाभिधेयस्य अवग्रहस्या-न्धकारस्य वा हननेन जलमोचनं प्रकाशानयनं च कुर्वन्नशनिदेवो-

ऽभून् । अयमेवार्थो वृत्रासुरवधादिरूपस्य नदीयोपाख्यानस्य मूल-भूतोऽशः । एतदुपाख्यानमेव तस्य पुनः पुनरावर्तमानत्वेन वर्णने ऋषीन् प्रेरयामास । इन्द्रोऽयं गृहीतवज्रायुधः सोमपानाघूर्णितः प्राधान्येन मरुद्भिः परिवारितः साटोपं समराङ्गणं प्रविशति । तस्य समरोऽतिदारुणः । वृक्षमिव इन्द्रे वज्रेण वृत्रं पाटयति सति द्यावापृथिव्यौ भयेन कम्पेते । एवंरीत्यायमिन्द्रः सर्वदैव पदे पदे सङ्ग्रामाय प्रवर्तमानः श्रूयते । एतच्च केवलमुपाख्यानान्तर्लीनं प्रकृतिस्वरूपमेव परामृशति । अपि च इन्द्रस्य विक्रमान् वर्णयन्तः कवयो झंझावातगतान् गुणान् प्रस्तुवन्ति । नायमिन्द्रस्तत्र वृष्ट्यु-त्पादकत्वेन वर्णितः, किन्तु अपां नदीनां वा प्रतिबन्धविघातकत्वेन । अपि च विद्युद् अर्गलत्वेन, अशनिः गवां हम्भारवत्वेन व्यालानां गर्जितत्वेन चोत्प्रेक्ष्यते । मेघश्च—गौः ऊधः वसन्तः चरुः इत्यादिभिः शब्दैर्निर्दिश्यते । किञ्च मेघाः 'अद्रयः' इत्युच्यन्ते, इन्द्रेण मोचिता गाः परिवारयन्तः स्तूयन्ते च । अपि च ते 'पर्वताः' इत्युच्यन्ते, यच्छृङ्गनिवासिनोऽसुरा इन्द्रेणाधःपात्यमानाः श्रूयन्ते च । किञ्च ते राक्षसानां 'पुराणि' इति व्यपदिश्यन्ते, यानि सङ्ख्यया नवतिरेकोनशतं शतं वा भवन्ति । तानि च—चलानि, शरदिजानि, अयोमयानि, शिलामयानि, इत्यभिधीयन्ते । मन्त्र एकस्मिन् (१०–८९–७)—इन्द्रो वृत्रं जघान, पुराणि सञ्जहार, सिन्धून् लिलेख, गिरिं बिभेद, गाः स्वमित्रसाच्चकार, इत्येवंरूपाणि तत्सम्बन्धीन्युपाख्यानान्युपाक्षिप्तानि दृश्यन्ते । तत्र वृत्रोपाख्यानस्य प्राधान्यादिन्द्रो 'वृत्रहा' इति नाम्ना प्रसिद्धः ।

अधस्तादुदाह्रियमाणा मन्त्राः इन्द्रवृत्रयोः सङ्ग्रामस्य वृत्तान्तं बोधयिष्यन्ति (१–३१)—

इन्द्रस्य नु वीर्याणि प्रवोचं
यानि चकार प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द
प्रवक्षणा अभिनत्पर्वतानाम् ॥

वृषायमाणो वृणीत सोमं
त्रिकद्रुकेष्वपिबत्सुतस्य ।
आसायकं मघवा दत्तवज्र-
महन्नेनं प्रथमजामहीनाम् ॥

नास्मै विद्युन्नतन्यतुः सिषेध
न यां मिहमकिरद्ध्रादुनिं च ।
इन्द्रश्च यद्युयुधाते अहि-
श्चोतापरिभ्यो मघवा विजिग्ये ॥

अतिष्ठन्तीनामनिवेशनानां
काष्ठानां मध्ये निहितं शरीरम् ।

वृत्रस्य निण्यं विचरन्त्यापो
दीर्घं तम आशयदिन्द्रशत्रु ॥

प्रकाशसूर्ययोराविर्भावो जलमोचनकर्ममूलको वर्ण्यते । यथा—मनुष्याणां कृते जलं मोचयन्निन्द्रः स्वकीयेन वज्रेण अहिरूपं वृत्रं विदार्य प्रत्यक्षसूर्यं दिवि स्थापयामास, यद्वा वृत्रे निहते सूर्य एवात्मानं दर्शयामासेति हि श्रूयते ॥

एवमिन्द्रः क्रमेण समरप्रियो देवः संवृत्तः । भूमिष्ठानामरातीनामुन्मूलने देवतान्तरापेक्षयाऽयं बहुतरं साह्यमाचरन् स्तूयते । उक्तं चैकेन ऋषिणा—इन्द्रोऽयमार्यवर्णानामुन्नमयिता कृष्णवर्णानामवनमयिता चेति । अन्यत्र चान्यनोक्तम्—इन्द्रः पञ्चाशत्सहस्रसङ्ख्यान कृष्णगात्रान् दिगन्तरं विद्राव्य तेषां दुर्गाणि बभञ्जेति । एतदीयाः सङ्ग्रामाः गवेच्छया प्रवृत्तत्वाद् 'गाविष्टय' इत्युच्यन्ते । तस्य प्रसादाश्च सङ्ग्रामविजयस्य फलत्वेन वर्णिता. ॥

अधस्तादुदाह्रियमाणं मन्त्रद्वयं तदीयमहिमानुवर्णनप्रकारं विशदीकरिष्यति (२–१२)—

यः पृथिवीं व्यथमानामदृंहत्
य. पर्वतान् प्रकुपिताँ अरम्णात् ।

यो अन्तरिक्षं विममे वरीयो
यो द्यामस्तभ्नात् स जनास इन्द्रः ॥

द्यावाचिदस्मै पृथिवी नमेते
शुष्माच्चिदस्य पर्वता भयन्ते ।
यः सोमपा निचितो वज्रबाहु-
र्यो वज्रहस्तः स जनास इन्द्रः ॥

अत्यन्तारोपितपुरुषधर्मोऽयमिन्द्रो नानाविधान्यधर्म्याणि कर्माणि कुर्वन् स्तूयते । तथा ह्ययं बहुत्रोच्छृङ्खलं प्रवर्तमानः शिष्टाचारविरुद्धानि हिंसाकर्माण्याचरन्नात्मनः पितरं हन्ति, उषसो रथं च भञ्जयति । विशेषतश्चायं सोमपानरतः सङ्ग्रामाय गच्छन् विक्रमप्ररोचनार्थं प्रभूतं सोमं पिबतीति श्रूयते । अपि चैकस्मिन्नाध्यात्मिके सूक्ते (१०-११०)—सोमपानोन्मत्तोऽयमिन्द्र आत्मनो महिमानं बलं च विकत्थते । यद्यपीदं सूक्तं कवितासौन्दर्यविकलत्वादप्रधानं तथाप्यात्मश्लाघाप्रवर्तकस्योन्मादमूलकस्य मानुष्यकचेतोविकारस्य विषये प्रथमकृतित्वादत्यन्तमादरणीयं भवति । इह तावदिन्द्रस्याचाराणां गुणदोषान् विवेचयद्भिरस्माभिरिदमेकं न जातु विस्मरणीयं यत्—सोमपानजनितं उन्मादो मन्त्रकारैर्धर्माङ्गत्वेनाङ्गीकृतः, इति ॥

अवस्तायामिन्द्रशब्देन कश्चिद्राक्षसोऽभिधीयते । किन्तु वेदे विशेषतः प्रयुक्तः 'वृत्रहा' इत्ययं शब्दोऽवस्तायां 'वरेत्रघ्न' इत्येवंरूपेणोपलभ्यमानो जिष्णुदेवनापरत्वेन प्रयुज्यते । इत्थं च पूर्वमिण्डो-एेरेणियकालेऽपि वेदगतस्य वृत्रहाख्यस्य जिष्णोरिन्द्रस्य समानगुणशीलः कश्चिद्देवताविशेषो बभूवेति शक्यमनुमातुम् ॥

चरित्रदृशा सादृश्यविचारे—ऋग्वेदे समानपदवीमधिरोपितयोरिन्द्रावरुणयोर्मध्ये वरुणः पूर्वमिण्डो-एेरेणियकाले इन्द्रापेक्षयोत्कृष्टतरं पदमारोपितोऽभूत् । स एवार्वाचीने वैदिककाले इन्द्रादधः कृतः । इन्द्रस्तु प्रातिलोम्येन ब्राह्मणेतिहासादौ समुत्कृष्टं पदमारोपितः स्वर्गाधिपतीकृतः । पुराणादिष्वपि ब्रह्मविष्णुशिवानामाज्ञामनुवर्तमानत्वेनोक्तोऽप्ययं स्वर्गाधिपत्यान्न प्रच्यावित. ॥

अन्तरिक्षस्थानानां मध्ये तिस्रः क्षुद्रदेवताः विद्युत्सम्बन्धभाजो दृश्यन्ते । तासामन्यतमा 'त्रिता' नाम ऋग्वेदे तत्र तत्र विप्रकीर्णेषु मन्त्रेषु स्तूयमाना । नास्या मूलस्वरूपं सम्यगवभासते । मन्यामहे—त्रितेत्ययं शब्दो ग्रीकभाषागतेन 'त्रितोस्' इत्यनेन दृष्टसंवादस्तृतीयमित्यर्थे शक्तः दिवि विद्युद्रूपेण वर्तमानमग्नेस्तृतीयं रूपमाह । अस्या एव यौगिकं नामधेयं 'आप्त्यम्' इति । तच्च अम्मयमित्यर्थे शक्तम् । सैषा त्रिता पूर्वमिण्डो-एेरेणिकालेऽप्यवर्तिष्ट । दृश्यते ह्यवस्तायामप्यस्यास्तदेव रूढं यौगिकं च नामद्वयम् । तस्या इन्द्रस्य च स्वभावगुणानां साम्यात् कालक्रमेण तयोरभेदः

समजनीत्याकलयामः । द्वितीया च देवता 'अपांनपात्' समाख्या । अपांनपादित्यपां पुत्र इत्यर्थः । या खलु ऋग्वेदे विरलतया निर्दिश्यमानाऽपि इण्डो-ग्रेगियकालादवर्नीणा प्राचीना देवता । सैषा विद्युद्भासा निरिन्धना चाप्सु दीप्यमाना स्तूयते । तस्मादसंशयमेषा सजलैर्मेघैः समुत्पाद्यमानो विद्युद्रूपोऽग्निरेव । तृतीया 'मातरिश्वा'ख्या देवता । एषाऽपि ऋग्वेदेऽत्यल्पमेव प्रस्तूयते । ग्रीकभाषागता 'प्रोमेथियस्' समाख्या देवतैवैषा स्वर्लोकाद् भुवमानीतो गूढाग्निरित्युपाख्यायते । तस्मादेषाऽपि देवता रूपान्तरमनुप्राप्तोऽग्निदेव एव । क्वचिदनयोरग्निमातरिश्वनोरभेदोऽप्युपवर्णितः । ऋग्वेदादन्येषु वेदेषु तत्पश्चात्कालाविर्भूतेषु ब्राह्मणादिग्रन्थेषु च मातरिश्वशब्दो वायुपर्याय. परिणतः ॥

*

रुद्रविषये ऋग्वेदस्य तदनन्तरकालिकग्रन्थानां च महद्वैलक्षण्यमवलोक्यते । तथाहि—ऋग्वेदे रुद्रः केवलं चतुर्भिः पञ्चभिर्वा सूक्तैः स्तूयते । तदीयं नामधेयं च विष्णुनामापेक्षया वैरल्येन निर्दिष्टम् । प्रायेण स धनुर्बाणधारी श्रूयते । विशेषतश्च विद्युद्दण्डो वज्रायुधं च तदीयत्वेन स्तूयते । स च वन्यो हिंस्र इव भयङ्करो घातुकश्च वर्ण्यमानः दिविजरक्तसूकरत्वेनोत्प्रेक्ष्यते । तद्विषयकाणि सूक्तानि सर्वाण्यपि प्राधान्येन तदीयदण्डस्य भयानकत्वं तस्य क्रोधाकुलत्वं च वर्णयन्ति । सामादिवेदेषु तस्य द्रोहचिन्तावुद्धिरपि विशेषत. स्तूयते । इत्थमाशिवस्यापि तस्य शिव इति नामधेयं ऋग्वेद

एवाविर्भूतमर्वाचीनेषु वेदेषु बाहुल्येन प्रयुक्तं च दृश्यते । लौकिक-संस्कृतकाले तु तस्य तदेव नामधेयं प्रसिद्धमभूत् । नन्वशिवस्य तस्य शिव इति नामकल्पनं कथमुपपद्यत इति चेदवधेहि—रुद्रोऽयं न राक्षसवर्गवदात्यन्तिकद्रोहकारी । यतो ह्ययमुद्धरति मनुष्यान् मृगांश्च विपद्भ्यः, अनुगृह्णाति च तानभ्युदयदानेन । अपि चास्य व्याधिप्रतीकारशक्तिः प्राधान्येन निर्दिश्यते । महाभिषगसाविति स्तूयते च ॥

ऋग्वेदीयदेवतासु मरुतोऽपि प्रधानाः । ते च त्रिःसप्त-सङ्ख्याः त्रिष्षष्टिसङ्ख्या वा भवन्ति । ते रुद्रस्य चित्रवर्णाया मेघधेन्वाः पृश्न्याश्च पुत्राः । जायमानास्तेऽग्निवद् भान्ति । क्वचिच्च ते विद्युतः प्रहासादुत्पन्नत्वेनोक्ताः । त एते मरुतः करधृतकुन्तकुठारादिप्रहरणाः शिरस्त्राणधारिणो यूथचारिणः युवानः समरवीरा । अपि च ते कङ्कणनूपुरादिभिः सुवर्णाभरणैरलङ्कृताः श्रूयन्ते । तथा हि (२–३४)—

द्यावो नस्तृभिश्चितयन्त खादिनो
व्यभ्रिया न द्युतयन्त वृष्टयः ॥

तेऽग्निमयी विद्युतं हस्तेन धरन्तः विद्युदुज्ज्वलैः सुवर्णमयै रथैः सञ्चरन्ते (१–१३८–८)—

अवस्मयन्त विद्युतः पृथिव्या
यदी घृतं मरुतः प्रष्णुवन्ति ॥

मरुतस्ते चित्रवर्णैस्तुरगैर्विचरन्ति । क्वचिन् ते वायूनश्ववद् धुरि नियोजयन्तः श्रूयन्ते ॥

मरुतः सिंहसूकरादय इव क्रूराः करालाश्च । रथस्य चक्र-धारया ते पर्वतान् दारयन्ति (८—७—४)—

वर्षन्ति मरुतो मिहं
प्रवेपयन्ति पर्वतान् ।
यद्यामं यान्ति वायुभिः ॥

ते वनाधिपतीन् विश्रृणन्तो वनगजा इव वृक्षानुन्मूल्य कवलीकुर्वन्ति (५—६०—२)—

वनाचिदुग्रा जिहते निवो भिया
पृथिवी चिद्रेजते पर्वतश्चिन् ॥

वृष्टेरुत्पादनमेव मरुतां प्रधानतमं कर्म । तथा हि श्रूयते—वर्षवासो वसानास्ते धारासारैः सूर्यस्य चक्षुरावृण्वन्ति । क्षीरेण ते

भुवमार्द्रीकुर्वन्ति । घृतं वितरन्ति । स्तनितमुत्पादयन्ति । उत्सं चानवरतं प्रस्यन्दयन्ति । मधुना भुवमापूरयन्ति । नभोमण्डलगतं जलमधः पातयन्ति च (१–१–१६८)—

प्रतिष्टोभन्ति सिन्धवः पविभ्यो
यदभ्रियां वाचमुदीरयन्ति ॥

वायोर्ध्वनिना मरुत एते गायकत्वेनोत्प्रेक्ष्यन्ते । एवम्भूतास्ते देवासुरयुद्धेष्विन्द्राय महदुपकुर्वन्ति । स्वर्गीयसङ्ग्रामेषु ते तस्य शाश्वतिकाः सहाया ॥

वातापरनामधेयो वायु ऋग्वेदे नातीव प्रधानः । यतः स केवलं त्रिभिः सूक्तैः स्तूयते । तत्रात्यन्तारोपितमनुष्यधर्मो वायुर्भूयिष्ठमिन्द्रेण, अत्यल्पारोपितमनुष्यधर्मो वातः वृष्टिदेवेन पर्जन्येन च द्वन्द्वीकृतः । तयोर्वायुर्मनोजवो नादकृद्वेगश्च । अस्ति तस्यारुणेन वाजियुगलेनोह्यमानः कश्चिद्रथः । हैमपीठालङ्कृतेऽभ्रङ्कषे यस्मिन्निन्द्रस्तस्य सहचरो भवति । वातः केवलवायुपर्यायत्वेनापि प्रयुक्तो दृश्यते । वाधातोर्निष्पन्नोऽयं वातशब्द, बहुत्र वातिक्रियया योजितो दृश्यते । तस्य भवनेऽमर्त्यधर्माणां निधीयमानत्वात् स रुद्र इव रुजमुपशमयितुमायुर्द्राघयितुं च प्रभवति । तमुपश्लोकयन् कश्चिदृषिराह (१०–१६८)—

वातस्य नु महिमानं रथस्य
  रुजन्नेति स्तनयन्नस्य घोषः ।
दिविस्पृग्यात्यरुणानि कृण्व-
  न्नुतो एति पृथिव्या रेणुमस्यन् ॥

अन्तरिक्षे पथिभिरीयमानो
  न निविशते कतमच्च नाहः ।
अपां सखा प्रथमजा ऋतावा
  क्वस्विज्जातः कुत आबभूव ॥

आत्मा देवानां भुवनस्य गर्भो
  यथावशं चरति देव एषः ।
घोषा इदस्य शृण्विरे न रूपं
  तस्मै वाताय हविषा विधेम ॥

अन्य कश्चिदन्तरिक्षस्थानः पर्जन्याख्यो वृष्टिदेवः । स च केवलं सूक्तत्रयेण स्तूयते । ऋग्वेदे तस्य नामधेयमाहृत्य त्रिंशद्वारं निर्दिष्टम् । केषुचिन्मन्त्रेष्वयं शब्दो मेघवाचको दृश्यते । अतस्तस्मिन झञ्झावातगतैर्धर्मैरेव देवतात्वमारोप्यते । सवृष्टिको मेघः—'ऊधः, भाजनं दृतिः' इत्यभिधीयते च । अपि च बलीवर्देनो-

पमीयपानः स पर्जन्यः प्रकृत्या वृष्टेरुत्पादकः । तस्य कर्माणि रसिकया भङ्ग्या वर्णितानि (५–८३)—

विवृक्षान् हन्त्युत हन्ति रक्षसो
  विश्वं विभाय भुवनं महावधात् ।
उतानागा ईषते वृष्ण्यावतो
  यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः ॥

रथीव कशयाश्वाँ अभिक्षिप-
  न्नाविर्दूतान् कृणुते वर्ष्याँ ३अह
दूरात्सिंहस्य स्तनथा उदीरते
  यत्पर्जन्यः कृणुते वर्ष्यं नभः ॥

प्रवाता वान्ति पतयन्ति विद्युत
  उदोषधीर्जिहते पिन्वते स्वः ।
इरा विश्वस्मै भुवनाय जायते
  यत्पर्जन्यः पृथिवी रेतसावति ॥

अभिक्रन्द स्तनय गर्भमाधा
  उदन्वता परिदीया रथेन ।

इति सुकर्प विर्पित न्यंञ्चं
सुमा भवन्तूद्वता निपादाः ॥

चतुर्भिः सूक्तैरापो देवतात्वेन वर्ण्यन्ते । तत्र तासु मातृत्वं मुग्धजायात्वं यज्ञेष्वागत्य वरप्रदातृत्वं चारोप्यते । ता मातरः सत्योऽपां नपान्नामकं पूर्वोक्तं वैद्युतमग्निं जनयन्ति । दिव्या आपः कालुष्यमपहरन्त्यो धर्मलोपात् हिंसापापान् आपादमत्याच्च परित्रायन्ते । किञ्च ता भेषजं चिकित्सां दीर्घमायुष्यममृतत्वं च वितरन्ति । परमरमणीयासु युवतीषु युवेव सोमस्तासु रमते । स ताः कामीवोपसरति । ताश्च युवत्यो यूनस्तस्याग्रे प्रणमन्ति ॥

नद्यश्च नानाविधा ऋग्वेदे चेतनधर्मारोपेण देवतीकृत्य स्तूयन्ते । तथा ह्येकस्मिन् सूक्ते (१०—७५)—सिन्धुनदी, अन्यत्र क्वचित् (३—३३)—स्वस्वरूपे विपाट्छुतुद्र्यौ च वर्ण्यन्ते । तत्र तावत् सरस्वती समुत्कृष्टतमा नदीदेवता, यतो हि सा त्रिभिरखण्डैः सूक्तैर्बहुभिस्तत्रतत्र विप्रकीर्णैर्मन्त्रैश्च स्तूयते । किञ्चास्यां नद्यन्तरापेक्षया चेतनधर्मश्चातितरामारोपितः । तथापि ऋषयोऽस्या नदीत्वसम्बन्धं न सर्वात्मना परित्यजन्ति । सैषा मातृषु नदीषु देवतासु च श्रेष्ठा भवति । अक्षयं तस्या वक्षः सर्वाणि श्रेयांसि विदधाति । सम्पदं समृद्धिं पुष्टिं तुष्टिं सन्ततिं च वितरति । ऋषिः कश्चित् तस्याः

सकाशादात्मनोऽपरिचितदेशान्तरप्राप्तिर्माभूदित्यर्थयते । सा दिव, पर्वताग्राच्च सवनभूमिमवतरन्ती स्तूयते । अयमीदृश एवार्थो मन्यामहे वेदकालानन्तरभवेषु देवताख्यानेषु गङ्गाया द्युलोकोत्पन्नत्वेन तत पश्चाद् भुवमवतीर्णत्वेन च कल्पनायां हेतुः । तथा सरस्वती च ऋग्वेदे केवलं नदीदेवतात्वेन वर्ण्यमाना पश्चाद् ब्राह्मणग्रन्थेषु वाग्देवतापदमारोपिता पुराणादिषु वाचां बुद्धेश्चाधिदेवतात्वेनाभिषिक्ताऽन्ते ब्रह्मपत्नीभूयं प्रापिता च दृश्यते ॥

पृथुतरा पृथिवी मन्त्रत्रयात्मके केवलमेकस्मिन्नेव सूक्ते (५-८४) दिवः पृथग्भूता स्तूयते । न चैव तत्रापि ऋषिः सर्वथा तस्याः द्यवा सम्बन्धमपरामृशन् तत्सूक्तमुपसंहर्तुं शशाक । तथा हि तत्रैवं सा स्तूयते—

दृह्ळा चिद्या वनस्पतीन्
क्ष्मया दर्धर्ष्योजसा ।
यत्ते अभ्रस्य विद्युतो
दिवो वर्षन्ति वृष्टयः ॥

चेतनधर्मारोपस्तस्यामत्यल्प एव प्रवृत्तः । सा हि केवलं देवताव्यपदेशमात्रेण योजिता प्रत्यक्षरूपैव सर्वत्र वर्ण्यते ॥

पृथिवीस्थानानां देवतानां मध्येऽग्निः प्रधानतमः । अपि च वैदिकदेवतानां मध्येऽपि इन्द्रादनन्तरोऽग्निरेव, यतः खल्वयं द्विशताधिकैः सूक्तैः स्तूयते । इह तावद्यज्ञीयाग्निमवलम्ब्य सर्वेषां यज्ञकर्मणां प्रवर्तमानत्वात् तस्मिन्नग्नौ पुरुषविधत्वारोपोऽतिमात्रं कर्तव्योऽभूदृषिभिः । परन्तु लेतिनभाषागतेन 'इग्निस्' शब्देन दृष्टसंवादस्याग्निशब्दस्य केवलाग्निवाचकत्वेनापि प्रयोगात् तत्र नात्यन्तिकः पुरुषविधत्वोपचारः कृतः । तत्र वर्ण्यमाना अग्नेरवयवाः सर्वे यज्ञीयाग्निना सङ्गता एव । घृतेन प्रज्वाल्यमानोऽग्निः—घृतपृष्ठ, घृतमुखः, घृतकेशः, इत्युच्यते । किञ्चायं ज्वालाकेशः धूम्रश्मश्रुकश्चेति व्यपदिश्यते । अस्य परुषाः शुभ्राः सौवर्णा आयसा वा दन्ताः कान्तिमन्ति मुखानि च विद्यन्ते । अस्य जिह्वा एकाऽनेका वा । अयं क्वचिदश्वेनोपमीयते, अन्यत्र क्वचिदश्वोऽयमित्यभेदेन व्याह्रियते च । यज्ञीय हविर्देवानामन्तिकं नयन्नयं कर्मरथस्य धुरि नियोज्यते । सहसोत्थाय द्रुतगत्या देवानां सविधमुत्पतन्नयं बहुत्र सुपर्णेनोपमीयते । तीक्ष्णैरात्मनो दन्तैरयं वनानि खादति । अस्य प्रभा उषसः सूर्यस्य वा भासा सदृशी पयोदाश्रयां विद्युतमनुकरोति । किन्त्वस्य पदपङ्क्तयः परिधयश्च कृष्णवर्णाः । अस्य वाहा अपि कृष्णरेखोत्पादकाः । वायुना प्रेर्यमाणोऽयं वनमार्गेण गच्छति । वनानि व्याप्नुवन्नयं भूमिं मुण्डयन् नापितः श्मश्रूणीव तस्या केशान् कृन्तति । अस्य ज्वालाः समुद्रस्योर्मय इवोच्चैः

शब्दायन्ते । वनानि दन्दह्यमानोऽयं बलीवर्दवन्नर्दति । तृणानि भक्षयतोऽस्माद् दिवमुत्पततां स्फुलिङ्गानां स्वाङ्गीता भवन्ति पक्षिणः । ध्वजं खनन्निवायं धूमेनाकाशमुत्तम्भयति । अत एवायं धूमकेतुरित्युच्यते । सोऽयमग्निर्वायुना प्रचोद्यमानैर्धूम्रैररुणैर्वाऽश्वै-रुह्यमाने कस्मिंश्चिद्रथे सञ्चरति । यज्ञसारथिरयं देवनामन्वयितुं दिवं गच्छन्नश्वान् रथस्य धुरि नियोजयति ॥

ऋषयोऽस्य नानाजन्मानि नानारूपाणि नानास्थानानि च परामृशन्ति । ते ह्येनं काष्ठखण्डद्वयाभिघर्षणेनाहरहरुत्पद्यमानं वदन्ति । तौ काष्ठखण्डौ च सद्योजातं शिशुमिव ग्रहीतुमशक्य-मेनमुत्पादयन्तावस्य प्रसूजनयितारौ । शुष्कात् काष्ठात् सजीवो देवः समुत्पद्यते । शिशुरयं जातमात्र एव पितरावश्नाति । अस्यो-त्पादकत्वेन स्तूयमाना दश कन्यकाः काष्ठखण्डघर्षणार्थमूर्ध्वं प्रसा-रिताः दश कराङ्गुल्य एव । अपि चास्य निष्पत्तौ महत्याः शक्तेरपेक्षणादयं 'सहसस्पुत्रः' इत्युच्यते । होमार्थं प्रत्यहमहर्मुखे प्रज्वाल्यमानत्वादुपर्बुध इत्यभिधीयते । यद्यप्ययं सर्वेषां देवानां कनिष्ठस्तथापि ज्यष्ठोऽपि भवति । यतो ह्यनेन प्रथमो यागो निवर्तित । अपि चायमेकस्मिन्नेव मन्त्रे यद्येवायं पुराणस्तथाप्यभि-नव इति विरुद्धार्थैर्विशेषणैर्निर्दिष्टः ॥

अग्निराकाशजलादप्याविर्भवति, तथा दिवः समानीतत्वेनापि तत्र तत्रोपवर्ण्यते । इत्थं पृथिव्यामन्तरिक्षे दिवि चेति त्रिषु स्थानेषु जायमानोऽयमग्निस्त्रिरूपत्वेन स्तूयते तत्र तत्र । देवास्तं त्रेधा विभज्य तस्य त्रिविधं जन्म त्रीणि स्थानानि चाकल्पयन् । सोऽयमादौ दिवि ततो मर्त्येषु पश्चादप्सु च जातः । इत्थमादौ प्रवृत्तमिदमीदृश त्रित्वं पश्चाद्वैदिककाले प्रादुर्भूतानां विचित्रतराणां कल्पनाविशेषाणां मूलभूतत्वादत्यन्तमवधेयं भवति । नूनमिदमेव त्रित्वमवलम्ब्य ऋग्वेदकालस्यान्तिमे भागे लोकत्रयाधिवासित्वेन विभक्तानां सूर्यवाय्वग्नीनां त्रित्वं तथा ऋग्वेदेऽदृष्टमप्यतिप्राचीनत्वेनावधार्यमाणं सूर्येन्द्राग्नीनां त्रित्वं च परिकल्पितम् । एवं भारतीयैः पश्चात्काले सिद्धान्तितस्य ब्रह्मविष्णुशिवानां त्रित्वस्याप्येतदेव मूलम् । इदमेवाग्नेस्त्रित्वं ब्राह्मणग्रन्थेष्वेकस्यैव यज्ञीयाग्नेस्त्रेतारूपेण विभागे हेतुः ॥

तत्तदाश्रयभेदादप्यग्नेर्भेदो वर्ण्यते । तथा ह्ययं प्रतिगृहं प्रतिवसति । किन्तु बहुत्र दीप्यमानोऽयमेक एव । तथा बहुत्र विप्रकीर्णत्वेन स्थितोऽयमेक एव स एवायं राजा च । अन्येऽग्नयो वृक्षस्य शाखा इव तस्यैव विकासरूपाः । स नानाविधानि दिव्यरूपाणि धत्ते । विविधनामधेयो भवति । सर्वे देवास्तस्मिन्नेव लीनाः । यान् खलु परिधिररानिव स परिवेष्टयति । इत्थमग्नेर्नानारूपाण्यधिकृत्य प्रवृत्ता एते कल्पनाविशेषाः सर्वेषां देवानामेकदेवतात्मकत्वरूपमेकदेवतावादमुपस्थापयन्ति ॥

अग्निरयमनश्वरो भवति । स च नश्वराणां मध्ये स्वस्थान-मकल्पयत् । मर्त्यानां गृहमागतमेनं 'अतिथिः' इत्याहु । अय-मेक एव देवो 'गृहपति' शब्देन व्यपदिश्यते ऋग्वेदे ॥

अग्निरेष हविर्वाहकत्वाद् 'दूतः' इति यज्ञनिर्वाहकत्वात् 'पुरोहितः' इति चोच्यते । यथा तावदिन्द्रोऽप्रतिभटो योधस्तथै-वायमनुपमः पुरोहितः ॥

अग्निरयमुपासकानामनुग्राहकः । यस्तावदस्मै हवींष्यर्प-यति तमयं सहस्रेणाक्षिभिरीक्षते । स्वभक्तानामरातीन् शुष्केन्ध-नानीव भस्मसात्करोति । अशनिर्वृक्षानिव पापाशयानयं विध्यति । वृक्षाद्विटपा इवास्मात् सर्वेऽभ्युदयाः समुद्भवन्ति । अपि चास्मिन् सर्वे निधयः सम्भृताः, धनस्य द्वारमयमुद्घाटयति । अयमेवाका-शाज्जलं वर्षति । अतोऽयं मरुनिर्झर इवाह्लादजनकः । सोऽय-मग्निः गृहसम्पदं सन्ततिं सर्वविधानि श्रेयांसि च वितरति । इन्द्रस्तु जयलोप्त्रबलोत्साहादीनां प्रदाता ॥

अग्ने प्राथमिकं कर्म दहनं पापात्मनामुच्छेदनं च कुहना-त्मनामित्यवगम्यते । अतिप्राक्कालादागतोऽयमर्थः ऋग्वेदेऽप्युपवर्णितो दृश्यते । तथा हि श्रूयते—'अग्निः स्वतेजसा रक्षांसि निघ्नन् रक्षोहा भवति' इति । इदमीदृशं कर्म ऋग्वेदेऽध्वर्युवेदे च सवि-शेषमाग्निगतत्वेनैव स्तूयमानमुपलभ्यते ॥

सोमयागारम्भात् प्रभृति अग्नेरिव सोमस्यापि यज्ञक्रियासु प्राधान्यमन्वमन्यत । समग्रं नवमं मण्डलमन्यत्र तत्र तत्र विप्रकीर्णानि कानिचित् सूक्तानि च सोमदेवतामुद्दिश्य प्रवृत्तानि । इत्थं स्तोत्रपरिमाणदृशा—सोमोऽग्गृग्वेदीयदेवतानां मध्ये तृतीयं स्थानमर्हति । सोमलतायास्तद्रसस्य च सर्वदैव चक्षुषोरग्रे समुपस्थितत्वेनात्यन्तपरिचितत्वात् तत्र पुरुषविधत्वारोपे मन्दोत्साहा अभूवन् मन्त्रकाराः । अतः सोमे पुरुषविधत्वं पुरुषकर्माणि वा नात्यन्तमुपवर्ण्यन्ते । नवममण्डले च प्राधान्येन सोमलतायाः ग्रावाभ्यां मर्दनं, पश्चादूर्णामय्या शोधन्या तस्याः पावनं, पावितस्य रसस्य कुण्डे पूरणं पूरितस्य कुण्डस्य संस्तरे निक्षेपणं तस्य देवेभ्यः समर्पणं चेत्यादयो विषयाः प्रतिपाद्यन्ते । तानिमान् विषयान् ऋषयोऽपूर्णैरव्यक्तैश्च कल्पनाविशेषैः सरसीकृत्य सविनोदं वर्णयन्ति । तथा हि—स्वसृभूता दश योषाः विवस्वतो दश दुहितरो वा सोमं पुनन्तीति वर्ण्यते । अनेन दशभिः कराङ्गुलीभिः सोमस्य शोधनमेव विवक्षितम् । सोमलतामर्दनोपयुक्ता ग्रावाणश्चर्मोपरिष्टान्निधातव्या इत्यवगम्यते । पशुचर्मगालन्या पवित्रीकृतस्य सोमरसस्य कलशान्तः क्षरणं सरसया रीत्या वर्णयन्ति ऋषयः । तथा हि—सोमस्य धाराः महिषा इव कलशारण्यं विशन्ति । देवतैषा विहङ्गम इव कलशे वस्तुकामा पतति । पक्षी वृक्षमिव पिशङ्गोऽयं कलशमाश्रयति । कलशे जलेन सह मिश्रीभवन्नयं सोमः—वृषभः स्वयूथमिव रोरूयमाणो जलोत्सङ्गं प्रविशतीत्येवंरीत्या वर्ण्यते । अयं सोमस्तत्र कलशेऽपो वसानः स्तोतृ-

भिरुत्तेज्यमानो नृत्यति । इत्थमरण्ये परिक्रीडमानोऽयं तत्र दशभि कन्यकाभिः पवित्रीक्रियते । सोमोऽयमपां तनूजः, ताश्चास्य मातरः । यदा ऋत्विजस्तस्मिन् क्षीरं सम्मिश्रयन्ति तदा स गव्येन वाससाऽवगुण्ठ्यमानत्वेनोत्प्रेक्ष्यते ॥

कलशान्तः क्षरतः सोमस्य रवोऽतिशयोक्तेर्विषयीकृतः । तथा हि ऋषिः कश्चिदाह—मधुमत्तमः सोमस्य बिन्दु. सेनानिकर इवोच्चैरुद्घुष्यन् कलशान्तः प्रविशतीति । अपि चैष रवः सर्वत्र गर्जनमिति नर्दनमिति क्वचिन् क्वचित् स्तनितमिति चोच्यते । तथा सोमोऽपि वृषभसदृशत्वेन क्वचित् क्वचिद् वृषभत्वेन च व्यपदिश्यते । आपश्च क्षीरेण मिश्रिता अमिश्रिता वा गोशब्देन निर्दिश्यन्ते ॥

सोमस्य गौरवर्णत्वात् स तेजस्वित्वेन वर्ण्यते । तस्य हि किरणास्तत्र तत्र स्तूयन्ते । सूर्येणाप्यसौ बहुत्रोपमीयते ॥

तुष्टिजनकत्वात् पुष्टिकारित्वाच्च सोमस्य तत्पानममर्त्यत्वापादनक्षमत्वेनाभ्युपगतं मन्त्रकारैः । तथैव व्यपदिश्यते चायं ग्रीकभाषागतस्य 'अम्ब्रोसिय' शब्दस्य सगर्भ्येण 'अमृत' शब्देन । उद्दीपनसमर्थोऽयं सोम एव देवानाममरत्वं व्यधात् । सोऽयं सोमः स्वस्योपासकान् मर्त्यानमर्त्यान् विदधानो नित्यालोकमानन्दमयं च यमराजलोकं प्रापयति । एवं सोमस्य स्वाभाविक औषधगुणोऽपि वर्ण्यते । तथा ह्ययं रुग्णानाममृतायमानमौषधम् ।

सर्वप्रकारानामयानुपशमयति । अन्धं चक्षुष्मन्तं पङ्गुं गमनक्षमं च करोति ॥

सोमः पीयमानो गीतोद्गारमुत्पादयति । नाविको नावमिव स तं प्रवर्तयति । अपि च बहुतरान् मनोरथान् चेतस्यङ्कुरयति । एवं हि तस्य सेवितारो ब्रुवन्ति—अपाम सोमं. अभूम अमृताः. आगमाम ज्योतिः. अविदाम देवानिति । सोमस्येयमुन्मादकताशक्तिरतिमात्रमिन्द्रेऽभिव्यक्तत्वेन स्तूयते । इन्द्रो हि सोमपानोन्मत्तचित्तो विपक्षभूतैरन्तरिक्षचारिभिरसुरैः सह सङ्ग्रामाय गच्छन श्रूयते ॥

अपि च सोमः सर्वौषधीनां प्रधानतमत्वादोषधीनां नायक इति राजेति चोच्यते । तथा वनस्पतिरिति च व्यपदिश्यते ॥

अवस्तायां हयोम इवायं सोमोऽपि पर्वतवासित्वेन पर्वतप्ररोहित्वेन च स्तूयते । किन्तु तस्य प्रथमोत्पत्तिस्थानं स्वर्ग., ततः स भुवमानीतत्वेन वर्ण्यते । अयमर्थः सोमस्यानेतुः श्येनस्योपाख्याने संक्षिप्तः । तच्चोपाख्यानं केवलं काले विद्युतो वृष्टेश्च भूमौ पतनमात्रं परामृशतीत्याकलयन्ति सूरयः ॥

ऋग्वेदीयेष्ववर्वाचीनेषु केषुचित् सूक्तेषु सोमोऽयमिन्दुतुल्यत्वेन, अथर्ववेदे बहुत्र साक्षादिन्दुत्वेन च वर्ण्यते । यजुर्वेदे च विशेषतस्तारकाः सोमस्य पत्नीत्वेन निर्दिष्टाः । सोऽयमिन्दुसोमयो-

भेदः पश्चाद्ब्राह्मणग्रन्थेषु सर्वत्र साधारण्येनाभ्युपगतः । तत्र
हीन्दोः क्षयः पितृभिर्देवैश्च तद्गतस्यामृतस्य पानादुत्पद्यमानत्वेनोक्तः ।
एवमेकस्यामुपनिषद्यपि—इन्दुः सोमराजो देवानामन्नं तं देवा
अश्नन्तीत्याख्यातम् । अन्ततश्च लौकिकसंस्कृतग्रन्थेषु सोमशब्द-
श्चन्द्रपर्यायः संवृत्तः । यत्र हि चन्द्रो देवैः क्षयं सूर्येण वृद्धिं च
प्राप्यमाणत्वेन वर्ण्यते । विचित्रतरोऽयमेवंविधः सोमचन्द्रयोरभे-
दश्चन्द्रसाधारणानां दिविजत्वतेजस्वित्वतमोहन्तृत्वादिधर्माणां सोम-
गतत्वेन वर्णनादुत्पन्नः सम्भाव्यते । अपि च जले तैलबिन्दुवत्
सोमस्य स्फायमानत्वेन वर्णनं तद्रसबिन्दोरिन्दुशब्देन व्यवहारश्च
दृश्यते ऋग्वेदे । मन्यामहे अयमीदृशोऽर्थस्तस्येन्दुतुल्यत्ववर्णनायां
हेतुरासीत् । अत एवैकस्मिन् ऋग्वेदीये मन्त्रे कलशस्थितः सोमो
जलगतचन्द्रवदाभातीत्यभिहितम् । एवमादिप्रकारैः सोमसूक्तो-
पन्नैरव्यक्तैः कल्पनाविशेषैः सोमशब्दश्चन्द्रे लाक्षणिकः संवृत्तः
स्यात् ॥

ऋग्वेदावस्तयोः सादृश्ये परिभाव्यमाने—सोमोऽयं पूर्व-
मिण्डो-ऐरेणियकाले एव प्राधान्येन जनैः आराधितोऽभूत्, तमधि-
कृत्य बहून्युपाख्यानानि च कृतानीत्यवगम्यते । तथा हि—ऋग्वेद
इवावस्तायामपि पर्वतप्ररोहित्वं, विहङ्गमानीतत्वं, ओषधिरा-
जत्वं, दीर्घायुरापादनक्षमदिव्यौषधिविशेषत्वं अमर्त्यताकारित्वमि-
त्यादयो धर्माः सोमगतत्वेन स्तूयमाना उपलभ्यन्ते । अपि च
सोमस्य निष्पीडनं, निष्पीडिते रसे क्षीरमिश्रणं प्रथमं स्वर्गोत्पन्नस्य

तस्य पश्चाद्भूमावानयनं, सोमपानस्य दैव्यत्वं दिविजस्य तस्य भूमिष्ठादन्यत्वमित्यादयो विशेषाश्चोभयत्रापि तुल्या । अपि च सोमहओमयोः समानरूपाण्यन्वर्थानि नामधेयान्यपि श्रूयन्ते ॥

ऋग्वेदकाल एव क्रमेण प्राकृतेषु पदार्थेष्विव गुणेष्वपि देवतात्वारोपः कृत समवलोक्यते । तथा देवतीकृत्य वर्ण्यमाना गुणा, दशममण्डले परं तत्रतत्रोपलभ्यमानत्वादृग्वेदेऽतिपरिमिता एव । तत्र ह्येकेन सूक्तेन श्रद्धा, सूक्तद्वयेन मन्युश्च देवतीकृत्य स्तूयते । ईदृशोऽयं व्यवसायः पश्चादर्वाचीनेषु वेदेषु भूयस्तरामादृतः । तथा हि—कामः प्रथममथर्ववेद एव देवतीकृतो दृश्यते । यैरेष कामिनां हृदयं विध्यति तानि तस्य प्रहरणान्यपि तत्र निर्दिष्टानि । स एव कामः पश्चात् कविभिः साम्राज्यसिंहासनाधिरोपितः पुष्पबाणो नाम । तद्वदपरे धातृप्रजापतिप्रभृतयोऽपि सविशेषं देवतीकृत्य स्तूयन्ते । ते च क्रियाप्रवृत्तिनिमित्तकाः प्रथमं प्राचीनदेवतानां विशेषणत्वेन प्रयुक्ता पश्चाद् योगरूढ्या पृथग्देवतात्वेन परिणताः । तथा हि प्रजापतिशब्दः योगजशक्तिबलात् प्रथमं सवितृसोमयोः विशेषणतया प्रयुक्तः दशममण्डलीयेष्वर्वाचीनेषु सूक्तेषु प्रजानामुत्पादकस्य कस्यचिदन्यस्यैव प्रजापतिनाम्नो देवस्याभिधायकः परिकल्पितः । यो हि प्रजापतिरथर्ववेदे—वाजसनेयसंहितायां ब्राह्मणग्रन्थेषु च देवानामप्युत्पादक इत्यास्थाय सर्वोत्कृष्टत्वेनाङ्गीकृतः । सूत्रग्रन्थेषु पुनः वेदकालात्परमाविर्भूतस्य ब्रह्मणोऽस्य चाभेदः सम्पादितः ॥

दशममण्डलान्तर्गते कस्मिंश्चित्सूक्ते गुणानां देवतीकरण-प्रकारः विचित्रतरः प्रतिभाति । तथा हि—

येन॒ द्यौरु॒ग्रा पृ॑थि॒वी च॑ दृ॒ळ्हा
येन॒ स्वः॑ स्तभि॒तं येन॒ नाकः॑ ।
यो अ॒न्तरि॑क्षे॒ रज॑सो वि॒मान॒ः
कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥

एतन्मन्त्रगतोऽन्तिमः पादः तस्मिन् सूक्ते प्रतिमन्त्रमावृत्तो-ऽन्तिमचरणत्वेन पठ्यते । तत्र च प्रश्नार्थकेन 'कस्मै' इति सर्व-नामशब्देन प्रजापते स्वरूपस्यानिर्ज्ञातत्वाज्जिज्ञासा व्यज्यते । पश्चात्कालिकेषु वैदिकग्रन्थेषु पुनः 'क' इत्यस्य प्रजापतिवाचकत्वं परिकल्प्य 'कस्मै' इत्यस्य 'प्रजापतये' इत्यर्थो व्याख्यातः ॥

ऋग्वेदस्य प्राचीनेष्ववर्चीनेषु च भागेषूपलभ्यमाना का-चिदन्या गुणरूपा देवता बृहस्पतिः । ननु बृहस्पतिरिति को गुण इति चेदवधेहि—भक्तिरूपो गुण एव देवतीकृत्य वर्ण्यमानो बृह-स्पतिरिति रोठप्रभृतयः समामनन्ति । तत्रभवान् मगधनालाचार्य-स्तु—बृहस्पतौ प्राधान्येनाग्निगतानां गुणविशेषाणां वर्णनादग्नेर्यज्ञ-निर्वहणशक्तिरेव बृहस्पतिरित्यभिप्रैति । अत एवायं पुरोहितत्वेन

व्यपदिश्यते । अत एव चायमग्निरिव बलनामानं राक्षसं हत्वा गाः प्रत्यानयदिति इन्द्रोपाख्याने समुपवर्ण्यते । अपि च देवानां पुरोहितस्य ब्रह्माभिधानस्य पदे स्थितोऽयं बृहस्पतिरेव पुराणादिषु त्रिमूर्तीनामन्यतमस्य ब्रह्मणः स्थानीत्याकलयामः । परन्तु पश्चात्कालिकेष्वाख्यानेष्वयं बृहस्पतिः सुराचार्यत्वेन नक्षत्रविशेषत्वेन च प्रख्यातः ॥

अन्या च गुणदेवता विचित्रया भङ्ग्या वर्ण्यमाना अदितिः । यद्यप्येषा न पृथक् सूक्तं भजते तथापि प्रसङ्गवशाद् बहुत्र स्तूयमाना दृश्यते । तस्या द्वावेव प्रधानभूतौ गुणविशेषौ । तथा हि तावदियं वरुणप्रमुखानामादित्यानां गणस्य माता । अन्यतश्च तत्सुतो वरुण इवैषा जनान् शरीरामयरूपाद् धर्मातिक्रमरूपाच्च बन्धाद्विमोचयितुं प्रभवति । अत्र द्वितीयोक्तं गुणविशेषं निमित्तीकृत्य तस्या अदितिरिति नामधेयं सिद्धम् । अदितिर्हि नाम दितिरहिता बन्धरहितेत्यर्थः । अयमेव शब्दः ऋग्वेदे बहुत्र केवले बन्धराहित्यरूपेऽर्थे प्रयुक्तो दृश्यते । अत एव ऋषिः कश्चिदेनां बन्धान्मोचनममितोपहारं च प्रार्थयते । नन्वदितिर्नाम को गुण इति विचारयामः । तत्र तावद्—'अदितेः पुत्राः' इति आदित्यपरत्वेन प्रयोगः श्रूयते । स च प्रथमं 'मोचनक्रियायाः पुत्राः' इत्यस्मिन्नर्थे प्रवृत्तः सम्भाव्यते । तत्रादित्यानां तत्पुत्रत्वकल्पनं तेषां स्वतो बन्धरहितत्वाददितावपि बन्धराहित्यद्योतनार्थं मातृगुणानामेव पुत्रेष्वनुवर्तनात् । ऋग्वेदेऽन्यत्रापि सुलभा एवैतादृशाः

प्रयोगाः । इत्थं मोचनक्रियारूपेऽर्थे प्रयुक्तः स्त्रीलिङ्गोऽयमदिति-शब्द. संस्कृतभाषासाधारण्या सरण्या देवतावाचकः परिणतो द्रष्टव्यः । इत्थं वरुणादीनां मातृत्वेन वर्ण्यमानाप्येषा अदितिः भारतीयानां मध्ये प्रादुर्भूतत्वादार्याणां भारतवर्षप्रवेशात्पूर्वमाविर्भूतेभ्यो वरुणादिभ्य कनीयसी भवतीति चरित्रकाराः समामनन्ति ॥

स्त्रीदेवताः सर्वा अपि ऋग्वेदे सुतरामप्रधानं स्थानं लम्भिता. । नैव ताः क्वापि लोकनायिकात्वेन स्तूयन्ते । स्त्रीदेवतानां मध्ये प्रधानतमा उषाः । तदनन्तरा च सरस्वती. या पुनरप्रधानानां पुंदेवतानां समाना दृश्यते । ऋग्वेदे समग्रेण सूक्तेन स्तूयमाना पृथिवीतरा स्त्रीदेवता रात्रिः । सा च तदीया भगिन्युषा इव नभसः सुतात्वेन वर्ण्यते । बहुत्र तया सह द्वन्द्वीकृता च दृश्यते । सैषा तमोरूपा न विवक्षिता, किन्तु नक्षत्रविभूषिता ज्योतिष्मती । एकत्र द्वन्द्वरूपेण स्तूयमानयोरनयोरन्तरं दर्शयन्नाह कश्चिदृषिः—'एका नक्षत्रैर्मेदुरा अपरा सूर्यस्य भासा भासुरा' इति । रात्रिदेवतास्तुतिपरात् सूक्तात् (१०–१२६) केचिन्मन्त्रा उदाह्रियन्ते ॥

रात्री व्यख्यदायती
पुरुत्रा देव्य१क्षभिः.
विश्वा अधिश्रियोऽधित ॥

ओर्वप्रा अमर्त्या-
निवतो देव्यु१द्वतः ।
ज्योतिषा बाधते तमः ॥

निरु स्वसारमस्कृतो-
षसं देव्यायती ।
अपेदु हासते तमः ॥

सा नो अद्य यस्या वयं
नि ते यामन्नविक्ष्महि ।
वृक्षे न वसतिं वयः ॥

नि ग्रामासो अविक्षत
नि पद्वन्तो नि पक्षिणः ।
नि श्येनासश्चिदर्थिनः ॥

यावया वृक्यं१ वृकं
यवय स्तेनमूर्म्ये ।
अथा नः सुतरा भव ॥

स्त्रीदेवताः सर्वाः प्रधानदेवानां पत्न्यः सत्यः पत्यधीनवृत्तित्वादस्वतन्त्वतां भजन्ति । न च तासां नामनिर्देशादन्यः कश्चिद्विशेषः प्रस्तूयते ऋग्वेदे । तासां नामान्यपि पुंदेवतावाचकेषु शब्देषु पुंयोगलक्षणं स्त्रीप्रत्ययं संयोज्य निष्पादितानि ॥

देवानां द्वन्द्वसमासविधिना द्वन्द्वीकृत्य वर्णनं वेदमात्रदृष्टो विशेषः । प्रायेणैवंविधानि द्वादश द्वन्द्वानि समग्रैः सूक्तैः स्तूयन्ते पट्चान्यानि विप्रकीर्णैर्मन्त्रैः । एवंजातीयकेष्वधिकसङ्ख्याकानि सूक्तानि मित्रावरुणावुद्दिश्य प्रवृत्तानि । नामनिर्देशस्तु द्यावापृथिव्योरेव सङ्ख्यया अतिरिच्यते । एवंविधानि च द्वन्द्वानि 'प्राक्कालागताद्' द्यावापृथिव्यौ. इत्यस्माद्द्वन्द्वादतिदेशन्यायेन कल्पितानि । यतो हि द्यावापृथिव्यावित्यय द्वन्द्वशब्दःइण्डो-यौरोपकालेऽप्यवर्तिष्टेति निश्चप्रचम् । तयोः खलु निसर्गतः अत्यन्तं सम्पृक्तयोः दाम्पत्ययोगकल्पनाभिरुचिः प्राथमिकजनसङ्घ एवावर्तिष्ट । नैव तावदेते द्वन्द्वरूपा एव देवाः । किन्तु तत्तन्नायकाधिष्ठिताः केचिद्देवगणाश्चापि दृश्यन्ते । तेषां गरिष्ठः श्रेष्ठश्च मरुद्गणः । ये खलु मरुतः पदे पदे असुरसङ्ग्रामेष्विन्द्रस्य साहाय्यमाचरन्तः श्रूयन्त इति पूर्वमेवावोचाम । मरुत एते रुद्रशब्देन निर्दिश्यमाना बहुत्र तेषां पित्रा रुद्रेण सह स्तूयन्ते । अपरोऽल्पीयानादित्यानां गणस्तु तत्र तत्र तेषां मात्रा अदित्या वा तेषां नेत्रा वरुणेन वा सह स्तूयते । तेषां सङ्ख्या सप्त अष्टौ वेति ऋग्वेदे द्वयोर्मन्त्रयोरुपाक्षिप्तम् । ब्राह्मणादिग्रन्थेषु तु द्वादशेति निर्णीतम् । ऋग्वेदे अविच्छेदेन अष्टौ दश वा सूक्तानि

तद्वर्णनार्थं प्रवृत्तान्युपलभ्यन्ते । तन्मध्यादुद्धृत्याधस्तादुदाह्रियमाणेषु मन्त्रेषु तेषामुपकर्तृत्वरक्षितृत्वादयो गुणाः व्यक्तीभवन्ति (८-४७)—

पक्षावयो यथोपरि
व्यस्मेशर्म यच्छत ॥

परिणो वृणजन्नघा
दुर्गाणि रथ्यो यथा ॥

युष्मे देवा अपिष्मसि
युध्यन्त इव वर्मसु ॥

आदित्या अवहि ख्याता-
धिकूलादिव स्पशः ॥

सुतीर्थमर्वतो यथा-
नुनेपथा सुगमनेह ॥

तृतीयः कश्चिदप्रधानो वसुगणः । स च ऋग्वेदे भूयिष्ठमिन्द्रेण सह द्वन्द्वीकृत्य स्तूयते । अर्वाचीनेषु वैदिकग्रन्थेषु तावदग्निस्तद्गणस्य नायकत्वेनोक्तः । वस्तुतस्तु वसुगणोऽयमस्पष्टत्वादवा-

स्तविकः । न खल्वेतद्गणान्तर्गतानां देवानां सङ्ख्या नामानि वा कुत्रापि वेदेषु निर्दिश्यन्ते । ब्राह्मणग्रन्थेषु पुनस्तेषामष्टौ निर्दिष्टाः । न च तत्रापि तेषामियत्तया निर्देशः । अन्तिमश्च विश्वेदेवतागणः । ऋग्वेदे प्रायेण षष्टिः सूक्तानि विश्वेदेवतास्तुतिपरत्वेन प्रवृत्तान्युपलभ्यन्ते । सर्वदेवतोद्देशेन प्रवृत्तायां स्तुतावेकस्यापि बहिर्भावो मा भूदित्याकलय्य ऋषिभिः स्वाच्छन्द्येन परिकल्पितोऽयं विश्वेदेवतागणः । तत्र तावदिदं चित्रं यदयं विश्वेदेवतागणः वस्वादित्यादिगणवत् परिमितदेवतागणत्वेनाभ्युपगतोऽन्यैस्सह संस्तूयत इति ॥

न केवलमेते प्रधानभूता एव, किन्त्वप्रधानभूता अपि केचिद् देवा ऋग्वेदीयपुरावृत्तगताः श्रूयन्ते । नैते समग्रान् देवतागुणान् भजन्ति । तेषां प्रधानतमाः ऋभवः । सङ्ख्यया त्रयस्ते एकादशभिः सूक्तैः स्तूयन्ते । ते च प्रकृत्या हस्तकौशलशालिनः स्वविक्रमेण देवत्वं प्रपन्नाश्च श्रूयन्ते । यैस्ते देवत्वं प्राप्ताः तेषामतिविचित्राणां पञ्चानां कर्मणां मध्ये प्रधानतमं—त्वष्ट्रा देवशिल्पिना सह युध्यमानैस्तैः तत्सृष्टस्यैकस्य देवानां पानपात्रस्य चतुर्धा परिकल्पनम् । तत्र पानपात्रमित्यनेन चन्द्रो विवक्षितः । तस्य चतुर्धा परिकल्पनं च चन्द्रस्य क्षयवृद्धिमूलकमिति मन्यामहे । यद्वा पानपात्रं नाम संवत्सरः । तस्य चतुर्धाकरणं ऋतुविभागमूलकमित्युन्नेयम् । अपि च ऋभवस्ते स्वपित्रोर्यौवनं प्रत्यानयन्निति श्रूयते । तत्र पितृशब्देन द्यावापृथिव्यौ विवक्षिते स्याताम् । अनेन लोकोत्तरेण कर्मणा सहान्यदपि तेषां किञ्चिदुपाख्यानमिह प्रस्तावमर्हति ।

तथा हि— ऋभवो द्वादश वासराणि अगोह्यस्य (सूर्यस्य) गृहे निवसन्तीति श्रूयते । तेषां तत्रायमदीर्घकालिको वासः मकरसङ्क्रान्तिं परामृशतीति तर्कयामः । तत्र हि चान्द्रवत्सरातिक्रमात्परं सौरवत्सरारम्भं यावद् द्वादश वासराणि मध्यपतितानि भवन्ति । चान्द्रो हि वत्सरः ३५४ दिवसैः सौरः प्रायेण ३६६ दिवसैश्च सम्पद्यते । तानि च द्वादश वासराण्यह्नां दीर्घीभावारम्भात्पूर्वतराणि । एवं च ऋभवो नामादौ भूमिगता नभोगता वा अपदेवता अभूवन् । पश्चात् तेषां हस्तलाघवादिसूचकानि विविधानि विचित्रतराण्युपाख्यानानि प्रवृत्तानि ॥

ऋग्वेदे क्वचिदप्सरस्समाख्या सलिलविहारिणी देवता गन्धर्वस्य पत्नीत्वेन निर्दिष्टा समुपलभ्यते । सा च स्वप्रणयिनमत्युन्नतायां दिवि विराजमानं वीक्षमाणा स्मयते इति श्रूयते । अप्सरसो बहुत्वेनापि तत्र तत्र निर्दिश्यन्ते । अर्वाचीनेषु वेदेषु तावद् भूमावपि तासां झल्लरीवल्लरीसमुत्थं झाङ्कारं प्रतिध्वनतो वृक्षोद्यानाश्रित्य निवसन्तीत्युक्तम् । ता एताः परमरमणीयाः नृत्यगीतादिषु परमनिपुणाश्चेति ब्राह्मणग्रन्थेषु वर्णितम् । लौकिकसंस्कृतकाले तु एता स्वर्लोकपण्याङ्गनाः सम्पन्नाः । एताः न गन्धर्वैरेव केवलं किन्तु मर्त्यैरपि काम्यन्ते । एतादृशी काचिदुर्वशी नाम । तस्याः तदीयमर्त्यलोकपतेः पुरूरवसश्च मिथः प्रवृत्तं सम्भाषणमविस्पष्टार्थे

कस्मिंश्चिदृग्वेदीयसूक्ते समुपलभ्यते (१०–९५) । तत्रोर्वशी पृष्टा प्रत्याह—

> यद्विरूपाचरं मर्त्ये-
> ष्ववसं रात्रीः शरदश्चतस्रः ॥

तस्याः जीवितेशः पुनरागमनाय तां प्राञ्जलिरर्थयते. किन्तु तस्यैषा प्रार्थना तिरस्कृतापि तया प्रदीयमानममर्त्यत्वं स शिरसा वहति । शतपथब्राह्मणे च तयोः कथा सविस्तरं कथिता । त-द्यथानुश्रूयते—उर्वशी पुरूरवसमनुरक्तहृदया सञ्जाता किन्तु तेन सह तस्याः स्थितिः शापहेतुकी । गन्धर्वाणां कपटोपायेन यदा स शापो निवृत्तः तदैव सा स्ववल्लभं परित्यज्य गता । पुरूरवास्तु सम्मूढचेतास्तदन्वेषणाय चिरकालं महीं पर्यटन्नन्ते कस्याञ्चित्कम-लिन्यामन्याभिरप्सरोभिः सह जलचरशकुन्तरूपेण प्लवमानां ता-मद्राक्षीत् । उर्वशी च तमुपागतं वीक्ष्यात्मानं दर्शयति । तेन सहागमनाय भूयोभूयः प्रार्थ्यमाना सा संवत्सर एकस्मिन्नतिक्रान्ते पुनस्त्वदन्तिकमागमिष्यामीति प्रतिज्ञाय अलक्षिताभूत् । इदमेवो-पाख्यानं लौकिकसंस्कृतकाले कविकुलललामेन कालिदासेन विरचि-तस्य विक्रमोर्वशीयनाटकस्य मूलभूतं कथावस्तु ॥

गन्धर्वस्तावदादावेक एवाभूदित्यवगम्यते । ऋग्वेदे हि सर्वत्र गन्धर्व इत्येकवचनप्रयोग एवोपलभ्यते । अवस्तायामपि

वैरल्येनोपलभ्यमानः 'गन्धरेव' इत्येकवचनेनैव निर्दिष्ट । ऋग्वेदो-
क्त्यनुसारेण गन्धर्वो निरालम्बे नभसि समुच्छ्रितकायस्तिष्ठति ।
स च दिविजस्य सोमस्य रक्षिता । अवस्तायामिव क्वचिज्जलेनापि
सम्बद्धः श्रूयते । अर्वाचीनेषु वेदेषु पुनर्गन्धर्वाणां कश्चिद्गणः समु-
पस्थापितः । अपि च तत्र स्वोक्तीनां साधुतापादनार्थं तेषामप्स-
रोभिः सम्बन्धोऽपि सम्पादित. । लौकिकसंस्कृतकाले तु ते स्व-
र्लोकगायकत्वेन कल्पिता । तेषामन्तरिक्षगृहे वासो मृगतृष्णिका-
र्थपर्यवसायिना गन्धर्वनगरशब्देन व्यज्यते ॥

ऋग्वेदोक्तानां प्राचां राजर्षीणां मध्ये मनुः प्रधानतमः ।
स च प्राथमिको यष्टा मनुष्यजातेः स्रष्टा च श्रूयते । ऋषयः त-
मस्माकं पितेति, याज्ञिकान् मनुवंशजाता इति चाहु. । शतपथ-
ब्राह्मणं तु मनुमिमं मनुष्योत्पत्तिचरित्रविषये पाश्चात्यदेशीयस्य
नोवाख्यस्य महापुरुषस्य समानं स्थानं लम्भयते ॥

ऋग्वेदे ऋषयः केचिद् गणरूपेण श्रूयन्ते । तत्र प्रथमोऽ-
ङ्गिरसां गणः । ते च गोहरणोपाख्याने इन्द्रेण सह वर्णिताः ।
अपरः कश्चित्पुरावृत्तप्रसिद्धो भृगूणां गणः । तेषामर्थे ग्रीकदेशीय-
'प्रोमीथिय'देवतावन्मातरिश्वानः प्रच्छन्नमग्निं द्युलोकादानयन्तेति
श्रूयते । तेषां च कर्म भुवि यज्ञीयाग्नेः प्रतिष्ठापनमभिवर्धनं च ॥

पूर्वेषामृषिगणानां मध्ये नियतसङ्ख्यत्वेन निर्दिश्यमानः सप्तर्षीणां गण. । ते च ब्राह्मणग्रन्थेषु सप्तर्क्षमण्डलान्तर्गताः सप्त तारका इति आदितः प्रभृत्येव ते भल्लूकरूपा अभूवन्निति च प्रणिगदितम् । सोऽयमभेदः, मन्यामहे, उभयोः सङ्ख्यासाम्याद् ऋषिऋक्षशब्दयोः स्वरूपसादृश्याच्च समुपस्थितः । ऋक्षशब्दश्च ऋग्वेदे भल्लूकनक्षत्ररूपयोरुभयोरप्यर्थयोः प्रयुक्तः ॥

विविधाः प्राणिनोऽपि ऋग्वेदे प्राधान्येन पुरावृत्तेषु यज्ञप्रकरणेषु च प्रस्तूयन्ते । तेषामश्वः देवानां रथस्य वाहकत्वात् प्रधानतमः । विविधैः सूर्यपर्यायैरेव निर्दिश्यमानोऽयं तत्तुल्यत्वेन वर्णितः । यज्ञप्रकरणेषु चायं सूर्यस्याग्नेश्च प्रतिनिधित्वेन गृह्यते । अपि च ऋग्वेदस्य प्रथममण्डलान्तर्गते १६२, १६३ इत्यस्मिन् सूक्तद्वयेऽनुवाच्यमाने—अश्वमेधाख्यो याग पूर्वं वैदिककालस्यारम्भ एव भारतीयैरनुष्ठित इति व्यक्तीभवति ॥

अथापि तावद् गौरेव ऋग्वेदेऽतिशयेन लभ्यमाना मृगजाति. । यस्माल्लोकानां परमं प्रयोजनमावहति तस्मादियं समुत्कृष्टां पदवीमारोपिता निरतिशयं स्तूयते । उषस्सम्बन्धिन्यो भासः मेघाश्च गोत्वेन व्यपदिष्टा दृश्यन्ते । तथा कालमेघोऽपि पृश्निशब्देन निर्दिश्यमानः मरुतां माता गौरित्युपवर्ण्यते । एवमथर्ववेदे सर्वाभीष्टपूरकत्वेन वर्ण्यमानाश्चित्रवर्णा गावः, लौकिकसंस्कृतकाले प्रसिद्धाः कामधेनवश्च धनधान्यादिसकलसम्पत्समृद्धिहेतवः त्याग-

शीला अमी मेघा एव । एवं पृथिव्यपि ऋग्वेदे गौरित्युच्यते । सैषा गौः पवित्रात्मिकाऽबुध्यत भारतीयैः । अत एव कश्चिदृषिः तामदितिदेवतेति निर्दिशन् तस्या अवध्यत्वं बोधयति । अपि च तस्या. 'अघ्न्या' इति नामधेयेनाप्ययमेवार्थो व्यज्यते । अपि चावस्तागतानां ग्रन्थानां परामर्शे क्रियमाणे—गोरेतादृशी पवित्रता पूर्वमिण्डो-ऐरेणियकालेऽप्यवर्तिष्टेत्यवगम्यते । अथर्ववेदे गोपूजा-सम्प्रदायो मुक्तकण्ठमुपदिष्टः । शतपथब्राह्मणे च विशेषतः—गोमांसाशिनो जनाः महता पापेन पच्यन्त इत्युदीरितम् । सैषा गोः पवित्रता कालेकाले प्राबल्यमुपेत्य परम्पराक्रमेणागता सम्प्रत्यपि भारतीयानां मध्ये लब्धप्रतिष्ठा दृश्यते । पुरा भारतीयसैन्य-प्रकोपव्यतिकरे प्रवृत्तः वसावलिप्तगुलिकावृत्तान्तोऽपि भारतीयैरा-स्थिताया गवां पवित्रतायाः प्रकारमेवावेदयति । न खलु गोभ्य इवान्येभ्य. प्राणिभ्यो मनुष्याणां महीयानुपकारः सम्भवति । तादृशमनितरसाधारणं महत्प्रयोजनं गोभ्यः प्रतिपद्यमाना. भारतीया अधमर्णीकृतास्सन्तः तादृशस्य प्राणस्य परिशोधनाय तासु तादृशीं पवित्रतामारोपयन्ति. महती भक्ति च दर्शयन्ति । सोऽयं भारती-यानां मनोवाक्कायकर्मगतो गोविषयक आदरातिशयो मानुष्यकना-गरिकपरिष्कारचरित्रप्रबन्धे सविस्तरमेकेनाध्यायेन वर्णनीयत्वान्नेह वितन्यते ॥

ऋग्वेदगतानां विषधराणां प्राणिनामहिःप्रधानतम । इन्द्रस्य शत्रुर्वृत्रासुरोऽप्यहिरूपः श्रूयते । सोऽयमहिः क्वचिद् 'अहिर्बुध्न्य'

शब्देन निर्दिश्यमानः देवनात्मत्वेन विवक्षितो दृश्यते । अहिर्बुध्न्य इत्यस्य हि 'अन्तरिक्षचारी' त्यर्थः । स चागाधे नभस्समुद्रे वसतीति श्रूयते । अयमहिरूपस्य वृत्रस्योपकारितांशं परामृशतीति तर्कयामः । अर्वाचीनेषु वेदेषु तावत्—अहयो देवयोनित्वेन निर्दिष्टाः । सूत्र-ग्रन्थेषु विशेषतस्तेषां हविर्भागोऽपि कल्पितः । अर्वाचीनेषु ग्रन्थेषु नागप्रख्याः अहयो मनुष्याकृतिविशिष्टत्वेन निर्दिष्टाः समुपलभ्यन्ते । अपि च वेदकालानन्तरं भारतभूमौ सर्वत्र सर्पपूजाऽपि समारब्धा । इह तावदृग्वेदे सर्पपूजायाः वार्तामात्रस्याप्यश्रवणादिदमत्राभ्यूहितुं युक्तं, यत्—आर्यैः सर्पनिवहाकुलं भारतवर्षीयं भूभागं प्रविष्टैरना-र्याणामादिनिवासिनां संसर्गेण तन्मध्यप्रसिद्धः सर्पपूजाविधिरधि-गतः स्वयमनुष्ठितश्च स्यादिति । विविधा ओषधयोऽपि ऋग्वेदे बहुत्र देवतीकृत्य स्तूयन्ते । ताश्च प्राधान्येन अद्भिः नदीभिः द्यवा भुवा च सह निर्दिश्यन्ते । समग्रमेकं सूक्तं (१०—९६) ओषधि-स्तुतिपरं प्राधान्येन तासां रोगापनेतृत्वं वर्णयति । अर्वाचीनेषु वेदेषु विशेषत ओषधीरुद्दिश्य हविःप्रक्षेपणं, विवाहयात्रायामतिक्र-म्यमाणानां महावृक्षाणामग्रे प्रणमनं च प्रस्तुतं दृश्यते । कृत्स्ने एकस्मिन्सूक्ते (१०—१४६) चेतनधर्मारोपपुरस्सरमरण्यान्याः प्रशान्तगम्भीरतास्वभावः प्रकटीकृतः । तत्र च प्राधान्येन तस्याः भयानकत्वं तत्र समन्तादाकर्ण्यमानः करुणध्वनिश्च चेतोहारिण्या सरण्या वर्ण्यते । तिमिरावगुण्ठिते ह्यरण्यैकान्ते—

उत गा इवादन्ति
उत वेश्मेव दृश्यते ।
उतो अरण्यानिः सायं
शकटीरिव सर्जति ॥

गामङ्गैष आह्वयति
दार्वङ्गैषो अपावधीत् ।
वसन्नरण्यान्यां सायं
क्रुक्षदिति मन्यते ॥

नवा अरण्यानिर्हन्ति
अन्यश्चेन्नाभिगच्छति ।
स्वादोः फलस्य जग्ध्वा
यथाकामं निपद्यते ॥

आञ्जनगन्धिं सुरभि
बह्वन्नामकृषीवलाम् ।
प्राहं मृगाणां मातरं
अरण्यानी मशंसिषम् ॥

परन्तु ऋग्वेदे ओषधिवृक्षारण्यदेवतावर्णनांशः सुतरामप्रधान. ॥

अन्यः कश्चिदतिप्राक्कालभवो विशेषः—मनुष्यहस्तपरिकल्पितानां यज्ञोपयुक्तवस्तूनां यथायथं देवतीकृत्य वर्णनं पूजनं च । तथा ह्येकस्मिन्सूक्ते (३–८)—वनस्पतिशब्देन निर्दिश्यमानो यूपः, तथा दशममण्डलीये सूक्तत्रये सोमाभिषवार्थो ग्रावा च स्तूयते । एवं तत्र तत्र विप्रकीर्णेषु केषुचिन्मन्त्रेषु हलं तद्वत्सूक्त एकस्मिन (६७५) विविधानि समरायुधानि च देवतावत् स्तूयन्ते । अथर्ववेदे किञ्चित्सूक्तं (५–२०) दुन्दुभिं शंसति ॥

ऋग्वेदे क्रियासमभिहारेण निर्दिश्यमानाः यातुधानाः द्विधा विभक्तुं शक्याः । तत्र प्रथमेऽन्तरिक्षचारिणो देवानामरातयः । तत्र प्रथममेकस्य देवस्यैकस्यासुरस्य च मिथो विरोधो वर्णितः श्रूयते । ततः पश्चात् क्रमेण मिथःकलहायमानानि बहूनि देवासुरद्वन्द्वानि समुपस्थापितानि । ततः पश्चाद् ब्राह्मणग्रन्थेषु सामान्यतो देवानामसुराणां च शत्रुत्वमुपवर्णितम् । असुरशब्दः अन्तरिक्षचारिणां देवशत्रूणां वाचकः । पश्यतास्यातिविचित्रं चरित्रं—असुरशब्दः प्राधान्येन ऋग्वेदे देवतावाचकत्वेन प्रयुक्तः । अवस्तायामपि 'अहुर' इत्येवंरूपेणोपलभ्यमानः सर्वोत्कृष्टदेवताविशेषाभिधायको दृश्यते । परन्तु ऋग्वेदेऽर्वाचीनेषु भागेषु पृथक्तया प्रयुज्यमानोऽसुरशब्दः राक्षसवाची दृश्यते । अथर्ववेदे पुनरयमेवार्थः सर्वत्र विवक्षितः । इत्थं प्रथमतो देवतावाचकत्वेन दृष्ट-

म्यासुरशब्दस्य पश्चाद् राक्षसवाचकत्वेन परिणतौ को हेतुरिति चेत् तत्र केचिन्मन्यन्ते—इत्थंभूतोऽयं विशेपो राज्यद्वयविरोधमूलक । तथा हि—भारतीयानामैरेणियानां च मिथो विरोधात् यथा वेदोक्ता देवाः अवस्तायां राक्षसत्वेनोपात्तास्तथैव भारतीयैरवस्तागतानाम सुरशब्दवाच्यानां देवानां राक्षसत्वेन परिग्रहणादसुरशब्दोऽत्र राक्षसाभिधायी परिणतः स्यादिति । परे तु तादृशस्य परिणामस्य राज्यद्वयविरोधमूलकत्वकल्पनायां युक्ततरप्रमाणानुपलम्भात् प्रत्युत ऋग्वेदे प्राचीनभागेष्वसुरशब्दस्य देवतासामान्यवाचकत्वेन वरुणाख्यदेवताविशेपवाचकत्वेन च प्रयोगदर्शनस्यानुपपत्तिप्रसङ्गाच्च केचिन्मतमयुक्तमेव । सोऽयमर्थभेदः सर्वथा वैदिकग्रन्थाभ्यन्तर एवोत्पन्नो भवितुमर्हति । इह तावदादितः प्रभृत्यसुरशब्दस्य 'मायाशक्ति' द्योतनतात्पर्येण प्रयोगात् तादृश्याश्च शक्ते. प्राधान्येन शत्रुनिष्ठत्वेनोपलम्भात् तस्य शत्रुपरतया प्रयोग सुलभ एवाभूत् । दृश्यते च दशममण्डलीये कस्मिश्चित् सूक्ते (१२४) तस्य देवतापरत्वेन शत्रुपरत्वेन च प्रयोगः । परन्तु ऋग्वेदकालस्यान्तिमे भागे राक्षसवर्गीयाणां देवशत्रुत्वबोधनक्षमस्य कस्यचिदन्वर्थस्याभिधानस्यापेक्षयामुदितायामसुरशब्दस्य नञ्घटितत्वभावनया न सुराः= असुराः इत्येवं व्युत्पत्ति परिकल्प्य सुरशब्दस्य देवताभिधायित्वमसुरशब्दस्य राक्षसाभिधायित्वं च व्यवस्थापितम् । अत एव सुरशब्दः प्राचीनग्रन्थेष्वप्रयुक्तः पश्चादुपनिपद्ग्रन्थेषु प्रथमप्रयुक्तश्चोपलभ्यते ॥

अन्तरिक्षस्थानानां यातुधानानां केचिद् गणाश्चापि श्रूयन्ते । तत्र प्रथमः पणीनां गणः । पणय इत्यस्य कृपणा इत्यर्थः । तदिदं कार्पण्यं विशेषतो यज्ञीयदक्षिणाविषयकतया विवक्षितम् । अमुमेवार्थमवष्टभ्य सौवर्गिककोशोपसंहरणरूपमसुरोपाख्यानं परिकल्पितम् । 'दासः' 'दस्युः' इत्येतत्पदद्वयमव्युत्पन्नमतीनन्धकारान्तर्हितचरित्रानादिनिवासिनो जनानुद्दिश्य प्रयुक्तं पश्चादसुरपरतयाप्युपयुक्तम् ॥

ऋग्वेदोक्तानां प्रधानभूतानामसुराणां मध्ये वृत्रः प्रथमगणनीय । स च सर्पाकृतिः श्रूयते । वृत्रशब्दश्च 'वृन्' धातोर्निष्पन्नः केवलं 'परिवारकः' इत्यर्थमाह । अन्यः कश्चिदसुर ऋग्वेदे निरतिशयं स्तूयमानः वलः । स च केवलं चेतनधर्मारोपेण वर्ण्यमानं दिव्यानां गवामवरोधकत्वेनोपाख्यातं गिरिगह्वरमेव । ताविमौ वृत्रवलासुरौ लौकिकसंस्कृतग्रन्थेषु सोदरीकृताविन्द्रशत्रुत्वेनाख्यातौ । अन्येषामिन्द्रशत्रूणां मध्ये भूयसा निर्दिश्यमानः शुष्णाख्योऽसुरः शोषणशीलः । अन्यः कश्चिद् वैरल्येन निर्दिश्यमानोऽसुरः स्वर्भानुः, य. खलु लौकिकसंस्कृतग्रन्थेषु राहुव्यपदेशं लम्भितस्तदा तदा सूर्याचन्द्रमसौ तमसोपरञ्जयन् वर्ण्यते ॥

द्वितीयवर्गीया यातुधानास्तु भुवमुपरुन्धानाः । सुराणामसुरा इवैते मनुष्याणामरातयः । त एते राक्षसशब्देन व्यपदिश्यन्ते । ते च सर्वत्र तत्तद्राक्षसानां सूदकत्वेन स्तूयमानैः

तत्सूदनं प्रार्थ्यमानैर्वा तत्तद्देवैः सहैव प्रस्तूयन्ते न तु पृथक्तया । ते विविधमृगरूपा मनुष्यरूपाश्च श्रूयन्ते । अथर्ववेदे तु ते नीलत्वेन पीतत्वेन हरितत्वेन वा वर्ण्यमाना विरूपत्वेनोक्ताः । अपि च ऋग्वेदोक्त्यनुसारेण तेऽश्वान् मनुष्यांश्च तदभीष्टपूरणच्छद्मना समुपसृत्य पश्चात् तान् बलान्निहत्य तेषां पिशितान्यश्नन्तीत्यवगम्यते । ते च रात्रिञ्चराः सन्तः सर्वत्र यज्ञकर्माण्युपरुन्धते । लौकिकसंस्कृतकाले तु राक्षसा एते यज्ञभूमिं समन्तादलक्षितं प्रविशन्तीति प्रत्यय परमवशेषितोऽभून् । ऋग्वेदेऽत्यल्पं निर्दिश्यमानाः अर्वाचीनेषु वेदेष्वतिशयेनोपवर्ण्यमानाश्चैतद्विलक्षणा रक्षोभेदा पिशाचाख्याः । ते च शवभक्षकाः प्रेतसम्बन्धभाजश्च श्रूयन्ते ॥

मरणं प्रेत्यभावं चाधिकृत्य ऋग्वेदेऽत्यल्पमेवोक्तम् । मन्यामहेऽनवरतोद्योगैरधिगतानुरूपफलैर्वैदिकभारतीयैः पारत्रिके विषये तदनुगामिजनापेक्षयाऽत्यल्पमेव चेतः सञ्चारितम् । सोऽयं प्रेत्यभावविषयकोऽर्थः ऋग्वेदे यत्नेनान्विष्यमाणः दशममण्डलीयेष्वौर्ध्वदेहिकसूक्तेषु परमुपलभ्यते । तत्रापि चिताग्निः खननगर्तं वा शरीरमात्रं नाशयति न त्वात्मानं तस्य नित्यत्वादविनाश्यत्वाच्चेत्येतावदेव प्रस्तूयते । अपि चायमात्मा न केवलं मरणावस्थायामेव किन्त्वप्रोधावस्थायामपि शरीराद्वियुज्यत इति तैरबुध्यत

(१०–५८) । ऋग्वेदेऽन्येषु वा वेदेष्वात्मनो देहान्तरप्राप्तिमधिकृत्य न किञ्चित् प्रस्तुतम । तद्विषयको हि सिद्धान्तः क्रिस्तो. पूर्वं षष्ठे शतकाब्दे बुद्धमतप्रचारावसरे प्रसङ्गवशात् समुपस्थापित. । ऋग्वेदेऽप्यात्मा शरीराद्वियुज्य ओषधीरापश्च प्रविशतीत्येतावन्मात्रं श्रूयते । तदवलम्बेन पश्चात्काले जीवस्य देहान्तरप्राप्तिविषयकः सिद्धान्तः परिकल्पित इत्याकलयामः ॥



## ॥ पञ्चमोऽध्यायः ॥

### ऋग्वेदीयतत्वविद्या.

वैदिकग्रन्थदृशा तावद्— आत्मा परित्यक्तजडशरीरः पितृदितामहादिभिः क्षुण्णेन पथा नित्यालोकमयं लोकं प्राप्य तत्र परेताधिराजेन यमेन सह परिक्रीडमानान् देवैः सह सम्भुञ्जानान् स्वर्गतान् स्वपितृन् प्रपद्यते ॥

कचिदौर्ध्वदेहिकसूक्ते (१०–१४–७) परासुरेवं सम्बोध्यते, यथा—

> प्रेहि प्रेहि पथिभिः पूर्व्येभि-
> र्यत्रा नः पूर्वे पितरः परेयुः ।
> उभा राजाना स्वधया मदन्ता
> यमं पश्यासि वरुणं च देवम् ॥

अस्ति तत्र कश्चिन् सशाखोपशाखो विशालस्तरुः । प्रच्छायशीतले यस्य मूले यमो देवैः सह सोमं पिबति । श्रूयते च मधुरमधुरः सङ्गीतमुरलीध्वनिः । जीवस्तत्र जरामरणवर्जितः स्वच्छन्दवर्ती नित्यमानन्दमनुभवति । इदं च भौतिकपिण्डयोग्यमीदृशं सुखजीवितं विसृष्टदेहस्य जीवस्य विषये, मन्यामहे, न

ज्ञातु वीराणां किन्तु पुरोहितानां मनसा सृष्टं भवितुमर्हति । अत एव सङ्ग्रामेषु प्राणानर्पयतां वीराणां केवलं स्वर्गारोहणयोग्यत्वं, क्रतुषु पुरोहितेभ्यो महितानि वैतानदानानि प्रतिपादयतामुदाराणां ततोऽप्युत्कृष्टपदारोहणयोग्यत्वं च श्रूयते ॥

यद्यप्यथर्ववेदः पारलौकिकयातनानुभवस्थानं लोकान्तरमस्तीति प्रतिपादयति तथापि ऋग्वेदे—असीनाः पाखण्डाः भूमेरधस्तादुपगूढमन्धं तमः प्रविशन्तीत्येतावन्मात्रं श्रूयते । यदपि खल्वपर्याप्तं प्रमाणम् । ऋषयो हि विषयमेनमधिकृत्यात्यल्पमेव ब्रुवन्ति । उच्यमानमप्यनवधारितार्थम् । अत एव तत्रभवान् रोठाचार्योऽस्यान्धं तमः श्रुतिवाक्यस्य असीतानां पाखण्डानामत्यन्तोच्छेदे तात्पर्यमित्यभ्युपैति । पारलौकिकदण्डविषयकोऽयमीदृश उपक्षेपः क्रमशः सम्प्रवृद्धो वेदकालानन्तरं नानाविधानां नरकविशेषाणां प्रतिपत्तौ द्वारीबभूव ॥

केचिद्दह्यन्त्वाः परेतानां पितृपितामहादीनां मार्गस्य देवानां मार्गादन्यत्वं प्रतिपादयन्ति । अयमीदृशो भेदो हवनदहनयोः भिन्नरूपत्वादुपनतो भवितुमर्हति । ब्राह्मणग्रन्थेष्वपि पितॄणां देवानां च भिन्नलोकाधिवासित्वमभिप्रेत्य देवपितृलोकयोः भेदः प्रतिपादित ॥

परेतानां परमानन्दमनुभवतामधिपतिर्यमः । तमुद्दिश्य समग्राणि त्रीणि सूक्तानि प्रवृत्तानि । स च परेतानां पालकत्वेन जनानां सम्मेलकत्वेन च वर्ण्यते । प्राणान्परित्यज्य तदन्तिकं प्राप्तानामसौ प्रथमतः तात्कालिकं विश्रमस्थानं प्रदर्श्य पश्चात् तेषां शाश्वतिकीं वसतिं परिकल्पयति । यम एव परलोकगामिनं पन्थानमग्रे ददृश्वान् (१०—१४—१)—

परेयिवांसं प्रवतो महीरनु-
बहुभ्यः पन्थामनुपस्पशानम् ।
वैवस्वतं सङ्गमनं जनानां
यमं राजानं हविषा दुवस्य ॥

यद्यप्येवं मृत्युमार्गाश्रयणाद्यमो भयङ्करत्वेन वर्णनीयोऽभूत् तथापि नायमथर्ववेदपुराणादिवद् ऋग्वेदे तादृशमृत्युदेवतात्वेनाङ्गीकृतः । उलूकः कपोतश्च तदीयदूतत्वेन तत्र तत्राख्यातौ । नियतौ तु तस्य दूतौ द्वौ सारमेयौ, यौ परेतानां गन्तव्यमध्वानमहर्निशं पालयतः ॥

लोकान्तरं प्रस्थितो जनः तौ सारमेयावधिकृत्यैवं निबोध्यते (१०—१४)—

अति द्रव सारमेयौ श्वानौ
चतुरक्षौ शबलौ साधुना पथा ।
अथा पितॄन्त्सुविदत्राँ उपेहि
यमेन ये सधमादं मदन्ति ॥

उरूणसावसुतृपा उदुम्बलौ
यमस्य दूतौ चरतो जनाँ अनु ।
तावस्मभ्यं दृशये सूर्याय
पुनर्दातामसुमद्येह भद्रम् ॥

ऋग्वेदे क्वचिद्यमशब्दो यमलरूपेऽर्थे प्रयुक्तः, मन्यामहे अयमेवार्थः प्रथमसङ्केतितः । दृश्यते च परेताधिपतिरयं काव्य-गुणाकरीभूते यमयमीसूक्ते (१०–१०) यमलात्मकः । यमी नामात्र यमस्य स्वसा । सा भ्रातरि तस्मिन्नात्मनोऽनुरागमभि-व्यञ्जयति । यमस्तु तदीयमत्यारोहमेवंविधैरुपदेशवचनैः प्रत्या-दिशति—

न तिष्ठन्ति न नि मिषन्त्येते
देवानां स्पश इह ये चरन्ति ।
अन्येन मदाहनो याहि तूयं
तेन वि वृह रथ्येव चक्रा ॥

अन्यमू षु त्वं यम्यन्य उ त्वां
परि ष्वजाते लिबुजेव वृक्षम् ।

यद्यप्येतत्सूक्ताभिव्यञ्जितोऽगम्यागमनरूपो वृत्तान्तः ऋग्वेद-धर्मविरोधादिह प्रतिक्षिप्तः तथापि पुरावृत्तमिदं मानुष्यकसृष्टिमूल-भूतस्यादिमद्वन्द्वस्य चरितमवष्टभ्य प्रवृत्तमित्यवधेयम । तदिदं पुरा-वृत्तं इण्डो-ऐरेणियकालादागतं ज्ञायते । यतो ह्यवस्तायामुत्तर-कालिकग्रन्थेषु 'यिमेह्' समाख्या यमस्य स्वसा निर्दिष्टा दृश्यते । तथा यमस्य पिता विवस्वानप्यैरेणियकालादवतीर्णः । अवस्तायां हि यिमस्य पिता 'विवन्ह्वन्त्' इति श्रूयते । स चास्माकं विवस्वतोऽभिन्न एव ॥

ऋग्वेदीयानि सर्वाण्यपि सूक्तानि देवतानां देवतीकृतानां वस्तूनां वा प्रशंसार्थं प्रवृत्तानीति पूर्वमेवावोचाम । तेषां तु मध्ये तत्र तत्र विप्रकीर्णान्युपद्वादशानि सूक्तानि पुरावृत्तविषयकाणि संवादरूपेण प्रवृत्तानि प्राधान्येन दशमे मण्डले समुपलभ्यन्ते । परन्तु तत्र पुरावृत्तान्यव्यक्तगत्या परामृश्यन्ते । मन्यामहे तानि प्रथमं गद्यवाक्यैर्निबद्धानि मन्त्रदृशामग्रे स्थितानि । गद्यमयानां तेषां च्छन्दोमयेऽस्मिन् ऋग्वेदे प्रवेशयोग्यताभावात् तानि सूक्तरूपेण निबध्नन्तो मन्त्रकारास्तद्गतान् बहून् विषयान् सिद्धवत्कृत्य व्याह-रन्ति । तद्विषयकाणां सूक्तानामृग्वेदे सङ्ग्रथनात् ते गद्यनिबद्धा मूलभागाः क्रमेण समूलनाशं नष्टाः स्युः । तत्रेन्द्रावरुणयोः संवादः (४–४२) तयो. परस्परोत्कर्षस्पर्धामाविष्करोति । अन्यः कश्चित् कवितासौन्दर्यशाली प्रस्फुटार्थः वरुणाग्न्योः पर्यायमन्त्रैः प्रवृत्तः

संवादः (१०–५२) यत्राग्निर्यज्ञक्रियायामात्मनो महता कर्मण परिश्रान्तिमावेद्य तदुपेक्षमाणोऽपि भूयस्तत्कर्मनिर्वहणमङ्गीकरोति ॥

अन्यत्किञ्चिदव्यक्तं नीरसमतिकौतुकावहं च सूक्तं (१९–८६) इन्द्राणीन्द्रसंवादरूपमिन्द्राण्या क्रोधस्य लक्ष्यीभूतं कमपि वानरमधिकृत्य प्रवृत्तम् । अन्यत्र कस्मिंश्चित् सहृदयचेतोहारिणि रमणीयार्थे सूक्ते (१०–१०७) सरमा नामेन्द्रस्य दूती देवशुनी पणिभिश्चोरिता गाः प्रत्याहर्तुं यतमाना तैः सह संवाद करोति । अपरः कश्चिदुर्वशीपुरूरवसोः संवादः प्रसङ्गवशात् पूर्वाध्याये प्रदर्शितः । यः खलु संवादोऽप्सरःकुलसम्भूतयोर्वश्या मर्त्यधर्मणस्तद्वल्लभस्य परित्यागकाले प्रवृत्तः । तदिदमुपाख्यानं न केवलमतिचिरन्तनस्येण्डो-यौरोपवर्गीयस्त्रीपुंसानुरागप्रकारस्य बोधकत्वादेव किन्तु तदवलम्बेन संस्कृतसाहित्ये महतश्चरित्रार्थस्य सम्भूतत्वाच्च महतीं माननामर्हति । पूर्वप्रस्तुतं यमयमीसंवादसूक्तं तु ततोऽपि प्राचीनं वृत्तमुपस्थापयति । पुरावृत्तविपर्ययिण्यश्चैता सूक्तय पश्चात्कालोत्पन्नानां पुराणनाटकादीनां मूलभूताः ॥

ऋग्वेदेऽनधिकत्रिंशानि सूक्तानि देवतास्तोत्रादन्यत्र प्रवृत्तानि दृश्यन्ते । तत्र दशममण्डलगतान्युपद्वादश सूक्तान्याभिचारक्रियाप्रतिपादकानि । तस्मात् तान्यथर्ववेदीयसूक्तसाजात्यमर्हन्ति । नातिदीर्घमन्यत् सूक्तद्वयं (२–४२, ४३) अमुकामुकपक्षिणां विरावः प्रस्थानकाले श्रूयमाणः शुभमावहतीत्यादिशकुनज्ञानं सम्पादयति ।

अन्यत् सूक्तं (३–१९१) विषवेगस्य, अपरं सूक्तं (१०–१६३) यक्ष्मव्याधेश्च प्रतीकारार्थं मन्त्रप्रयोगमुपदिशति । अन्यत् सूक्तद्वयं (१०–५८, ६०) मुमूर्षोः प्राणरक्षार्थं प्रवृत्तम् । तत्रैकस्मात् सूक्तान्मन्त्रद्वयमुदाहरामः (१०–६०–७, १२)—

यथा युगं वरत्रया
    नह्यन्ति धारुणाय कम् ।
एवा दाधार ते मनो जीवातवे
    न मृत्यवेऽथो अरिष्टतातये ॥

न्य१ग्वातोऽव वाति
    न्यक्तपति सूर्यः ।
नीचीनमघ्न्या दुहे
    न्यग्भवतु ते रपः ॥

अयमपरोऽल्पनिद्रासम्पादनार्थं गीयमानात् सूक्तादेको मन्त्र उदाह्रियते (७–५५–६)—

य आस्ते यश्चरति
    यश्च पश्यति नो जनः
तेषां सं हन्मो अक्षाणि
    यथेदं हर्म्यं तथा ॥

स्वापगीतस्यास्य प्राथमिकानां त्रयाणां मन्त्राणां विरामे 'निपुष्वप' इत्ययं शब्दः प्रत्यावृत्तो दृश्यते ॥

अथाभिचारिकसूक्तानां प्रयोजनानि विचारयामः । तत्रैकतमस्य सूक्तस्य (१०—१८३) सन्ततिलाभः प्रयोजनम् । अपरं सूक्तं (१०—१६२) अपत्यघातिनां राक्षसानामुच्चाटनार्थं प्रवृत्तम् । अपरं किमपि सूक्तं (१०—१६६) शत्रूणामुच्छेदनार्थमुत्पादितम । अन्यत् सूक्तं (१०—१४५) स्त्रिया कयाचित् सपत्नीषु कृतवैरया तासु पत्युर्वैमुख्यमापादयितुमिच्छन्त्या तद्विद्वेषणाभिचारार्थं प्रयुक्तं च दृश्यते । अस्यैव परिशेषात्मकं किमपि सूक्तं (१०—१५९) तत्र विद्वेषणाभिचारकर्मणि लब्धविजयायाः कस्याश्चिदानन्दोद्गारात्मकम । यथा—

उद॒सौ सूर्यो॑ अगा॒-
दुदयं॑ मा॒म॒को भग ।
अ॒हं त॒द्वि॒द्व॒ला पति॑-
म॒भ्यसाक्षि विषा स॒हिः ॥

मम॑ पु॒त्राः श॑त्रु॒हणो॒ऽ-
थो॑ मे दु॒हि॒ता वि॒राट् ।
उ॒ताह॑मस्मि स॒ञ्ज॒या
पत्यौ॑ मे॒ श्लोक॑ उ॒त्त॒मः ॥

समंजैषमिमा अहं
सपत्नीरभिभूवरी ।
यथाहमस्य वीरस्य
विराजानि जनस्य च ॥

इदमन्यत् किमपि सूक्तं (७=१०३) मण्डूकस्तुतिपरं केवललौकिकविषयप्रतिपादकम् । किन्तु मन्त्रकारैस्तस्य कीदृशं प्रयोजनमुद्दिष्टमिति न व्यक्तीभवति । तथा हि—वर्षारम्भे भारत-भूमावनुभूयमानं मण्डूकानां रटनं सूक्तेऽस्मिन् विचित्रया भङ्ग्या वर्णितम् । तत्र च मण्डूकानामाघोषाः सोमपानोन्मत्तानां पुरोहितानां गीतघोषैः, अध्ययनशालायामाचार्यैरुक्तमनुब्रुवाणानामध्येतृणामध्ययनघोषैश्चोपमिताः । यथा

संवत्सरं शशयाना
ब्राह्मणा व्रतचारिणः ।
वाचं पर्जन्यजिन्वितां
प्र मण्डूका अवादिषुः ॥

यदेषामन्यो अन्यस्य वाचं
शाक्तस्येव वदति शिक्षमाणः ।
सर्वं तदेषां समृधेव पर्व यत्
सुवाचो वदथनाध्यप्सु ॥

ब्राह्मणासो॑ऽतिरा॒त्रे न सोमे॒
सरो॒ न पू॒र्णम॒भितो॒ वद॑न्तः ।
सं॒व॒त्स॒रस्य॒ तदहः॒ परि॑ष्ठ
यन्म॑ण्डूकाः प्रावृ॒षीणं॑ ब॒भूव॑ ॥

ब्रा॒ह्म॒णास॑: सो॒मिनो॒ वाच॑मक्रत
ब्रह्म॑ कृ॒ण्वन्त॑: परिवत्स॒रीण॑म् ।
अ॒ध्व॒र्यवो॑ घ॒र्मिण॑: सिष्विदा॒ना
आ॒विर्भ॑वन्ति॒ गुह्या॒ न के चि॑त् ॥

दे॒वहि॑तिं जुगुपुर्द्वाद॒शस्य॑
ऋ॒तुं नरो॒ न प्र मि॑नन्त्ये॒ते ।
सं॒व॒त्स॒रे प्रा॒वृष्याग॑तायां
त॒प्ता घ॒र्मा अ॑श्नुवते विस॒र्गम् ॥

सूक्तमिदं ब्राह्मणानामुपहासाय प्रवृत्तमित्यपरे विमर्शका मन्यन्ते । तत्रेयमाशङ्का जायते—यद्येतत् तदुद्देशेन प्रवृत्तं स्यात् तर्हि संहितायामस्य प्रवेशः कथं घटते । यद्यपि खलु सूक्तमिदं ब्राह्मणानुपहसितुं ब्रह्मणेतरैः प्रणीतमिति सम्भाव्येत तथाप्यस्य संहितायां सन्निवेशो याज्ञिकैर्ब्राह्मणैरेव कृत इति भवताप्यभ्युपगन्तव्यं ब्राह्मणाधीनत्वात् संहितायाः । सूक्तस्यास्य वास्तविकमर्थमज्ञात्वा याज्ञिकैरेतत् संहितायां सन्निवेशितमित्यपि सम्भाव्य-

मानमयुक्तमेव स्यात् । तस्मादिदं ब्राह्मणानामुपहासाय प्रवृत्तमित्येतदश्रद्धेयमेव । वस्तुतो हि—तत्र तादृशमुपमालङ्कारं घटयतः ऋषेर्न तावद्दूरमभिनिवेशः । ऋषयो हि बहुत्र सहृदयवैरस्यापादकानेवंविधानुपमाद्यलङ्कारानुपनिबध्नन्तो दृश्यन्ते । अपि च सूक्तस्यास्यान्तिमे मन्त्रे मण्डूका देवा इव द्रविणमह्नो दैर्घ्यापादनं च प्रार्थ्यन्ते । तस्मादिदं वर्षोत्पादनक्षमत्वेन प्रतीता केवलमण्डूकस्तुतिरेवेत्यवधेयम् ॥

लौकिकविषयपराणां मध्येऽन्येपूपविशेषु सूक्तेषु प्राधान्येन साङ्घिका आचाराः, राज्ञामौदार्यगुणाः, नीतिधर्माः, प्रहेलिकाः, जगत्सृष्टिप्रकारा इत्यादयो विषया गर्भीकृताः । अत्र बहूनि सूक्तानि भारतवर्षीयाणां बुद्धिप्रभावस्य नागरिकपरिष्कारस्य च चरित्रवस्तु मीमांसमानानामत्यन्तमावश्यकानि । इह भारतवर्षीयसाङ्घिकाचाराणां मतधर्मप्रधानत्वात् तत्प्रतिपादनोद्युक्तानां सूक्तानामपि मतधर्मानुयायित्वमितिहासच्छायानुकारित्वं च सम्भाव्यमेव । तत्र प्रथमोदाहरणीयं विवाहसूक्तं (१०–८५) सप्तचत्वारिंशता मन्त्रैर्घटितम् । अत्र विवाहसम्बन्धिनो बहवो विषयाः परस्परनिराकाङ्क्षं निबद्धाः । प्राथमिकेषु पञ्चसु मन्त्रेषु दिविजस्य सोमस्य चन्द्रादभेदः श्लिष्टोक्त्या प्रतिपादित । तदन्तरेष्वेकादशसु मन्त्रेषु सोमस्य सूर्यायाश्च विवाहवृत्तान्तः प्रस्तूयते । अन्यत्र सूर्यायाः प्रियतमत्वेन वर्ण्यमानावश्विनावत्र सोमस्य दूत्ये नियुक्तौ भगवतः सूर्यस्यान्तिकमुपेत्य सोमाय तत्सुतां सूर्यामर्थयन्ते ।

सविता च तथेति प्रतिज्ञाय शाल्मलीदारुनिर्मितेन किंशुककुसुमालङ्कृतेन श्वेताभ्यां वृषाभ्यामुह्यमानेन रथेन स्वतनयां पतिगृहं प्रेषयामास ॥

तदनु मन्त्रद्वयेन सूर्यासोमौ दम्पती अपुनर्वियोज्यौ विदधानो मानुष्यकविवाहविधेरादर्शायमानः प्राथमिको विवाहप्रकारः समनुवर्णित । तथा हि—

पूर्वापरं चरतो माययैतौ
शिशू क्रीळन्तौ परि यातो अध्वरम् ।
विश्वान्यन्यो भुवनाभिचष्ट
ऋतूँरन्यो विदधज्जायते पुनः ॥

नवोनवो भवति जायमानो-
ऽह्नां केतुरुषसामेत्यग्रम् ।
भागं देवेभ्यो वि दधात्यायन्
प्र चन्द्रमास्तिरते दीर्घमायुः ॥

ततःपरं चतुर्षु मन्त्रेषु दम्पत्योरनयोः प्रस्थानकालोचिता आशिषः प्रयुज्यन्ते । नवोढयोरनयोर्दम्पत्योः सन्तत्यभ्युदयदीर्घायुरारोग्याद्यभिवृद्धिर्भूयादित्याशास्यते च ॥

तदनन्तरौ द्वौ मन्त्रौ विवाहकालिकवधूवासोविषयकावपरिस्फुटार्थौ । ततः षण्मन्त्रा विवाहक्रियायामुच्चारणीया । अत्र भूयोऽपि सूर्याविवाहः प्रस्तुतः । तत्र वरो वधूमिदमाभाषते—

गृभ्णामि ते सौभगत्वाय हस्तं
मया पत्या जरदष्टिर्यथासः ।
भगो अर्यमा सविता पुरन्धि-
र्मह्यं त्वादुर्गार्हपत्याय देवाः ॥

तत्रैवाग्निरित्थं प्रार्थ्यते—

तुभ्यमग्रे पर्यवह-
न्त्सूर्यां वहतुना सह ।
पुनः पतिभ्यो जायां
दा अग्ने प्रजया सह ॥

अन्तिमाः षण्मन्त्राः वध्वाः स्वकीयभाविगृहप्रवेशात्परं नवोढयोर्वधूवरयोस्तत्र नित्यमाङ्गल्यमाशंसितुं प्रवृत्ताः—

इहैव स्तं मा वियौष्टं
विश्वमायुर्व्यश्नुतम् ।

क्रीळन्तौ पुत्रैर्नप्तृभि-
मोदमानौ स्वे गृहे ॥

सूक्तेऽस्मिन्नन्तिमो मन्त्रो वरस्य वचनम्—

समञ्जन्तु विश्वे देवाः
समापो हृदयानि नौ ।
सम्मातरिश्वा सन्धाता
समुदेष्ट्री दधातु नौ ॥

अथ तावद्दशमे मण्डले (१४—१८) पञ्च सूक्तान्यौर्ध्वदेहिकक्रियाप्रतिपादनपराण्युपलभ्यन्ते । तत्र चतुर्षु सूक्तेषु लोकान्तरसम्बन्धिन्यः काश्चिद्देवताः स्तूयन्ते । तथा हि—तेषामादिमे सूक्ते यमः, द्वितीये पितरः, तृतीयेऽग्निः, चतुर्थे पूषा सरस्वती च प्रतिपाद्या देवताः । इत्थं च परिशेषात् तेष्वन्तिममेकमेव सूक्तं साक्षादौर्ध्वदेहिकक्रियाप्रतिपादकम् । अत्र देवतासम्बन्धाभावात् सूक्तमिदं लौकिकविषयपरत्वेनास्थीयते । आरभटीरीत्या निबद्धमिदमनितरसाधारणं रामणीयकं भजते । तस्मिन् काले जनैराद्दता और्ध्वदेहिकक्रियाप्रकाराः सर्वेऽप्यत्र सम्यक् प्रतिपादिताः ॥

सूक्तपञ्चकेनानेन वेदकाले भारतभूमौ खननं दहनं चेति संस्कारद्वयमप्याद्दतं ज्ञायते । सप्तममण्डलान्तर्गते वरुणस्तुतिपरे

कस्मिश्चिन् सूक्ते मृतानां मृत्तिकागृहवासः कथितः । अथापि तस्मिन् काले दहनसंस्कार एव बाहुल्येन जनैरनुष्ठितः । अर्वाचीने तु वैदिकग्रन्थसमुदाये सर्वत्र दहनसंस्कारः पर विहितः । यतीनामूनवर्षद्वयानां बालकानां च विषये खननसंस्कारोऽनुमतः । दहनसंस्कारेऽपि लोकान्तरजीवितविषयका अन्धपरम्परागताः केचिद्विश्वासविशेषाः पुरस्कृताः । तथा हि—मृतशरीरमग्निः पितृभिर्देवैश्चाधिष्ठितमानन्दमय लोक प्रापयतीति प्रतीतं तैः । दह्यमाने च मृतशरीरे तेन सह तस्मिन्नेव चिताग्नौ कश्चिदजोऽप्याहुतीकृतः । यथा ह्यश्वमेधीयाश्वेन सह हूयमानश्छागः पुरतो गत्वा देवेभ्यो बलिमुपहृतं निवेदयतीत्युक्तमृग्वेदे (१–१६२, १६३) तथैव मृतशरीरेण सह दह्यमानोऽयमजः सत्वरमग्रतो गत्वा पितृभ्यो मृतमागतं विज्ञापयतीत्युक्तमथर्ववेदे (१–५, १–३) । पश्चात्कालिकश्रौतक्रियासरणौ तु शवानां दाह इवाजानां गवां वा दाहोऽपि पृथग्यज्ञरूपतां प्रापितः ॥

तमिमं पूर्वाचारमनुरुन्धानैर्भारतीयैरद्यापि प्रेतशरीरं लोकान्तरोपयोगार्थैर्वस्त्राभरणादिभिरलङ्कृत्य दह्यते । अपि च ऋग्वेदीयौर्ध्वदेहिकप्रकरणे श्रूयते—परासोः पुरुषस्य पत्नी तस्याधःपार्श्वे संविशति, धनुश्च तस्य हस्तादादीयत इति । अनेन लोकान्तरेऽपि तमेव पतिमभिलषन्त्या पत्न्या स्वदेहोऽपि तेन सहैकस्यामेव चितायामाहुतीकृत इत्यवगम्यते । अत एवाथर्ववेदेऽपि पत्न्याः पत्या सह शरीरत्यागः पुराकल्पीयो धर्म इत्युक्तम् । सोऽयमाचारः

पूर्वकाले प्राधान्येन योधवर्गाणां मध्ये प्रचलितः पूर्वमिण्डो-यूरोपिय-कालेऽप्यवर्तिष्टेति प्राक्कालिकमृतशरीरतत्वविचारशास्त्रादवधार्यते ॥

और्ध्वदैहिकसूक्तेऽस्मिन् (१०–१८) अष्टमो मन्त्रः परासोः पत्नीं सम्बोधयन्—चितां परित्यज्य प्रतिनिवर्तस्वेति कस्यचिद-न्यस्य पत्युः (शास्त्रीयनियोगविध्यनुरोधेन पतिभ्रातुः) पाणिं गृहाणेति च तामुपदिशति । तथा हि—

उदीर्ष्व नार्यभि जीवलोकं
गतासुमेतमुपशेष एहि ।
हस्तग्राभस्य दिधिषोस्तवेदं
पत्युर्जनित्वमभि सम्बभूथ ॥

वक्ता ततः परावृत्य प्रेताभिमुखं तिष्ठन्नुच्चैरुदीरयति—

धनुर्हस्तादाददानो मृतस्या-
स्मे क्षत्राय वर्चसे बलाय ।
अत्रैव त्वमिह वयं सुवीरा
विश्वाः स्पृधो अभिमातीर्जयेम ॥

उपसर्प मातरं भूमिमेता-
मुरुव्यचसं पृथिवीं सुशेवाम् ।

ऊर्णम्रदा युवतिर्दक्षिणावत
एषा त्वा पातु निर्ऋतेरुपस्थात् ॥

उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः
सूपायनास्मै भव सूपवञ्चना ।
माता पुत्रं यथा सिचा-
भ्येनं भूम ऊर्णुहि ॥

ततो वक्ता सविधे स्थितानवलोकयन्नाह—

इमे जीवा वि मृतैराववृत्र-
न्नभूद्भद्रा देवहूतिर्नो अद्य ।
प्राञ्चो अगाम नृतये हसाय
द्राघीय आयुः प्रतरं दधानाः ॥

यथाहान्यनुपूर्वं भवन्ति
यथा ऋतव ऋतुभिर्यान्ति साधु ।
यथा न पूर्वमपरो जहा-
त्येवा धातरायूंषि कल्पयैषाम् ॥

लौकिकविषयपराण्यन्यानि कानिचित्सूक्तानि नानाविधां-
श्चारित्रिकानर्थान् परामृशन्तो दृश्यन्ते । तान्येव दानस्तुतयो नाम ।

नाश्चैना राजकुमारैरास्थानपुरोहितेषु प्रदर्शितायाः दानशौण्डतायाः प्रशंसार्थं निर्मिताः । कवितासौन्दर्यरहिताः पश्चात्कालायोजिता-श्चैताः स्तुतयः प्राधान्येन प्रथमदशममण्डलयोः, अष्टममण्डलान्तः-पातिनां वालखिल्यसूक्तानां च मध्ये तत्र तत्र समासाद्यन्ते । बहू-न्येवंजातीयकानि सूक्तानि द्वित्रमन्त्रघटितानि बाहुल्येनाष्टमे मण्डले वैरल्येन मण्डलान्तरेषु च सामान्यसूक्तानां मध्ये परिशिष्टरूपतया संयोजितान्युपलभ्यन्ते । आसां दानस्तुतीनां कर्तारः स्वयं प्रति-गृहीतानां द्रव्याणां स्वरूपं परिमाणं च निर्दिशन्तः तत्प्रसङ्गात्स्वेषां स्वपालकानां केषाञ्चिज्जातिभेदानां च नामगोत्राभिजनान् वर्णयन्तश्च चरित्रार्थस्योपकुर्वन्ति । तत्र प्रतिपादितानां प्रतिग्रहद्रव्याणां परिमाणं क्वचित् 'षष्टिसहस्राणि गावः' इति श्रूयते । इयमुक्ति-रतिशयोक्तिर्वा भवतु नाम । तथाप्येतावदवधार्यते—पुराकाले प्रधानपुरुषैः परस्सहस्रा गावः परिरक्षिता इति ॥

अन्यानि चत्वारि सूक्तानि हितोपदेशपराणि । तेषामन्यतमं (१०-३४) द्यूतकारस्य करुणविलापप्रस्तावव्याजेन हृदयस्पृश-मर्थमुपदिशति । सूक्तमिदमर्वाचां नीतिग्रन्थानां मूलभूतत्वात्सा-हित्यकोटावत्युत्कृष्टं स्थानमर्हति । अक्षदेवनादुपनतामात्मनः स्व-परिवारस्य च दुरवस्थितिं पश्यन्नपि कश्चित् द्यूतकारः तद्विषयिणी-मासक्तिं परित्यक्तुमशक्नुवन् विषीदति । यथा—

नीचा वर्तन्त उपरि स्फुर-
न्त्यहस्तासो हस्तवन्तं सहन्ते ।
दिव्या अङ्गारा इरिणे न्युप्ता
शीताः सन्तो हृदयं निर्दहन्ति ॥

स्त्रियं दृष्ट्वाय कितवं तताप-
न्येषां जायां सुकृतं च योनिम् ।
पूर्वाह्णे अश्वान युयुजे हि बभ्रू-
न्त्सो अग्नेरन्ते वृषलः पपाद ॥

अक्षैर्मा दीव्यः कृषिमित् कृषस्व
वित्ते रमस्व बहुमन्यमानः ।
तत्र गावः कितव तत्र जाया
तन्मे विचष्टे सवितायमर्यः ॥

द्यूतक्रीडोपयुक्ता अक्षाः विभीतकवृक्षस्य बीजैरुत्पाद्यन्ते । पुराकल्पप्रवृत्तोऽयमक्षक्रीडासम्प्रदायो भारतभूमावद्यापि वरीवर्ति ॥

हितोपदेशपराण्यन्यानि त्रीणि सूक्तानि सङ्ग्रहरूपेणोपनिबद्धानि लौकिकसंस्कृतकाले सर्वतोमुखं पल्लवितानां बह्वर्थगर्भितानां नीतिग्रन्थानां बीजभूतानि । तेषामन्यतमं चतुर्ऋचं सूक्तं

तत्तत्कर्मानुरूपफलोदयानन्तरं मनुष्येष्वाविर्भवन्तीं सौम्यां चेतोवृत्तिं नीतिशास्त्रानुसारिण्या सरण्या वर्णयति (९-११२)—

नानानं वा उ नो धियो
  विव्रतानि जनानाम् ।
तक्षा रिष्टं रुतं भिष-
  ग्ब्रह्मा सुन्वन्तमिच्छतीन्द्रायेन्दो परि स्रव ॥

कारुरहं ततो भिष-
  गुपलप्रक्षिणी नना ।
नानाधियो वसूयवो
  नुगा इव तस्थिमेन्द्रायेन्दो परि स्रव ॥

तत्रैवान्यत् सूक्तं धर्मसत्कर्मणोरवश्यानुष्ठेयतामाचष्टे (१०-११७)—

पृणीयादिन्नाधमानाय तव्यान्
  द्राघीयांसमनुपश्येत पन्थाम् ।
ओ हि वर्तन्ते रथ्येव चक्रा-
  न्यमन्यमुपतिष्ठन्ति रायः ॥

कृषन्नित्फाल आशितं कृणोति
  यन्नध्वानमपवृङ्क्ते चरित्रैः ।

वर्दन्ब्रह्मा वर्दतो वनीयान्
पृणन्नापिरपृणन्तमभिष्यात् ॥

तेषां चतुर्थं सूक्तं (१०—७१) सुभाषितस्य महिमानं तच्चैकादशर्चं सूक्तम् । तत्र चत्वारो मन्त्रा उदा-

सक्तुमिव तितउना पुनन्तो
यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते
भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥

यस्तित्याज सचिविदं सखायं
न तस्य वाच्यपि भागो अस्ति ।
यदीं शृणोत्यलकं शृणोति
नहि प्रवेद सुकृतस्य पन्थाम् ॥

हृदा तष्टेषु मनसो जवेषु
यद्ब्राह्मणाः संयजन्ते सखायः ।
अत्राह त्वं विजहुर्वेद्याभि-
रोह ब्रह्माणो विचरन्त्युत्वे ॥

ऋचां त्वः पोषमास्ते पुपुष्वान्
गायत्रं त्वो गायति शक्करीषु ।
ब्रह्मा त्वो वदति जातविद्यां
यज्ञस्य मात्रां विमिमीत उत्वः ॥

लौकिकसंस्कृतग्रन्थेष्वतिशयेन वर्ण्यमानं स्त्रीणां धनस्य च कौटिल्यमधिकृत्य ऋग्वेदीयसूक्तेष्वपि बहुत्र दूषणोद्घोषणं कृतमुपलभ्यते । तथा हि ऋषि. कश्चित् (१०–२७–१२)—'कियत्यो योषाः केवलधनाशया वधूयतां पुरुषाणामनुरागपात्राणि भवन्ति ।' इति. अन्यः कश्चित् स्वामीपिसता गाः सम्बोधयन् (६२–८–६)—हे गावः, 'यूयं कृशमपि जनं पीवानं निःश्रीकमपि सुश्रीकं विदध्वे' इति, अपरः कश्चित् (८–३३–१७)— इन्द्रः खलु यदब्रवीत्, स्त्रियाश्चेतः शासितुमशक्यं तस्याः प्रज्ञापि लघीयसी' इति, चतुर्थः कश्चित् (१०–९५–१५)— नैव वै स्त्रैणानि सख्यानि सन्ति, ताः खलु सालावृकहृदयाः' इति चैवंरीत्या दूषणान्युद्भावयन्ति । अथाप्यन्यः कश्चिदिदमनुमन्यते (५–६१–६)— 'नास्तिकात् त्यागविमुखाच्च पुरुषाद् बह्वयः स्त्रियः प्रशस्यन्ते' इति ॥

अथ प्रहेलिकासूक्तानि निरूपयाम । तानि च ऋग्वेदे प्रकरणद्वये समुपलभ्यन्ते । तत्राष्टममण्डलगतमेकोनत्रिंशं सूक्तं प्रहेलिकामयं परिस्फुटार्थम् । तद्गतैर्दशभिर्मन्त्रैरन्यान्या देवता

अनिर्दिष्टनामानस्तत्तद्विशेषगुणैः स्तूयन्ते । तत्तन्मन्त्रोद्दिष्टदेवताविशेषवितर्कस्तु श्रोत्रधीनः । तथा हि विष्णुरित्थं निर्दिश्यते—

त्रीण्येक उरुगायो विचक्रमे ।
यत्र देवासो मदन्ति ॥

इतोऽपि गहनतरं प्रहेलिकामयं सूक्तं प्रथममण्डले (१६४) द्विपञ्चाशता मन्त्रैर्घटितमुपलभ्यते । न किमपि तत्र साक्षादुपवर्ण्यते । तदीया भाषाशैल्यपि पारिभाषिकशब्दजटिलत्वाद् दुरधिगमा । तत्र बहुषु मन्त्रेष्वव्यक्तगत्या विषयाणां वर्णनात् तदुद्दिष्टा अर्थाः सम्प्रति दुरभिज्ञाना एव । ता एताः प्रहेलिकाः केवलप्रश्नरूपा. । एकत्र परं तदीयमुत्तरमपि श्रूयते । तत्र गूढप्रश्नरूपेण घटितानां बहूनां प्रहेलिकानामुपपत्तिनिरूपणे तत्कर्तारः ऋषयोऽपि न शक्ता । तत्र चतुर्ष्वेकस्मिन्नंशे सूर्यः समुद्दिष्टः । षट्सु सप्तसु वा मन्त्रेषु मेघः विद्युद् वर्षकर्म च प्रस्तूयते । पुनर्द्वित्रेषु मन्त्रेषु संवत्सरः तदीयाः प्रविभागाश्चोपवर्ण्यन्ते । द्वयोर्मन्त्रयोर्जगदुपादानभूतमद्वैतवस्तु परामृश्यते । अपरे केचिन्मन्त्राः महता यत्नेन व्याख्यायमानाः— उषा. द्यौ भूमिः. छन्दांसि, वाक्, इत्यादिकानर्थानुपहरन्त सम्भाव्यन्ते । तत्र स्पष्टार्थानां मन्त्राणां मध्यात् कश्चिदिहोदाह्रियते । स च षष्ट्युत्तरत्रिशतदिवसोपलक्षितं द्वादशमासात्मकं कालचक्रं वर्णयति । यथा—

द्वादशारं नहि तज्जराय
वर्वर्ति चक्रं परि द्यामृतस्य ।
आ पुत्रा अग्ने मिथुनासो अत्र
सप्त शतानि विंशतिश्च तस्थुः ॥

अपि च चैत्रादयो द्वादश मासाः यमलत्वेन मलमासाख्य-स्त्रयोदशो मास एककत्वेन च वर्ण्यन्ते । तथा हि— 'साकं जानां सप्तथमाहुरेकजं. षळिद्यमा ऋषयो देवजा इति' इति श्रूयते । इह षण्णामृतूनां देवजातत्ववर्णनान्मलमासस्य मनुष्यजातत्वमभिप्रेत-मनुमीयते । अर्वाचीने वैदिककाले त्वेते प्रहेलिकामन्त्राः ब्रह्मोद्य-शब्देन व्यपदिष्टाः राज्ञां यज्ञोत्सवादौ ब्राह्मणानां परिषत्सु वा प्रतिभाप्रभावाविष्करणार्थं विद्वद्भिर्विवादपदसारोपिताः ॥

एषां प्रहेलिकामन्त्राणां सजातीयास्तत्त्वविद्योपपादका मन्त्राः षट्सु सप्तसु वा विश्वोत्पत्तिसूक्तेषु गर्भीकृता । इह हि जगतः सृष्टेः प्रागवस्थामधिकृत्योपवर्ण्यमानाः सर्वे विषयाः देवतोपाख्यानै-र्यज्ञसम्बन्धैश्च करम्बिताः । अथाप्येते विषयाः पश्चात्कालेऽभिवृद्धि गतानामुच्चावचानामभिप्रायविशेषाणां मूलभूतत्वादत्यन्तमवधेया भवन्ति । तत्र जगदुत्पत्तिप्रकारो बहुषु सूक्तेषु याज्ञिकदृशा एकस्मिन् सूक्ते तात्त्विकदृशा च निरूपितः । तत्र प्राञ्चो मन्त्रकारा. जगदिदं देवैः समुत्पादितमित्यमन्यन्त । परन्त्वयमभिप्रायः ऋग्वेदे बहुत्रोपलभ्यमानेन 'द्यावापृथिव्यौ देवानां पितरा'विति

श्रुयन्तेऽग्न सह वेमन्य भजते । अपि च ऋषयः पितॄणां पुत्र-सम्भूतत्वमभिदधाना लोकाविरुद्धमर्थमुपस्थापयन्ति । तथा हि इन्द्रः स्वपितरं स्वकीयायामततोरजीजनदिति श्रूयते (१०—५४—३) । ईदृशेन कल्पनाविशेषेण कुतुकितान्तरङ्गाः पुरोधसो बहुविधानितत्सजातीयानाशयानुद्भावयन्तो देवानामन्योन्यस्मादुत्पत्ति-मङ्गीचक्रुः । तथा च श्रूयते अदितेर्दक्षोऽजायत दक्षाच्चादिति-रिति (१०—७२—४) ॥

ऋग्वेद एव क्रमेणेन्द्रादिदेवेभ्योऽन्य एव कश्चित् सर्वोत्तमः स्रष्टाऽभ्युपगतः । यः खलु विश्वोत्पत्तिसूक्तेषु पुरुष इति विश्व-कर्मेति हिरण्यगर्भ इति प्रजापतिरिति च व्यपदिश्यते । इह किञ्चिदवधेयं यत्—ऋग्वेदारम्भदशायामृषयः 'अजायत' इत्या-दीनि जन्धातोः रूपाणि प्रयुञ्जानाः विश्वेषां वस्तूनां निसर्गजातत्व-ममंसत । अत एव विश्वोत्पत्तिसूक्तेषु कस्माचित् प्रकृतिभूता-द्वस्तुनः सकाशात् परिणामविधया विश्वस्योत्पत्तिरुक्ता । विश्व-विख्याते पुरुषसूक्ते तु (१०—९०) देवाः सर्वे स्रष्टार एव, किन्तु विश्वमिदमत्यद्भुताकारस्यादिमपुरुषस्य शरीरावयवैरुत्पादितं, यः खलु महापुरुषः सहस्रशीर्षा सहस्रपाद् भूमिं विश्वतो वृत्वात्य-तिष्ठदित्युपवर्णितम् । विश्वस्यास्य महापुरुषशरीरोत्पन्नत्ववृत्तान्तो ऽयमन्यत्रापि प्राक्कालिकेषूपाख्यानेषु श्रूयमाणत्वादत्यन्तं प्राचीन एव । परन्त्वत्रत्या विषयोपवर्णनरीतिरत्यन्तमर्वाचीना दृश्यते । यतो हि ब्राह्मणग्रन्थेषु विष्णुयज्ञयोरिवास्मिन् सूक्ते सृष्टिक्रियायज्ञ-

क्रिययोरभेदं परिकल्प्य महापुरुषे यज्ञपशुत्वमारोप्य विशस्यमानस्य तस्याङ्गाद्विश्वस्याङ्गान्युत्पन्नत्वेनोक्तानि । तथा हि 'तस्य शिरो द्यौः, नाभिरन्तरिक्षं पादौ भूमिश्चाभूवन्, एवं तस्य मनसश्चन्द्रमा, चक्षुषः सूर्यः प्राणाद्वायुश्चाजायन्त तथा लोकानकल्पयन देवाः' इति श्रूयते । अपि चात्र पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यं पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवीत्याद्यद्वैतवादानुप्रवेशोऽपि सूक्तस्यास्यार्वाचीनताया लिङ्गम् । अयं पुरुषो ब्राह्मणग्रन्थेषु प्रजापत्यभिन्नत्वेन, उपनिषद्ग्रन्थेषु प्रपञ्चाभिन्नत्वेन च सिद्धान्तितः । ततः पश्चाद् द्वैतवादावलम्बिनि साङ्ख्यमतेऽयं प्रकृतिप्रतियोगिभूतात्मत्वेन स्वीकृतः । अपि च पुरुषसूक्तेऽस्मिन् महापुरुषादुत्पन्नत्वेनोक्त, विराट् पश्चात्काले परब्रह्मवस्त्वतिरिक्तसजीवब्रह्मत्वेन वेदान्तिभिरास्थितः । इत्थंरीत्या पुरुषसूक्तमिदं भारतवर्षीयाणामद्वैतसिद्धान्तानां प्राचीनतमं मूलप्रमाणमिति शक्यमभ्युपगन्तुम् । परन्तु ऋग्वेदीयसूक्तानां मध्येऽर्वाचीनतमेष्विदमेकतममित्यप्यवगन्तव्यम् । यतो ह्यत्र ऋगादयस्त्रयो वेदा नामग्राहं गृहीताः । अपि च ऋग्वेदेऽन्यत्रादृश्यमानश्चातुर्वर्ण्यविभागोऽत्र सविशेषं पुरस्कृतः । तथा हि श्रूयते 'ब्राह्मणोऽस्य मुखमासीद्, बाहू राजन्यः कृत., ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत' इति ॥

अन्येषु सर्वेष्वपि विश्वोत्पत्तिसूक्तेषु विशेषत एको देव. प्रपञ्चकर्तृत्वेन वर्ण्यते न तु सामान्यतः सर्वे देवाः । सूक्तान्त-

रीयेषु बहुषु मन्त्रेषु सूर्यो विश्वस्यास्य विधातृत्वेन ऋषिभिरङ्गीकृतो दृश्यते । तथा हि श्रूयते—सूर्य आत्मा जङ्गमस्थावराणामिति (१-११५-१). एकं सद्विप्रा बहुधा वदन्तीति च (१-१६४-४६) । ईदृशैर्वर्णनाविशेषैः सूर्य एव विश्वविधातृत्वेनाध्यवसित इति बोध्यते । अयमेव द्वाभ्यां विश्वोत्पत्तिसूक्ताभ्यां (१०-८१. ८२) स्तूयमानस्य विश्वकर्मणोऽपि स्थानी भवितुमर्हति । तत्र सप्तमन्त्रात्मकादादिमसूक्तान्मन्त्रत्रयमिहोदाह्रियते—

किंस्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्कथासीत् ।
यतो भूमिं जनयन् विश्वकर्मा
विद्यामौर्णोन्महिना विश्वचक्षाः ॥

विश्वतश्चक्षुरुत विश्वतोमुखो
विश्वतो बाहुरुत विश्वतस्पात् ।
सम्बाहुभ्यां धमति सम्पतत्रै-
र्द्यावाभूमी जनयन् देव एकः ॥

किंस्विद्वनं क उ स वृक्ष आस
यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु त-
द्यदध्यतिष्ठद्भुवनानि धारयन् ॥

इह वनशब्दप्रयोगेऽस्ति स्वारस्यम् । एतत्सजातीयः 'ह्ले' शब्दो ग्रीकभाषायां जगदुपादानवस्तुवाचकत्वेन प्रयुज्यते ॥

समनन्तरसूक्तं तु (१०–८२) सिद्धान्तमिमं किञ्चिदन्यथयन् आप एवादौ विश्वस्य वस्तुजातस्य विश्वेषां देवानां चोत्पत्तिबीजमसृजन्निति वर्णयति—

यो नः पिता जनिता यो विधाता
धामानि वेद भुवनानि विश्वा ।
यो देवानां नामधा एक एव
तं संप्रश्नं भुवना यन्त्यन्या ॥

परो दिवा पर एना पृथिव्या
परो देवेभिरसुरैर्यदस्ति ।
कंस्विद्गर्भं प्रथमं दध्र आपो
यत्र देवाः समपश्यन्त विश्वे ॥

तमिद्गर्भं प्रथमं दध्र आपो
यत्र देवाः समगच्छन्त विश्वे ।
अजस्य नाभावध्येकमर्पितं
यस्मिन् विश्वानि भुवनानि तस्थुः ॥

न तं विदाथ य इमा जजानाऽ-
न्यद्युष्माकमन्तरं बभूव ।

अपि चानुपमसौन्दर्यशालिनि कस्मिश्चिद् विश्वोत्पत्तिसूक्ते (१०–१२९) विधाता हिरण्यगर्भशब्देन निर्दिश्यते । तादृशनामधेयकल्पनायामसंशयमुदयाचलगतः सूर्य एव ऋषीणामुद्बोधकोऽभूत् । अपि चेहाग्निं जनयन्त्य आपः सर्वेषां जीवानां गर्भं दधत इति वर्ण्यन्ते—

हिरण्यगर्भः समवर्तताग्रे
भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां
कस्मै देवाय हविषा विधेम ॥

य आत्मदा बलदा यस्य विश्व
उपासते प्रशिषं यस्य देवाः ।
यस्य छायाऽमृतं यस्य मृत्युः
कस्मै देवाय हविषा विधेम ॥

आपो ह यद्बृहतीर्विश्वमायन्
गर्भं दधाना जनयन्तीरग्निम् ।

ततो देवानां समवर्ततासुरेकः
कस्मै देवाय हविषा विधेम ॥

यश्चिदापो महिना पर्यपश्य-
द्दक्षं दधाना जनयन्तीर्यज्ञम् ।
यो देवेष्वधि देव एक आसीत्
कस्मै देवाय हविषा विधेम ॥

सूक्तेऽस्मिन् दशमो मन्त्रः सोऽयमनिर्ज्ञातरूपः 'कस्मै' इत्यनेन जिज्ञासितो देवः प्रजापतिरिति बोधयति । परन्तु मन्त्रोऽयं पश्चात्कालयोजितो द्रष्टव्यः ॥

अन्येन विश्वोत्पत्तिसूक्तयुगलेन तात्विकदृशा विश्वोत्पत्तिक्रियां निरूपयता—असतः सद्जायतेत्यसत्कार्यवादः पुरस्कृतः । तत्रै-कस्मिन्नविस्पष्टार्थे सूक्ते (१०—४१) जगत्सृष्टौ प्रथमं भूमिस्ततो देवाः पश्चात्सूर्यश्चोत्पादिता इत्यवस्थात्रयमभिव्यज्यते । जगत्सृ-ष्टिप्रकारश्चेह परिणामसहकृतः श्रूयते—

ब्रह्मणस्पतिरेता सं
कर्मार इवाधमत् ।
देवानां पूर्व्ये युगेऽ
सतः सदजायत ॥

सृष्टिसूक्तं तावदितोऽपि रमणीयतरम् (१०–१२९)—

नासदासीन्नो सदासीत्तदानीं
नासीद्रजो नो व्योमापरो यत् ।
किमावरीवः कुह कस्य शर्मन् ?
अम्भः किमासीद्गहनं गभीरम् ॥

न मृत्युरासीदमृतं न तर्हि
न रात्र्या अह्न आसीत्प्रकेतः ।
आनीदवातं स्वधया तदेकं
तस्माद्धान्यं न परः किञ्च नास ॥

तम आसीत्तमसा गूळ्हमग्रे
प्रकेतं सलिलं सर्वमा इदम् ।
तुच्छ्येनाभ्वपिहितं यदासी-
त्तपसस्तन्महिनाऽजायतैकम् ॥

कामस्तदग्रे समवर्तताधि-
मनसो रेतः प्रथमं यदासीत् ।
सतो बन्धुमसति निरविन्दन्
हृदि प्रतीष्या कवयो मनीषा ॥

को अद्धा वेद क इह प्रवोचत्
कुत आजाता कुत इयं विसृष्टिः ।
अर्वाग्देवा अस्य विसर्जनेना-
था को वेद यत आबभूव ॥

इयं विसृष्टिर्यत आबभूव
यदि वा दधे यदि वा न ।
यो अस्याध्यक्षः परमे व्योमन्
सो अङ्ग वेद यदि वा न वेद ॥

न केवलमिदं सूक्तं सहृदयावर्जकानामनर्घाणां साहिती-गुणानामाकरत्वादेव किन्तु तावत्पूर्वकालाविर्भूतानां तादृशां प्रगल्भविचाराणामास्पदत्वाच्च सविशेषमवधानमर्हति । अत्रापि तावदुपलभ्यन्त एव भारतीयवेदान्तग्रन्थसुलभा अस्पष्टत्वासङ्गतत्वादयः शब्दमात्रोपपत्तिकल्पनामूलकाः केचिद्दोषाः । आस्तामेतत् । ऋग्वेदे तावदिदमेकमेव सूक्तं साङ्ख्याचार्यप्रतिष्ठापितस्य प्रकृतिसिद्धस्य परिणामवादस्य प्रभवः । अपि चार्यवर्गीयाणां चेतसि प्रथमाविर्भूतस्य तत्वविद्याविचारप्रकारस्य बोधकत्वादयमंशो न केवलं भारतीयानामेव किन्त्वार्यवंशीयानां सर्वेषामप्यवधानमर्हति । तत्र सृष्टिसूक्तोपस्थापितो यः सिद्धान्तः—असतः सदजायत, प्रथममापो जज्ञिरे, ततस्तप्यमानाभ्यस्ताभ्यो बुद्धिराविरभूदित्येवमादिरूपः स ब्राह्मणग्रन्थोपवर्णितेन विश्वोत्पत्तिसिद्धान्तेन सह

संवादं भजति । तथा हि ब्राह्मणग्रन्थेष्वपि—'असतः सज्जायते. तत आपः सम्भवन्ति, तासु हिरण्यगर्भाख्यं जगदुत्पत्तिबीजं सौवर्णमण्डं प्लवते, तस्माच्च जगदुत्पत्तिनिपुणा शक्तिराविर्भूय स्वेच्छया विश्वमिदं सृजति' इति श्रूयते । तत्र प्रजापतिर्विश्वं सृजतीति मन्यमानानि ब्राह्मणानि तस्यैव प्रथमाविर्भावं वर्णयन्ति । इतराणि तु सलिलस्य । अत्र सृष्टिक्रियापरिणामवादयोः सम्मिश्रणादुपनतोऽयं विरोधः साङ्ख्यैः निर्व्यापारस्य पुरुषस्य प्रेक्षणमात्रेण प्रकृतौ व्यापारोत्पत्त्या जगदुत्पत्तिमङ्गीकुर्वाणैः परिहृतः । ऋग्वेदीयानि विश्वोत्पत्तिसूक्तान्येतानि न केवलमुक्तरीत्या भारतीयतत्वविद्याया एव किन्तु सर्गादिप्रतिपादनपराणां सर्वेषां पुराणानामपि मूलप्रमाणभूतानीत्यवधेयम् ॥



## ॥ षष्ठोऽध्यायः ॥

### ऋग्वेदकालः

पूर्वाध्यायकृता ऋङ्मन्त्रविषयिणी समीक्षा बाढमतिदवीयसः कालस्य स्मरणीयवैभवस्य स्मृतिस्तूपायमानमृग्वेदं न केवलं चरित्रोपकरणसङ्ग्राहकत्वेन किन्तु पारमार्थिकशोभावाहित्वेनापि साहितीप्रणयिभिरन्ततः सङ्ग्रहरूपेणाप्यवश्यं परिचेतव्यमावेदयति । अपि च तत्र चित्रे निवेश्येव प्रकाशितमापादचूडं तस्य स्वरूपं प्राक्तन्या सतवर्मोल्लिखनशक्तेः सर्वातिशायित्वं बोधयति । यद्यपीह लौकिकविषयपरा मन्त्राः परिमिता एव तथापि तत्र तत्र विप्रकीर्णतया स्थिता आनुषङ्गिकाः केचिन्निर्देशविशेषाः भारतवर्षीयाणां प्राथमिकानामार्याणां सर्वान् वृत्तान्तान् विस्तरेणाख्यातुं प्रभविष्यन्ति । अत एव ऋग्वेदोऽयं नागरिकपरिष्कारचरित्रेऽप्यत्यन्तादरपदं भवति ॥

तथा हि—ऋग्वेदकृतां वासभूमिस्तत्तन्नदीपर्वतादिनिर्देशविशेषैरभिव्यज्यते । तत्र तावदयं निर्णयः—आर्या प्रथमं 'हिन्दुकुष्' पर्वतस्य पाश्चात्येन कान्तारवर्त्मना समभूभागान् प्रविश्य भारतवर्षस्य पश्चिमोत्तरभागावस्थितं पारसीकभाषायां 'पञ्जाब्' इत्यभिधीयमानं 'पञ्चाप' समाख्यमन्वर्थनामानं जनपदमध्यवात्सुरिति । ऋग्वेदे हि प्रायेण पञ्चविंशतिर्नद्यो निर्दिश्यन्ते । तत्र

द्वित्राः केवलमपहायान्याः सर्वा अपि सशाखायाः सिन्धुनद्याः संस्थानविशेषैरनुगताः । तासामेव पञ्च पञ्जापदेशे शाखापञ्चकत्वेन प्रवहन्त्यः पश्चादेकीभूय सिन्धुनदीं सङ्गच्छन्ति । याः खलु वितस्ता, असिक्नी (इयं पश्चाच्चन्द्रभागेत्याख्याता), परुष्णी (इयं पश्चादिरा-वतीत्याख्याता सम्प्रति रवीत्युच्यते), विपाट्, शुतुद्री च । अथापि वैदिकवर्गीयाः जनाः केचित् सिन्धोः पार एव कुभायाः प्रधानशाखामन्ववसिता उत्तरत. सुवास्तुपर्यन्तं दक्षिणतः क्रुमु-गोमतीपर्यन्तं च स्थिताः ॥

काश्चिदेव नद्यः सूक्तेषु द्वित्राधिकवारं निर्दिश्यन्ते. बह्वयस्तु सकृदेव । सिन्धुः सरस्वती च बहुत्र निर्दिश्यते । समग्रमेकं सूक्तं (१०—७५) सिन्धोः प्रशंसार्थं प्रवृत्तम । सूक्तेऽस्मिन्नन्या अप्यष्टादश नद्य. प्रस्तूयन्ते । ताश्च भूयसा तदीया. शाखा एव । महत्येषा नदी, मन्यामहे, ऋषीणां चेतस्यत्याश्चर्यमजनयत् । अत एवैनां स्तुवन् ऋषि.—एषा द्रुतगतीनामतिद्रुतगति , गाम्भीर्ये नद्यन्तरातिशायिनी च भवति. रोरूयमाणा गाव इव वत्समन्या नद्यस्तामभिधावन्ति' इति वर्णयति । तस्याः प्रवाहघोषो वेगिता चातिशयोक्त्या वर्ण्यते—

दिवि स्व॒नो य॑तते॒ भूम्यो॒पर्य्-
॒न॒न्तं शुष्म॒मुदि॑यर्ति भा॒नुना॑ ।

अभ्रादिव प्रस्तनयन्ति वृष्टयः
सिन्धुर्यदेति वृषभो न रोरुवत् ॥

सिन्धुशब्दः संस्कृतभाषायामार्याधिवासभूमेः पश्चिमसीमरेखात्मकस्य नदीमात्रस्य वाचकत्वेन प्रथमं प्रयुक्तः । ततःपश्चात् प्राक्तनागन्तुकैरिह सिन्धोरेवाग्रतो दर्शनात् स एव शब्द उपलक्षणमर्यादया भारतवर्षस्यापि नामत्वेन परिकल्पितः । एवं ग्रीकैः 'इण्डोस्' इत्येवंरूपेण गृहीतोऽयं शब्दस्तन्नदीलक्षितस्य देशस्य 'इण्डिय' इति नामकरणे द्वारीबभूव । अपि चायं शब्दः पुरा पारसीकैः 'हिन्दु'-रूपेणोपात्तोऽवस्तायां केवलदेशनामत्वेन प्रयुक्तः । यत्पुनरर्वाचीनैः पारसीकैः सिन्धुनदीपरिसरप्रदेशात्मको विन्ध्यहिमाचलान्तःपाती भागः हिन्दुस्थानमिति व्यपदिश्यते तद्युक्तरूपमाभाति ॥

ऋग्वेदे तत्र तत्र सप्तसिन्धवो निर्दिश्यन्ते । तत्र मन्त्र एकस्मिन्नयं शब्द आर्याधिवासभूमेरभिधायकत्वेन प्रयुक्तो दृश्यते । इदमत्रावधेयं यद्——अवस्तायामयं शब्दः पौरस्त्यकाबूलस्थानमात्रस्याभिधायकः 'हप्तहिन्दु' रूपेणोपलभ्यत इति । यद्यत्र सप्तपदं नियतसङ्ख्यापरत्वेन विवक्षितं स्यात् तर्हि 'सप्तसिन्धवः' इत्यनेन कुभासिन्धू पञ्चापगताः पञ्च नद्यश्च ग्राह्याः । तत्र कुभाया एव पश्चात्काले सरस्वतीति नामधेयं परिकल्पितं तर्क्यते । यतो ह्येषा सरस्वती ऋग्वेदेऽत्यन्तं पावनत्वेनाभिमता पौनःपुन्येन निर्दिश्यते, निरतिशयं देवतीकृत्य स्तूयते च । किन्तु ऋषेः स्तुतिः

निर्विशेषमतिविशालां कामपि नदीं विषयीकरोति । अतश्च सुगृहीतनामानो रोठप्रभृतयो विद्वांसः सरस्वतीत्येतत् सिन्धोरेव तद्गतपवित्रत्वद्योतकं नामधेयमित्यातिष्ठन्ते । परन्तु केषुचिन्मन्त्रेषु यमुनाशुतुद्र्योरन्तरालवर्तिनी कापि क्षुद्रा नदी सरस्वतीत्यनेन विवक्षितेति ज्ञायते । अपरं च पश्चात्काले सरस्वती दृषद्वत्या सह अम्बालदेशाद् दक्षिणतः स्थितस्य सिम्लदेशादुपत्रिंशक्रोशदूरे लब्धावधिकस्य ब्रह्मावर्तदेशस्य सीमरेखात्वेन निर्दिष्टा दृश्यते ॥

सैषा क्षुद्रा नदी यद्यप्यद्यत्वे सिकतान्तर्हिता न प्रकाशते तथापि तदीयः प्राक्तनो रयपथः सम्प्रत्युपलभ्यमानः पुरा तस्याः शुतुद्रीशाखात्वेनावस्थानमनुमापयति । तेनेदमनुमीयते यत्—सा पुरा वेदकाले समुद्रं रुञ्जगाम, इतो विशालतरा च बभूवेति । अपि च सा तस्मिन् काले परमपावनत्वेनाभिमताऽभूत् । अत एव सिन्ध्वादिमहानद्यनुरूपान् महागुणान् तद्गतत्वेन वर्णयतामृषीणामुक्तिषु नात्युक्तिदोषः प्रसज्यते । इदमप्यनुसन्धेयं यत्—सरस्वतीदृषद्वत्योः कूलेऽग्निरात्मानमुद्दीपयतीति वर्णयता मन्त्रेण दृषद्वत्यपि सकृत् सरस्वत्या सह निर्दिष्टोपलभ्यते । एतेन ऋग्वेदकाले सिन्धुनद्याः पौरस्त्यप्रान्तोऽपि साङ्गोपाङ्गानां यज्ञकर्मणां मन्त्रनिर्माणस्य च निर्विघ्नप्रवृत्तेः स्थानभूतं पुण्यक्षेत्रतामवापेत्यवगम्यते । अपि च तावदृग्वेदकालस्यान्तिमे भागे आर्यवर्गीयाः केचित् तं देशमतिक्रम्य गङ्गायाः पाश्चात्यतीरं प्रापन्नित्यपि शक्यमभ्यूहितुम् । तथा ह्युत्तरतः स्थिता गङ्गायाः प्रतीच्यतमा शाखा यमुनाभिधाना

नदी ऋग्वेदे मन्त्रत्रयनिर्दिष्टोपलभ्यते । तत्र मन्त्रद्वये तत्कूलपर्यन्तमार्यैरभिव्याप्तमिति व्यक्तीभवति । एवं गङ्गापि तेषां परिचिता ज्ञायते । यतो हि तन्नामधेयमृग्वेदे साक्षादेकस्मिन्नसाक्षादन्यस्मिंश्च मन्त्रे निर्दिष्टमुपलभ्यते । इदमप्यवश्यमवधेयं यद्—गङ्गाया नामापि नोपलभ्यते वेदान्तरेष्विति ॥

दक्षिणाशां लक्ष्यीकृत्य प्रयाता आर्यवर्गीयास्तु पञ्चापदेशात् प्रवहन्त्यः पञ्च नद्यो यत्र सिन्धुनद्या सह सम्भिद्यन्ते तावत्पर्यन्तमभिव्यापुः, न तां रेखामतिक्रम्य जग्मुः ऋङ्मन्त्रनिर्माणकाले । समुद्रस्तु तैः कर्णाकर्णिकया श्रुतो न तु साक्षाद्दृष्टः । अत एव विचित्राणि शतशाखानि सिन्धुनदीमुखानि ऋग्वेदे न प्रस्तूयन्ते । अपि चाद्यत्वे सिन्धुनद्या निम्नप्रदेशेषु यत्प्रधानं कर्म मत्स्यबन्धनाख्यं तस्य वार्तापि न श्रूयते ऋग्वेदे । अपि च खलु नानाजातीया मृगाः पक्षिणः कृमिकीटादयश्चासकृन्निर्दिष्टाः, मत्स्यस्तु सकृदेव । अयमीदृशो विशेषः पञ्चापदेशीयासु पौरस्त्यकाबूलस्थानीयासु च नदीषु प्रकृत्यैव मत्स्यानां वैरल्यादित्याकलयामः । यजुर्वेदे त्वाविष्कृतं मत्स्यबन्धनस्य परिज्ञानम् । युक्तश्चैतत् । यजुर्वेदो ह्यार्यैर्भूयोऽपि पूर्वां दक्षिणां च दिशं प्राप्तैर्निर्मितः । पश्चात्काले सागरपर्यायत्वेन परिणतः समुद्रशब्दो योगजवृत्त्या 'उदकसङ्घात' रूपमर्थमभिधत्ते । स च ऋग्वेदे पञ्चापदेशीयानां पञ्चानां नदीनां सिन्धुनद्याश्च सम्भेदस्थानस्य विवक्षया प्रयुक्तः सम्भाव्यते । यत्र हि महानुदकसङ्घातः सम्भवति । यथा तन्मध्यगता कापि

नौका तीरादलक्षिता भवति तथाऽतिविशालता च दृश्यते । अपि चाद्यत्वे तद्देशीया जनाः सिन्धुनदीं सिन्धुसमुद्र इति व्याहरन्ति । ऋग्वेदेऽपि सिन्धुशब्दस्य सागरपरत्वेन प्रयोग उपलभ्यमानः सिन्धुसमुद्रविवक्षयैव न तु साक्षात्सागरविवक्षया तस्य तैरदृष्ट-त्वात् । अत एव साक्षात्कृतसागरैरुपनिबन्धनीयाः सागरोपमा-दयोऽलङ्कारविशेषा ऋग्वेदे नोपलभ्यन्ते । नौकातरणवृत्तान्ताश्च ऋग्वेदे श्रूयमाणाः पारगमनोद्देशस्यावगम्यमानत्वान्नौकादण्डेन प्रचोद्यमानया नावा नदीतरणमेव परामृशन्ति । तथा हि ऋग्वेदे क्वचिदग्निरेवं प्रार्थ्यते—अग्ने त्वमस्मान नौभिः सिन्धोरिव सर्वेषां शोकभयानां पारं प्रापयेति । अर्वाचीनेषु च ग्रन्थेषु निर्वर्तितात्मकृत्यः कृत्स्नोपात्तविद्यश्च पारगशब्देन व्यपदिश्यते । अथर्ववेदद्रष्टारश्च सागरपरिचयवन्तो बभूवुरित्ययमर्थोऽथर्वमन्त्रेभ्यो व्यक्तीभवति ॥

एवं पर्वता अपि ऋग्वेदे बहुत्र निर्दिश्यन्ते । नद्यश्च पर्वतप्रभवत्वेन स्तूयन्ते । तत्र 'हिमवन्तः' इत्यनेन हिमाद्रय एव विवक्षिताः । ते च विधात्रा पाल्यमानाः श्रूयन्ते । तदीयाः शृङ्गविशेषास्तु नैव ऋग्वेदे शृङ्गग्राहिकया निर्दिष्टाः । 'मूजवत्' समाख्यमेकं शृङ्गमन्योक्त्या सोमप्ररोहभूमित्वेन वर्ण्यते । शृङ्ग-मिदं काबूलदेशप्रत्यासन्ने काश्मीरेभ्यो दक्षिणपश्चिमावस्थितेषु पर्वतशृङ्गेष्वन्यतमं च भवितुमर्हतीत्यर्वाचीनवैदिकग्रन्थावलोडना-न्निश्चीयते । अथर्ववेदस्त्वन्यदपि हिमालयसम्बन्धि गिरिद्वयं

प्रस्नौति । तत्रैकः 'त्रिकुत' इत्युच्यते । अयमर्वाचीनेषु वैदिक-ग्रन्थेषु 'त्रिकूट' इति देश्यभाषासु 'त्रिकोट' इति च व्यपदिश्यते । तस्यैवोपत्यकायामस्किनी प्रवहति । अन्यश्च 'नावप्रभ्रंशन' समाख्यः । अयमेव पुराणोक्तः 'नौबन्धना'ख्यः शतपथब्राह्मणोक्तः 'मनोरव-सर्पणा'ख्यश्च गिरिः । यत्र हि तोयविप्लवावसाने मनोर्नौका निश्चलाभूदिति शतपथब्राह्मणे श्रूयते । आर्यावर्तदक्षिणापथयो-र्मध्यवर्तिनः विन्ध्याद्रेर्नामापि नोपलभ्यते ऋग्वेदे । तथा विन्ध्याद्रिं दक्षिणेन प्रवहन्ती नर्मदाऽपि न प्रस्तूयते ॥

एवंविधैर्लिङ्गविशेषैरेतदध्यवसीयते यत्—आर्याः ऋङ्मन्त्र-निर्माणकाले पश्चिमतः सिन्धुनद्या पूर्वतः शुतुद्र्या उत्तरतो हिमवता च परिगतं तालवृन्ताकृति पश्चिमोत्तरभागं पूर्वपश्चिमभागयोरुक्तं सीमाद्वयमतिक्रम्य बहिः प्रसृतौ पार्श्वभागौ चाध्यासिषतेति । इदानीन्तनः पञ्चापदेशस्तु केवलं मरुस्थलात्मको दृश्यते । न खल्वत्र पश्चिमोत्तरभागावस्थितात् रवाल्पिण्डिदेशादन्यत्र कुत्राऽपि पर्वताश्चक्षुषोर्लक्ष्या भवन्ति । नाप्यत्र वृष्ट्युत्पादको वायुः वहति । न चात्र पाञ्चभौतिकव्यापाराणामात्यन्तिकी प्रवृत्तिः । अत्र हि मन्दमन्दो धारासारः परं वर्षासु पतति । उषसः कान्ति-श्चात्रैकान्तरमणीया । दुर्लभैव तस्यास्तादृशी कान्तिरुत्तरभारतवर्षे-ऽन्यत्र । इत्थमालोच्यमाने हापिकनाचार्योक्तिरत्रानुसन्धेया भवति । स खल्वाचार्यो ब्रवीति—उषोवरुणादिस्तुतिपराणि प्राचीनतराणि सूक्तानि परं पञ्चापदेशे निर्मितानि इतराणि तु अम्बालदेशा-

दक्षिणतः स्थिते विशुद्धे सरस्वत्यास्तटे समुत्पादितानि. ऋग्वेदोपव-र्णितानां सर्वेषां वस्तुविशेषाणामवस्थाविशेषाणां च तत्रोपलभ्य-मानत्वादिति । मन्यामहे, पश्चात्प्रदेशीया शीतोष्णस्थितिर्वेदकाला-दर्वागप्यन्यथाभूतेत्यपसिद्धान्ताश्रयणापेक्षया हाप्किनाचार्यसिद्धान्ता-ङ्गीकारोऽत्र ज्यायान् ॥

अपि च वृक्षलतादीनां मृगविशेषाणां च परिस्थिति वर्णयद्भिः सूक्तैरुपस्थाप्यमानेन तत्तल्लिङ्गेनापि उपर्युक्तैव ऋग्वेद-सूक्तानामुत्पत्तिभूमिरित्यवधार्यते । तथा हि—ऋग्वेदे प्रधानपद-वीमारोपितः सोमः पर्वतप्ररोहित्वेन दैनन्दिनक्रियासु प्रभूतोपयुक्त-त्वेन च श्रूयते । अतः सोमप्रचुरो देश एव ऋग्वेदकृतां वास-भूमिर्भवितुमर्हति । ब्राह्मणकाले त्वयं सोमो दूरादानेतव्यः कृच्छ्र-साध्यश्चाभूत् । अत एव ब्राह्मणग्रन्थेषु तत्प्रतिनिधित्वेन वस्त्व-न्तरमुपयुक्तं श्रूयते । गच्छति काले प्रथमोपयुक्तायाः सोमलतायाः स्वरूपमप्यज्ञातमभूत् । अधुनोपयुज्यमाना लतात्वन्यैव । यतो ह्येतल्लतारसस्य पाने नियमेन वमनं सम्पद्यते । पारमार्थिकस्य सोमस्य पाने तु चेतस्युन्मादमात्रं जायत इति ऋग्वेदकाराः समाम-नन्ति । पारसीकैरद्यत्वे हयोमकर्मण्युपयुज्यमाना लताऽपि नैव प्रथमोपयुक्ता साक्षात्सोमलता । आस्तामेतत् । इदमन्यद्विचार-यामः—अर्वाचीनेषु वेदेषु प्रथमदृष्टस्य प्रधानजीविकोपायत्वेना-स्थितस्य च तण्डुलस्य नामापि न दृश्यते ऋग्वेदे । यस्य हि नैसर्गिकी समृद्धिर्भारतवर्षस्य पूर्वदक्षिणभागे वृष्टिमति देशे ।

अतो मन्यामहे. नैव ऋग्वेदकाले सिन्धुनद्यास्तटे शालयः प्ररोपिताः । पश्चात्काले तु जलाभ्युक्षणद्वारा भारतवर्षे सर्वत्र तत्कृषिः सम्पादिता स्यात् । यवस्तु ऋग्वेदकाले संवर्धित एव । परन्तु पश्चात्कालिकेषु ग्रन्थेष्विव यवशब्दः ऋग्वेदे न धान्यविशेषे निरूढः किन्तु धान्यसामान्याभिधायी दृश्यते ॥

ऋग्वेदनिर्दिष्टानां महावृक्षाणां मध्येऽश्वत्थः प्रधानतमः । पिप्पलाख्यं तस्य फलं मधुरं पक्षिणामाहारश्चेति श्रूयते । अपि च तद्दारूणि सोमपात्रायोपयुक्तानीति ऋग्वेदे, तत्काष्ठखण्डानि (पश्चात्काले प्रमन्थशब्देनोक्तानि) यज्ञाग्निमथनायोपयुक्तानीत्यथर्ववेदे च श्रूयते । एतेन तस्मिन् कालेऽप्ययमश्वत्थः पवित्रत्वेनाद्रियतेति शक्यमभ्युपगन्तुम । अपि चाथर्ववेदे श्रूयते—तृतीये स्वर्गे लोके कस्यचिदश्वत्थतरोर्मूले देवाः प्रतिवसन्तीति । मन्यामहे. यमस्य पितृणां च पानमहोत्सवस्याश्रयभूतत्वेन ऋग्वेदे वर्णितः कोमलपल्लवालङ्कृतस्तरुरप्ययमश्वत्थ एव स्यात् । वृक्षोऽयमद्यापि पिप्पलापरनामधेयः परमपावनत्वेन प्रतीयते भारतीयैः । अन्यः कश्चिदृग्वेदे कुत्राप्यनिर्दिष्टः अथर्ववेदे द्विवारं निर्दिष्टश्च न्यग्रोधाख्यो वृक्षः । यः खलु वृक्षान्तरदुर्लभेन शाखासञ्चयेनाक्रान्तदिगन्तः अभानुभेद्येनार्धगोलाकृतिना पल्लवनिवहेनोपशोभितशिरोभागः स्तम्भैरिवावरोहशतैरवलम्बित विधात्रा परिकल्पितः पर्णमयो देवालय इव विलसन् आङ्गलद्वीपालङ्कारभूतः 'ओक्' वृक्ष इव भारतवर्षस्य

पल्लीषु निवसतां जनानां परमोपकाराय भवन् वृक्षान्तरातिशायित्वा-दवश्यनिर्देष्टव्योऽभूत् ॥

वन्यानां दुष्टसत्त्वानां मध्ये ऋग्वेदेऽसकृन्निर्दिश्यमानः सिंहः । ऋषय एनं पर्वतेवासिनं वागुरया गृह्यमाणं च वर्णयन्ति । अथापि ते तस्य गर्जनमेव प्राधान्येन स्तुवन्ति । सिंहोऽयं पुरा शुतुद्र्याः सिन्धोश्च निम्नभागात् पूर्वतः स्थिते तन्निवासयोग्ये सिकतारण्ये भूयसा कृताधिवासः सम्प्रति गुर्जरदेशाद्दक्षिणतः स्थितेषु घोरारण्येषु परं निवसति । अथाप्ययं कविलोकैर्मृगराज-पदवीमधिरोपितः भारतवर्षीयग्रन्थसमुदाये सर्वत्र लब्धप्रचारो दृश्यते । सोऽयं सिंहशब्दो देश्यभाषासु सिङ्घरूपतामापन्नोऽद्यापि भारतीयजनानां नामशब्देषु संयोज्यते ॥

व्याघ्रस्तु न कुत्रापि ऋग्वेदे निर्दिष्टः । युक्तश्चैतत् । यतो ह्ययमिदानीं भारतवर्षेऽरण्यप्रदेशेषु सर्वत्र निवसन्नपि पुरा प्राधान्येन वङ्गधरायाः कच्छकुञ्जेष्ववात्सीत् । अर्वाचीनेषु वेदेषु यद्यपि सिंहोऽपि पृथङ्निर्दिष्टस्तथापि व्याघ्रोऽयं सिंहस्थाने समादिष्टस्तत्साधारणैर्गुणैः स्तूयते । तथा हि— तस्य मांसप्रियत्वं मारात्मकत्वं च तत्र शश्वदुद्घुष्यते । शुक्लयजुर्वेदे च सन्दिग्धस्य कर्मणः करणं स्वपतो व्याघ्रस्य निद्राभञ्जनेनोपमीयते । अथर्ववेद-श्चैनं पुरुषादमाह । वेदग्रन्थेषु सिंहव्याघ्रयोरेवंविधसम्बन्धवर्णनाद् वैदिककाल एवार्याणां पौरस्त्यप्रान्ताभिगमनमभ्यूह्यते ॥

प्रायेणेदृश्येव ऋग्वेदे गजस्यापि स्थितिः । अयं केवलं मन्त्रद्वये निर्दिष्ट उपलभ्यते । तत्राप्ययं 'हस्तीमृगः' इति व्यपदिश्यते । एतेन ऋषय एनं साश्चर्यहृदया अपश्यन्निति व्यज्यते । ऋग्वेदगतेनैकेन मन्त्रेण ऋग्वेदकालस्यान्तिमे भागे गजबन्धनोपायः परिज्ञात इति ग्रीकदेशीयमगस्तिनसोक्त्या क्रिस्तोः पूर्वं तृतीये शतकाब्दे गजबन्धनं भारतभूमौ प्रसिद्धमासीदिति च ज्ञायते । यजुरथर्ववेदयो काले गजोऽत्यन्त परिचित एवासीत् । यतो हि न केवलं तत्र गजस्य निर्देशमात्रं किन्तु हस्तवत्वनिमित्तकस्य हस्तीति विशेषणशब्दस्य गजपर्यायत्वेन प्रयोगोऽपि दृश्यते । गजस्य नियतं वासस्थानमुत्तरभारतवर्षावस्थितः तेरयिदेशः कान्पूरदेशीयरेखांशात् पूर्वां दिशमन्वायतो हिमवदुपत्यकारण्यप्रदेशो वा भवति ॥

वृक ऋग्वेदे सिंहादप्यधिकतर निर्दिश्यते । वराहोऽपि मृगयाशुनकैर्गृह्यमाणत्वेन प्रस्तूयते । ग्राम्यो वन्यश्चेत्युभयविधोऽपि महिषः ऋग्वेदकाराणां परिचित । तस्य च मांसं तस्मिन् काले संस्कृत्य भक्षितं श्रूयते । ऋक्षस्तु ऋग्वेदे सकृदेव सङ्कीर्तितः । कपिः पुनरेकस्मिन्नर्वाचीने मन्त्रे परं निर्दिष्ट (१०—८६) । किन्तु तदात्वे जनैरेष बध्वा साधूकृत इति सूक्तादस्मादवधार्यते । वानर इति सार्वजनीनमर्वाचीनं तस्य नामधेयं भारतीयैरिदानीं देश्यभाषास्वपि भूयस्तयोपयुज्यते । तच्च नामधेयं तस्य वनचरत्वात्

सिद्धम । रुड्याई किंग्लिङ्गस्तु—वा+नर इति छित्वा भूयो-नरमाद्वयवती वानरजातिः कपिजातेरन्यैवेत्याह ॥

ऋग्वेदनिर्दिष्टा ग्राम्याः क्षुद्रा मृगास्तु मेषा अजा गर्दभाः श्वानश्च । तत्र श्वानः मृगयार्थं मार्गरक्षार्थं गृहरक्षार्थं गवान्वेषणार्थं चोपयुक्ता इत्यवगम्यते । अथापि गाव एव तस्मिन् काले परमोत्कृष्टत्वेन गणिताः । यतो हि ता एवाभूवन् वैदिकभारतीयानां प्रधानं द्रविणम । यज्ञेष्वपि गाव एव दक्षिणाद्रव्याण्यभूवन् । वस्तुतो हि दक्षिणाशब्दो विशेषणात्मकत्वात् 'सरला, महार्घा' इत्येवंविधगोविशेषणार्थाभिधायी गोपदविनाकृतः प्रयुज्यते । अपि च खलु सायं प्रचारभूमेः प्रत्यागताभिर्गोभिः रज्जुबद्धानां वत्सानामवलेहनमिव नान्यः कश्चिदर्थो वैदिकभारतीयानां चक्षुराप्याययामास । किञ्च पयस्विनीनां गवां हम्भारव इव नान्यः कश्चिद् गीतरागस्तेषां श्रोत्रपुटमानन्दयामास । अतश्च यथा गावो गोष्ठोपान्ते स्ववत्सेभ्यो रेभन्ते तथा वयं सूक्तैरेभिरिन्द्रमुपतिष्ठामहे' इति, अक्षीरिण्यो गाव इव वृथा वयं, हे वीर, तुभ्यमगर्जाम' इति च वदतामृषीणां वचसि न लेशतोऽप्यपार्थत्वदोषशङ्कावकाश । अपि च तस्मिन् कालेऽपि प्रचारभूमेः प्रतिनिवृत्ता गावः पुरुणा प्रेम्णा रात्रौ गोष्ठेषु बद्धाः प्रभातायां रजन्यां पुनः प्रचाराय विसृष्टाश्च । यद्यपि शुक्लयजुर्वेदे गोघ्नस्य वधदण्डो विहितस्तथापि ऋग्वेदे गोहननं न पृथक्तया निषिद्धम् । प्रत्युत विवाहसूक्तादिदमवगम्यते यत्—तस्मिन् काले विशेषत उत्सवदिवसेषु गावो विशस्तिता इति ।

वृषभाश्च बाहुल्येन यज्ञेष्विन्द्रायालभ्यमानाः श्रूयन्ते । यथा हि गावो न तथा वृषभा उक्षाणश्च स्वच्छन्दप्रचाराय विसृष्टाः । किन्तु क्षेत्रकर्षणाय रथाकर्षणाय वा नियमेन धुरि नियुक्ताः ॥

गवानन्तरप्राधान्यभाजोऽश्वाः । यतो हि गोधनमिवाश्वधनमपि भूयसा प्रार्थयन्ते ऋषयः । योद्धृभिरश्वाः प्राधान्येन रथवहनकर्मण्युपयुक्ताः । तथा ते रथचर्यायामप्यवश्यादरणीया एवाभूवन् रथचारिणां वैदिकभारतीयानाम् । अथापि तस्मिन् कालेऽश्वारोहणसम्प्रदायो न परिचितः । अश्वमेधो यागश्च यागान्तरापेक्षया महत्तरफलप्रदातृत्वेनाभिमतः ॥

ऋग्वेदोक्तानां पक्षिणां मध्ये येषु चारित्रिकः साहित्यसम्बन्धी वा विशेषस्तानेव केवलमत्र विचारयामः । तत्र संस्कृतकविलोके सुप्रसिद्धो हंसः ऋग्वेदेऽसकृन्निर्दिष्टः । तत्रायं जलोपरि प्लवमानः नभसि पङ्क्तिक्रमेण पतमानश्च श्रूयते । लौकिकसंस्कृतग्रन्थेषु नीरक्षीरयोर्विभेदने वर्ण्यमाना हंसस्य शक्तिः शुक्लयजुर्वेदे नीरसोमयोर्विभेदनविषये श्रूयते । नीरक्षीरविभेदनशक्तिस्तु वेदेऽस्मिन् क्रौञ्चगतत्वेन वर्ण्यते ॥

येषां दाम्पत्यमनवरतमभिनन्दन्ति कवयः ते चक्रवाकाः ऋग्वेदे सकृदेव कीर्तिताः । तत्र ह्यश्विनौ चक्रवाकदम्पती इव प्रातराविर्भवत इत्येतावच्छ्रूयते । अथर्ववेदश्च चक्रवाकान् स्त्रीपुंसानुरागस्य

निदर्शनत्वेनाह् । मयूर्यः ऋग्वेदे विषापहरणनिपुणत्वेन शुका हरिद्रवर्णत्वेन च स्तूयन्ते । यजुर्वेदकाले शुकानां पञ्जरबन्धः सम्पादितः श्रूयते । तत्र हि शुको मनुष्यवाचमुदीरयतीत्यभिहितम् ॥

आकरोद्भवानां वस्तूनां मध्ये जनानामत्यन्तोपयुक्तस्य लवणस्य नामापि न श्रूयते ऋग्वेदे । कस्मादेतत् ? अपि नामेह तदभावात् तदभावः सम्भावयितुं शक्यः ? नैतद्युक्तम् । यतो ह्युदीच्यपञ्जापदेशे प्रभूततया लवणमासाद्यते । अपि च वितस्तासिन्ध्वोर्मध्यवर्ती देशो लवणोत्पत्तिभूमिरासीदिति समग्रस्य भारतवर्षस्य पर्याप्तं लवणं तत्रैवोपलभ्यत इति चालक्सान्द्रानुचरैर्ग्रीकैरुक्तमिति स्त्रावोवचनादवगम्यते । ऋग्वेदकाले परं तत्र लवणं नासीदिति कथङ्कारं प्रतीयताम् । तस्मात् तदनिर्देशे हेतुर्मृग्यः ॥

लोहानां मध्ये ऋग्वेदेऽसकृन्निर्दिश्यमानं सुवर्णम् । तच्च पश्चिमोत्तरभागावस्थितासु नदीषु तैरधिगतं स्यात् । या. खल्वद्यत्वेऽपि महार्घाणां लोहानामुत्पत्तिस्थानानि दृश्यन्ते । अत एव सिन्धुः हिरण्मयीति हिरण्यपात्रेति च स्तूयते । राजानोऽपि तस्मिन् काले प्रभूतहिरण्या अभूवन्नित्यपि श्रूयते । तथा हि ऋषिः कश्चित् कमपि राजानमुपहारान्तरैः सह दश सुवर्णराशीनात्मने प्रतिपादयन्तं प्रस्तौति । कुण्डलकटकादीन्युच्चावचानि सुवर्णाभरणान्यपि ऋग्वेदे वहुत्र निर्दिश्यन्ते ॥

अपरः कश्चिदृग्वेदे निरतिशयं निर्दिश्यमानो लोहोऽयः । यत् खलु लेतिनभाषायां 'अएम्' इत्युच्यते । अथ त्वयःशब्देन तत्र किमश्मसाराख्यो लोह एव विवक्षितः, आहोस्विदन्यो लोह इत्ययमर्थस्तच्चरित्रार्थचर्चया निर्णेयः । ऋग्वेदे बहुषु मन्त्रेष्वयः-शब्दोऽयं लोहसामान्ये प्रयुक्तो दृश्यते । यत्रापि लोहविशेषवाचकत्वेन प्रयुक्तस्तत्र को वा लोहस्तेन विवक्षित इति न व्यक्तीभवति । तद्वस्तुनो वर्णविशेषविचारे तस्येषद्रक्तत्वं वर्ण्यमानं श्रूयते । तच्च तस्य पित्तलत्व एवोपपद्यते न त्वश्मसारत्वे । अथर्ववेदे तु रक्तादयसः पृथग्भूतं कृष्णमयः प्रस्तूयते । एतेनाश्मसारस्य ताम्रात् पित्तलाद्वा भेदः पश्चात्काल एवावधारित इति शक्यवचनम् । अपि च खलु नागरिकपरिष्कारप्रवाहेऽश्मसारस्य प्रयोजनज्ञानात् पूर्वं पित्तलस्योपयोगः समारब्ध इति चरित्रकारैर्निश्चप्रचम् । अथापि तावद्वेदकालस्यारम्भे सर्वथैवाश्मसारस्य परिज्ञानमेव नाभूदित्युक्तावस्माकमदूरदर्शिता स्यात् । इदं पुनरसंशयं यत्—आर्यास्तस्मिन् काले रजतज्ञानशून्या अभूवन्निति । यतो हि तस्य नामापि ऋग्वेदे नोपलभ्यते । यत्र खलु रजताश्मसारावुत्पद्येते तत्र खनिजैरसंस्कृतैर्द्रव्यान्तरैः सह तयोर्मिश्रीभावेनैकरूपत्वान्मन्यामहे रजताश्मसारयोः स्वरूपभेदो न तैरधिगत इति । अपि च द्वावपीमौ लोहौ भारतवर्षस्य पश्चिमोत्तरभागे न कुत्राप्युत्पद्येते ॥

इत्थमेकत्र स्थलविशेषनिर्देशैः, अपरत्र शीतोष्णस्थिति-वर्णने., अन्यत्र तत्तद्देशमात्रसुलभानां वृक्षलतादीनां निर्देशैश्च ऋग्वेदद्रष्टारः परमर्षयः कुभानदीमारभ्य यमुनानदीपर्यन्तमायतं भारतवर्षस्य पश्चिमोत्तरं भागमभिव्यापन्नित्यवधार्यते । तत्र प्रथमतस्तेषामादिनिवासिभिः सह सङ्ग्रामः कर्तव्य आसीत् । तत्रादिनिवासिन, पराजित्य जयलक्ष्मीरार्यान् प्राप । अत एव— इन्द्रः स्वमित्राणां कृते द्विपतामेकं सहस्रं वन्दीचकार, अन्यत् त्रिंशत्सहस्रं मृत्युसाच्चकरित्यादि श्रूयते । आर्याः पश्चान्नवनवान् निवेशदेशानन्विष्यन्तस्ततो निर्जग्मुरित्ययमर्थो नदीनां पुरोगति-प्रतिबन्धकत्वश्रवणादवधार्यते । इत्थं नानादिग्देशान् प्राप्य नाना-वर्गत्वेन भिन्ना अप्यार्याः जातिमताचारैः सर्वेऽपि समानरूपा एवावर्तिषत । समुदायसामान्यवाचिना आर्यशब्देन व्यपदिष्टास्ते स्वप्रतिपक्ष्यानादिनिवासिनो जनान् प्रथमं दस्युदासशब्दाभ्यामाहूय पश्चात् स्वनामविरुद्धया 'अनार्य'संज्ञया व्यपादिक्षन् । वर्गयो-रनयोः स्वभावसिद्धः स्वरूपभेदस्तु केवलं वर्णकृतः । श्रूयते ह्या-दिनिवासिनां कृष्णवर्णत्वं दासवर्णस्यार्यवर्णविलक्षणत्वं च । मन्यामहे वर्णभेदमेव निमित्तीकृत्य जातिभेदा अपि प्रवृत्ताः । अत एव जातीनां वर्णव्यपदेशः ॥

पराजिता अपि नगकुहराण्यनभिद्रवन्तः केचिदनार्या आर्यै-र्वन्दीकृताः किङ्करतां प्रापिताः । क्रयविक्रययोरपि ते पात्रीकृताः । श्रूयते हि ऋषि. कश्चित् स्वाश्रयभूताद्राज्ञः शतं गर्दभान् शतं मेषान्

शतं दासांश्च दक्षिणात्वेन लब्धवानिति । लौकिकसंस्कृतकाले तु दासशब्दोऽयं भृत्यपर्याय संवृत्तः । एवं शर्मण्यभाषायामपि पुरा क्रीतदासार्थे प्रयुक्तः शब्दः (Captive Slav) सम्प्रति केवल-भृत्यरूपार्थवाचकत्वेन प्रयुज्यते । सर्वात्मना परायत्तीभूता भारत-वर्षीया आदिनिवासिनो जना, क्रमेण निवृत्तदासव्यपदेशाः शूद्र-संज्ञया निर्दिष्टाश्चतुर्थवर्णतां प्रापुः । त एते दस्यवः ऋग्वेदेऽयज्ञा इति नास्तिका इति अधार्मिका इति च व्यवहृता, । अपि च ते लिङ्गपूजका बभूवुरिति मन्त्रद्वयादवगम्यते । यः खलु पूजाविधिः क्रमेणार्यैरपि समादृतः । महाभारते त्वस्य लिङ्गस्य शिवात्मकत्वं महता प्रबन्धेन समर्थितं दृश्यते । सैषा लिङ्गपूजा भारतभूमौ सम्प्रति सर्वत्र लब्धप्रतिष्ठा दृश्यते । तत्रापि दक्षिणापथे विशेषतः । दस्यवस्ते प्राधान्येन पशुपालवृत्तयोऽभूवन् । अत एव ते गोध-नाढ्याः श्रूयन्ते । ता एता गावः पश्चाद्विजयोत्कृष्टैरार्यैः स्वायत्ती-कृता, । ते पुरप्रख्येषु दुर्गेष्ववात्सुः । यान्येव परश्शतानि पुराणि स्वमित्राणामुपकारायेन्द्रेण ध्वस्तानि श्रूयन्ते ॥

अथार्याणां वर्गभेदानधिकृत्य विचारयामः । तेषां बहवो वर्गा ऋग्वेदे निर्दिष्टाः । तत्र पश्चिमोत्तरप्रान्तस्थितो गन्धारिवर्गः । ते मेष-पालवृत्तयोऽभूवन्नित्यवगम्यते । पश्चात्काले ते गन्धारा इति गान्धारा इति चाख्याताः । अन्यः कश्चिदथर्ववेदोक्तो मूजवद्वर्गः । ते च तत्र गन्धारिणां सन्निहिततरत्वेनोक्ताः । मूजवदासन्नदेशवर्तित्वात्

ते तथा संज्ञिता इति तर्कयामः । एतौ द्वावेव वर्गावार्याधिवास-भूमेः पश्चिमोत्तरभागावस्थितौ ॥

यद्येव न सर्वे तथापि भारतवर्षीयाः प्रधानभूता बह्वो वर्गाः ऋग्वेदे शश्वदुच्चार्यमाणेन 'पञ्चजनाः' इत्यनेन शब्देन विवक्षिताः । असंशयमनेन शब्देन पञ्च वर्गा एवाभिधित्सिताः । ते च पञ्च वर्गाः मन्त्रद्वये निर्दिश्यमानाः—पूरवः, तुर्वशाः, यदवः, अनवः, द्रुह्यवश्च । ते पुनरन्योन्येषामनवरतं कलहाय-माना अभूवन् । तेषु चत्वारो वर्गाः कैश्चिद्वर्गान्तरै सह मिलित्वा दशानां राज्ञां निदेशे स्थिताः तृत्सूनामधिपतिना सुदासा सह सङ्ग्रामाय प्रवृत्ता आख्याताः । तथा हि—कदाचित् दश राजानस्तृत्सुभिः सह युद्धायागमन् । प्रत्यर्थिभटाः परुष्ण्यास्तटे सङ्गताः । तत्र दशानां राज्ञां दारुणो रणः सम्प्रवृत्तः । परन्तु दश राजानस्तत्र प्रथममेव तन्नदीतरणोद्यमे तत्प्रवाहनिरोधनसाहसे च क्षीणसत्वास्तृत्सुभिरक्लेशं पराजिताः श्रूयन्ते ॥

पूरवः सरस्वत्याः कूलद्वयेऽधिष्ठिताः श्रूयन्ते । तथापि तद्वर्गीयाः केचित् ततोऽपि पश्चिमतः स्थिताः अलक्सान्द्रानुचरैः परुष्ण्यास्तीरे दृष्टाः । तेषां राजा पुरुकुत्सपुत्रः त्रसदस्यु , त-द्वंशीयः शूरो राजकुमारः तृक्षिश्च ऋग्वेदे बहुत्र प्रस्तूयेते । वर्गा-न्तरापेक्षया सातिशयं स्तूयमानास्तु तुर्वशाः । येषां कण्वगोत्रीयाः पुरोहितास्ते यदवः प्रायेण तेषां मित्रत्वेन वर्ण्यन्ते । अनवस्तु

परुष्ण्यास्तीरे न्यवसन । तेषां पुरोहिताश्च भृगुवंशीयाः । अनवो द्रुह्यवश्चैकचित्ता अभूवन्नित्यवगम्यते । ऋग्वेदे केवलमेकस्मिन्न मन्त्रे निर्दिश्यमाना मत्स्याः तृत्सूनां शत्रवोऽभूवन । मत्स्याः यमुनायाः प्रतीच्यकूले प्रत्यवसन्निति महाभारतादवगम्यते ॥

सुदासः शत्रूणां मध्ये प्रधानतमा भरताः । ते च ऋग्वेदस्यैकस्मिन सूक्ते (३—३३) विपाट्छुतुद्र्योः सम्भेदमायान्तं विश्वामित्रमनुयान्तः प्रस्तूयन्ते । अन्यस्मिन् सूक्ते (३—५३) विश्वामित्रः सुदासः पुरोहितो भूत्वा भरतानां कृते नदीः स्तुवन् गाधीचकारेति श्रूयते । इदं च नदीनां गाधीकरणं मन्यामहे, सप्तममण्डलीयत्रयस्त्रिंशत्तमसूक्तोक्त्यनुसारेण यदा विश्वामित्रातिशायिनो वसिष्ठस्य स्तुतिवचनैरुपकृताः सुदासाधिष्ठितास्तृत्सवो भरतानभ्यभूवन् तदा भरतानामनुग्रहाय वसिष्ठस्पर्धिना विश्वामित्रेण कृतं स्यात् । तेषां भरतानां यज्ञक्रियासु प्राधान्यमभूदित्यनुमीयते । अत एवाग्निः 'भारतः' इति यज्ञदेवता 'भारती' इति चाभिधीयेते । तत्र भारती बहुत्र सरस्वत्या सह स्तूयते । अग्निस्तुतिपरे कस्मिंश्चित् सूक्ते (३—२३) द्वौ भारतौ स्मृतौ । तत्रैको देवश्रवाः, अपरो देवरातश्च । तौ च दृषद्वत्यामापयायां सरस्वत्यां च यज्ञियाग्निममन्थिषातामिति श्रूयते । स एव देशः पश्चात्काले ब्रह्मावर्त इति कुरुक्षेत्रमिति च संज्ञितः ॥

तृत्सवः परुष्ण्याः नातिदूरे पूर्वभागे कृताधिवासाः सम्भाव्यन्ते । तस्या एव पूर्वतीरे सुदाः पश्चिमतस्तां नदीं तीर्णवतो दश राज्ञ. प्रतियोद्धुं स्वकीयां सेनां निनायेत्यपि शक्यमास्थातुम् । पञ्चजनाः पश्चात्कालिकग्रन्थेष्वनिर्दिष्टनामानः सुदासोऽतिघोरे समरे सहायभूतत्वेन वर्णिताः । सृञ्जया अपि तृत्सूनां भित्रभावे स्थितास्तर्क्यन्ते । यतः तृत्सव इव सृञ्जया अपि तुर्वशानां नित्यशत्रवः श्रूयन्ते ॥

केषाञ्चिदन्येषां वर्गाणां ऋग्वेदे नामानि परं निर्दिश्यन्ते न तु तानधिकृत्य कश्चिद्विशेषः प्रस्तूयते । अथापि तेऽर्वाचीनेषु ग्रन्थेषु सविशेषमुपवर्णिताः । तथा हि—उशीनराः ऋग्वेदे सकृदेव निर्दिष्टा ऐतरेयब्राह्मणोत्पत्तिकाले उत्तरभारतवर्षस्य मध्यभागे स्थिताः । तथा चेदयोऽपि सकृदुपात्ताः पुराणकाले मगधदेशमध्यासिषत । अन्ये च क्रिवयो नाम सिन्ध्वसिक्नीसम्बद्धत्वेन वर्ण्यमानाः पश्चिमोत्तरां दिशमशिश्रियन्निति ज्ञायते । शतपथब्राह्मणे 'क्रिवयः' इति पञ्चालानां प्राचीनं नामधेयमित्युक्तम् । पञ्चालास्ते हस्तिनापुरादुत्तरत स्थिताः ॥

अथर्ववेदो न केवलं गन्धारीन् नापि केवलं मूजवतः किन्तु मगधानङ्गांश्चापि प्राचीनवर्गत्वेन निर्दिशति । एतेनाथर्ववेदोत्पत्तेः पूर्वमेवार्याः गङ्गातीरं प्राप्तास्तदुत्पत्तिकाले तत्र सुप्रतिष्ठिता अभूवन्नित्यवधार्यते ॥

पञ्चालास्तु न कस्मिंश्चिदपि वेदे निर्दिष्टाः । कुरवोऽपि यथासम्भवं समस्तैस्तद्धितान्तैर्वा शब्दैर्द्वित्रमन्त्रेष्वसाक्षान्निर्दिष्टा उपलभ्यन्ते । शुक्लयजुर्वेदे तु ते साक्षान्निर्दिष्टाः । ब्राह्मणकाले पुनस्तावेव वर्गौ प्राधान्यमुपगतौ । प्रत्युत ऋग्वेदेऽतिशयेन निर्दिश्यमानाः पूरु-तुर्वश-यदु-तृत्सुप्रभृतयो वर्गाः नैव नामतोऽपि ब्राह्मणग्रन्थेषु निर्दिष्टाः । भरता अपि ब्राह्मणग्रन्थेषु प्रधानपदमारोप्य स्तूयमानाः सदाचाराणामादर्शभूतत्वेन वर्ण्यन्ते । न तु तदानीन्तना अन्ये वर्गा इव ते पृथक्सङ्घात्मनाऽवस्थिता इति कुत्रापि प्रस्तूयन्ते । तेषां नामधेयमपि ब्राह्मणग्रन्थेषु मनुस्मृतौ वा निबद्धायां वंशावलिपट्टिकायां नोपलभ्यते । तथा बौद्धग्रन्थेष्वपि तेषां वार्तापि न श्रूयते ॥

इत्थम्भूते व्यतिकरे इदमभ्यूहितुं युक्तं यत्—वेदोक्तास्ते बहवो वर्गाः क्रमेण नवनवान् निवेशदेशान् प्राप्तास्तत्तद्देशावस्थानुरूपेषु जीविकाव्यापारेष्वेकीभूता अन्यैरेव नामधेयै योजिता इति । तथा च वेदोक्ता भरताः पश्चात्काले कुरुवंश एवान्तर्भूताः । अत एव भरतः कुरुवंशीयानां मूलपुरुषत्वेन महाभारतादौ वर्ण्यते । कुरूणां रणकथामधिकृत्य कृत इतिहासोऽपि भरतसम्बन्धान्महाभारतमित्युच्यते । एवं महाभारतगतायां वंशावलौ पूरवः कुरूणामत्यन्तसन्निकृष्टत्वेनोक्ताः । अतस्तेऽपि क्रमेण कुरुष्वन्तर्भूता इति शक्यमास्थातुम् । ऋग्वेदानन्तरकालिकेषु ग्रन्थेष्वगृहीतनामानस्तृत्सवोऽपि कुरुवंश एवान्तर्भूताः सम्भाव्यन्ते ॥

पञ्चालास्तु प्राचीनाः क्रिवय एवेति पूर्वमेव प्रास्तौष्म । तत्रेदमवधेयं यत्—अल्पाल्पा पञ्च वर्गाः सम्मिलिताः पञ्चाला अभूवन्निति । अत एव तत्र 'पञ्च' शब्दस्य घटना । श्रूयते च ब्राह्मणग्रन्थेषु तुर्वशाः पञ्चालानामन्यतमा इति । तथा ऋग्वेदे तुर्वशानामत्यन्तसुहृत्वेन वर्ण्यमाना यदवोऽपि पञ्चालेष्वन्तर्भूताः सम्भाव्यन्ते । पुराणेषु पुनस्ते गोत्रप्रत्ययान्तेन यादवशब्देन व्यपदिश्यमानाः पृथग्वर्गत्वेनास्थिताः । वर्ण्यते च तेषां वंशेऽवततार भगवान श्रीकृष्ण इति ॥

इदमपरं विनोदयति नश्चेतः यत्—ऋग्वेदे प्रभूतवित्तः प्रतापशाली कश्चिदिक्ष्वाकुनामा राजकुमारोऽविशेषं निर्दिष्टः । स एव सविशेषं रामायणादौ सूर्यवंश्यानां राज्ञां मूलपुरुषत्वेनायोध्याधिपतित्वेन च वर्णितः ॥

इदं तावदियता प्रबन्धेन व्यक्तीभवति यत्—वैदिका आर्याः नानावर्गत्वेन परिणता भाषाजातिमताचारैरभिन्ना अपि राज्यकार्येषु मिथो वैमत्यमभजन्त । यत्सत्यं कदाचित् केचित् कृतसन्धयोऽपि न नाभूवन । अथापि भूयसा मिथः कलहायमाना एव स्थिताः । वस्तुतत्वे पर्यालोच्यमाने तेषामयं वर्गविभाग एव राज्यकार्यवैमत्यमूलकः । दृश्यते खल्वीदृशी समवस्था साम्प्रतिकेष्वाव्यनदेशीयेषु । दृष्टा च पुरा 'टासिटस्' काले शर्मण्यदेशीयेष्वपि । तथा नानावर्गीभूता आर्याः 'विश्' शब्दाभिहितान् बहून्

निवेशान् सम्पाद्य तान् ग्रामरूपेण व्यभजन् । वर्गाणां मिथो विरोधाः कलहाश्च प्राधान्येन ग्रामविभागमूलकाः । ग्रामे ग्रामे दारुमयाणि गृहाणि निरमापयन् । ग्रीकदेशीयमगस्तिनस्यागमन-काले भारतभूमौ सर्वत्र तादृशान्येव गृहाण्यवर्तन्तेति तद्वचनादव-गम्यते । गृहे गृहे च गृह्याग्निः संरक्षितः । शत्रूपप्लवे तोयविप्लवे चात्मरक्षार्थं ते समुन्नतप्रदेशेषु दुर्गाणि निरमापुः । तान्येव ते पुरशब्देन निर्दिशन्ति, न तु नगराणि । न खलु पुराकाले नगराणि निर्माय जनास्तेषु न्यवसन्नित्यत्र किञ्चित् प्रमापकमस्ति ॥

वेदकालिकानां जनानां निसर्गतः पित्रादिगुरुजनपराधीन-वृत्तित्वनियमात् तदानीन्तनानां तत्तद्वर्गाणां भरणमप्यशेषतो राजायत्तमभूत् । राजानोऽपि प्रायेण कुलक्रमागता एवाभूवन् । अत एव तृत्सुवंशीयाः पुरुवंशीयाश्च क्रमिका बहवो राजानः परि-गणिताः श्रूयन्ते । अथापि तावत् तत्तज्जनसङ्घैः स्वेच्छया व्रिय-माणा अप्यभूवन्नेव केचिद्राजानः । ते च किं राजवंशादेव वृता आहोस्विदितरस्मादपि महावंशादित्यत्र न किञ्चिदुपलभ्यते विनि-गमकम् । निस्सङ्ग्रामकाले धर्मतः प्रजानां परिपालनमेवाभूद्राज्ञः कृत्यम् । प्रजाश्च तदाज्ञावशवर्तिन्यस्तस्य जीविकार्थं यथाभिलषितं बलिं प्राञ्जलयः प्रणतशिरसश्चोपाहरन् । न राजानः सर्वात्मना स्वतन्त्रवृत्तयोऽभूवन् । प्रायेण राज्यकार्याणि सर्वाणि जनसमित्यां निर्णीतानि । तदनुरोधेन राजानो राज्यं चक्रुः । सैषा जनसमि-तिस्तु किंरूपाऽभूत् तत्र कीदृशानि कार्याणि निरूढानीत्यादिकमद्यत्वे

तद्रोचकल्लिङ्गाभावान्न व्यक्तीभवति । मद्भ्रामेषु राजैवाग्रेसरो बभूव । युद्धप्रस्थानादिकाले स्वपक्षीयाणां क्षेमलाभाय स्वयमाचार्यमुखेन वा यज्ञाद्यनुष्ठानमपि राज्ञ एव कृत्यमभूत ॥

तदानीन्तन एकैकोऽप्यार्यजनवर्गः पृथक् पृथगेकैककुलपुरोहितसनाथो बभूव । राज्ञा यज्ञादिधर्मक्रियानुष्ठानार्थं पुरस्कृता आचार्या एव पुरोहिता नाम । ये खलु तत्तन्नृपाणामपदानानि वर्णयन्तः यज्ञेषु देवतोद्देशेन प्रयोक्तव्यानि सूक्तानि रचयन्तश्चाहर्निशं राजभवनान्यसेवन्त । सर्वात्मना राजायत्तवृत्तयश्चाभूवन् । अत एव ते स्वदृष्टानां सूक्तानां प्रभावं पुरोहितदक्षिणादानफलं च प्रशंसन्ति । तथा हि महर्षिर्वसिष्ठः सुदासः पुरोहितो बभूव । स क्वचित् (७–३३)—तत्कृतमन्त्रप्रभावादेव तृत्सवो विजयमाप्नुवन्नित्याह । बहुप्रदान् पालकान् लक्ष्यीकृत्य प्रयुक्ताः स्तुतयोऽन्येषामपि राजकुमाराणामुद्बोधनायातिशयोक्तिरूपेण निबद्धाः । अथापि नात्यन्तातिशयोक्तिरूपतामवगाहन्ते । यतो हि राजानोऽपि युद्धादिषु विजयलाभानुपदमेव परमामोदपरवशाः गोहिरण्याश्वरथवसनादिरूपाण्यमितानि द्रव्याणि प्रधानपुरोहितेषु ववृषुः । ब्राह्मणकाले तु पुरोहिताः सर्वोत्कर्षं प्रापुः । राज्ञामप्युपरि स्थिताः । अत एव ब्राह्मणग्रन्थेषु ब्राह्मणानुद्दिश्य त्यागो धर्माङ्गत्वेन विहितः । तत्तद्यज्ञकर्मानुरूपं दक्षिणाद्रव्यपरिमाणमपि निर्णीतम् ॥

यज्ञानुष्ठानाय राजप्रतिनिधित्वेन पुरोहितानां नियोग एव भारतवर्षीयपौरोहित्यवृत्तेरादिमः कल्पः । स एव पश्चात्कालसमृ-द्धस्य पुरोहितोत्कर्षविधेः प्रभवः । यत्र हि पुरोहिताः पृथग्जाति-तया लोकोत्तरं पदमापुः । राजानोऽपि पुरोहितवचनानुवर्तिन एवाभूवन् । पाश्चात्यदेशेऽप्येतादृशी स्थितिर्मध्यकाले क्रिस्तुमतानु-यायिष्वदृश्यत । किन्तु नायमर्थो भारतखण्ड इव यौरोपखण्डे भृशमुपरूढः । इत्थं यदा पुरोहितानां कुलक्रमागतत्वानियमः सम्प्रतिपन्नस्तदैव भारतवर्षमात्रसुलभो जातिभेदनियमोऽप्याविर्भूतः । पुरा हि सुदासो वसिष्ठस्य च काले प्रादुर्भूतेषु प्राचीनतरेषु सूक्तेषु पुरोहितानां कुलक्रमागतत्वनियमो नैवाभूत् । नापि प्रथमतः पञ्चापदेशे राजानः पुरोहिताश्च भिन्नजातीया अभूवन् । अत एव पुराणेषु मध्यदेशस्य ब्राह्मणाभिवृद्धिस्थानभूतत्वात् पुण्यक्षेत्रत्वं पश्चिमोत्तरदेशस्य दुष्टाचाराणां पाखण्डानामाश्रयभूतत्वात् पापक्षेत्रत्वं चोद्घुष्यते ॥

वेदकाले भारतभूमौ जातिभेदारम्भात्पूर्वं जनेषु कर्मविभागा नाभूवन् । आधुनिका आवघना इव तदात्वे सर्वे जनाः स्वेच्छा-नुरोधेन योधाः कर्मान्तरप्रवृत्ता वा अभूवन् । यथा यथा ते क्रमेण पूर्वां दिशमुद्दिश्य चलिताः तथा तथा जातिभेदनियमोऽपि प्रबलीभूतः । तदनु क्रमेण नानादिग्देशानासेदुषां तेषां पदे पदे यदृच्छयाऽऽपेतुषां द्विषामुन्मूलनाय आदिनिवासिनामुद्वासनाय च प्रहरणैकव्यापारस्य स्थिरतरस्य सेनावर्गस्य नियोजनमावश्यक-

मभूत् । तत्रावरवर्गीयाः सैनिकत्वेन नियुक्ताः कस्यचित् सेनाधिनेतुरधीने स्थिताः पृथग्जातीयकाः परिणताः । एवं कृषीवला व्यवसायशीलाश्च जनाः स्वकीये कर्मण्यवहिताः क्रमेण पृथग्जातीयाः पर्यणंसिषुः । तत्रान्तरे यज्ञक्रिया अपि समन्तादभिवृद्धा निरन्तरमनुष्ठिताश्च । तत्र प्राक्तनानां सूक्तानां परिरक्षणमवश्यकर्तव्यमभूत् । तस्मिन् कर्मणि पुरोहितवर्गीया व्याप्टताः । तेषामायुरेव सर्वं यजने याजने सूक्तसंरक्षणे तत्प्रवचने च व्ययीकृतम् । तेऽपि क्रमेण पृथग्जातीयाः परिणेमुः ॥

एवमेते त्रयो वर्गाः प्रत्यहमन्यान्ये भूत्वा ववृधिरे । परन्तु परस्परदारपरिग्रहादौ सहभोजनादौ च तेषां मध्ये मिथो निषेधः कस्मादुत्पन्नः ? मन्यामहे निगृह्य प्रेष्यस्थाने नियुक्तानामादिनिवासिनां विषये समाहृतः सोऽयं दारपरिग्रहादिनिषेधः पश्चात्क्रमेणार्याणां मध्ये लब्धास्पदो जातः । अद्यत्वे ह्यमेरिकायां सङ्घीभूतजनस्थाने श्वेतमनुष्याणां नीग्रोनामककृष्णमनुष्याणां च मध्ये यादृश तादृशमेवान्तर पूर्वमार्याणामादिनिवासिनां च मध्येऽपि स्थितं सम्भाव्यते । अमेरिकायामिदानीं नीग्रोजातीयाः 'वर्णाः' इति व्यपदिश्यन्ते । तद्वत् पुरा भारतवर्षेऽपि प्रयुक्तो वर्णशब्दः पश्चात्काले जातिवाचकतया परिणतः । कुलक्रमागत पुरोहितवर्गः सर्वोपरिष्टात् पवित्रमधृष्यं च स्थानं प्राप । अन्यत्तु वर्गद्वयं दासवर्णापेक्षया किञ्चिदौत्कृष्ट्यं लेभे । अपि च लब्धमहोन्नतपदास्ते पुरोहिताः जातीनां परस्परभेदान् निष्कृष्टतया व्यवस्थाप-

यामासुः । ते च त्रयो वर्णाश्चतुर्थेन शूद्रवर्णेन सह चातुर्वर्ण्यव्य-पदेशमवापुः । चातुर्वर्ण्यव्यवहारश्च बाहुल्येन यजुर्वेदे प्राधान्येनाथर्ववेदे च श्रूयते । ऋग्वेदे तु प्रथमाष्टमदशममण्डलान्तर्गतेषु केषुचिदर्वाचीनतमेषु सूक्तेषु चातुर्वर्ण्यनामनिर्देशः कस्मिंश्चित् सूक्ते (१०-९०) तद्विषयकः सविशेषो व्यवहारश्च दृश्यते । तथा मुख्यवर्णाभिधायी ब्राह्मणशब्दः ऋग्वेदे केवलमष्टकृत्वः ऋत्विग्विशेषाभिधायी ब्रह्मशब्दस्तु षट्चत्वारिंशत्कृत्वश्च प्रयुक्तः ॥

अथ वेदकालिकान् सांस्कृतिकाचारान् सङ्ग्रहेण निरूपयामः । तत्र पत्नीभ्रातुः पतिभ्रातुः तत्स्वसुश्च वाचकत्वेनोपलभ्यमानैः शब्दैरुपलक्ष्यमाणमस्त्वन्वं कुलमेवार्याणां सङ्घवासस्य मूलम् । तत्र प्रत्येकं कुले गृहपतित्वात् पितैव सर्वप्रधानः । कन्यार्थी जनो मित्रमुखेन कन्यापितरं कन्यामयाचत । विवाहोत्सवश्च भूयसा कन्यायाः विरलतया वरस्य च गृहे प्रचलितः । बन्धुमित्रादयः सर्वे पङ्क्तिक्रमेण समसिलन् । तथा समागतास्ते विवाहोत्सवार्थं विशसितानां गवां मांसेन सत्कृताः । विवाहवेद्यां वरो वधूं पाणौ गृहीत्वा वैवाहिकमग्निं परितो जगाम । अथर्ववेदादन्यदप्यवगम्यते यत्—कश्चिदश्मानं भूमौ निधाय सुप्रजासिध्यर्थं वरो वधूमश्मानमारोपयेदिति । विलिप्ताङ्गरागा विविधभूषणालङ्कृता च वधूः समाप्ते विवाहविधौ वरेण सह रक्तकुसुमोपशोभितं श्वेतेन वृषभयुगलेनोह्यमानं रमणीयं रथमारुह्य समङ्गलवाद्यतूर्यघोषं स्वकीयं

नूतनं गृहं प्रति प्रस्थित । प्राधान्येनैवंविधा एव वैवाहिका आचाराः साम्प्रतमपि भारतभूमौ प्रचरन्ति ॥

यद्यपि दारका इव भार्याऽपि भर्तृचित्तपराधीनत्वादस्वतन्त्रा तथापि ब्राह्मणकालापेक्षया ऋग्वेदकाले सा समुत्कृष्टतरे मान्ये पदे स्थिता सम्भाव्यते । यतो हि सा यज्ञक्रियासु पत्या सह लब्ध-संविभागा बभूव । अपि च यथा पतिर्गृहपतिस्तथा पत्न्यपि न केवलं भृत्यान नापि केवलं दासान किन्त्वनूढान पत्युर्भ्रातॄन स्वसृश्च नियन्त्रयन्ती गृहपत्नी बभूवेति श्रूयते । पुत्रीणां पुत्राणां च वय -क्रमानुरोधेन विवाह इति यजुर्वेदादवगम्यते । ऋग्वेदे त्वकृतोद्वाहाः पितृगेहे वृद्धत्वं प्राप्ताः कन्यकाजनाः बहुत्र स्मृताः । पुरुषप्रजयैव वंशतन्तोरनुक्रमणात पुत्रसम्पत्तिरेव जनैः गोभूधनधान्यादिसम्पत्या सह प्रार्थिता, न तु कन्यकासम्पत्तिः । कृतोद्वाहो वरः स्वीया जाया वीरसूर्जायतामित्याशास्त । पुत्रशून्यता च दारिद्र्यकाष्ठा-मारोपिता । कैश्चिदपुत्रैर्जनैर्मनोविनोदनार्थं दत्रिमपुत्रः स्वीकृतः । स्त्रीप्रजाभ्यर्थना तु न कुत्राप्युपलभ्यते ऋग्वेदे । प्रत्युताथर्ववेदे तासां जनिः प्रार्थनापूर्वकं निवारिता दृश्यते । यजुर्वेदे च जातानां कन्यकानां जननानुपदमेव परित्यागः श्रूयते । ऐतरेयब्राह्मणेऽप्येव कन्या नाम महती विचिन्तेत्याम्नातम् । मन्यामहे ब्राह्मणकालिका-भिप्रायेणैव ऋग्वेदकालेऽपि जनाः कन्योत्पत्तिपराङ्मुखा अभूवन् । अयमीदृशः संस्कारविशेषो भारतभूमावद्याप्यक्षीण एव ॥

पारदार्यपरपुरुषसङ्गत्योर्महापातककोटौ परिगणनात् अवैधस्य प्रजोत्पादनस्य निषेधाच्च वैदिकभारतीयानामाचाराः सात्त्विकतरा एवेत्यवधार्यते ॥

पुराकाले पामरसमुदायमध्यप्रसिद्धो वृद्धजनपरित्यागः ऋग्वेदस्यापि परिचित एव ॥

दुष्कर्मणां मध्ये प्रधानभूतं चौर्यमेव । तच्च सामान्यतो गवापहरणरूपं प्रायेण रात्रावनुष्ठीयमानम् । चोरा लुण्टाकाश्च ऋग्वेदेऽसकृन्निर्दिष्टाः । गृहे विदेशे यात्रायां च चोरेभ्यो रक्षणं प्रार्थयमानानि बहूनि सन्ति सूक्तानि ऋग्वेदे । चोरादयोऽपराधिनो गृहीताः सुदृढं बद्ध्वा भृशं ताडिताः । ऋणं प्रायेण द्यूतहेतुकं वर्ण्यते । तस्य कणशः शोधनं च ऋग्वेदे श्रूयते ॥

आर्याणां वस्त्राभरणादिविषये विचार्यमाणे—परिधानान्युत्तरीयाणि च तैरुपयुक्तानीत्यवगम्यते । तानि च प्रायेणोर्णातन्तुमयानि । भूयांसि वासांसि चित्रीकृतानि । कानिचित् सुवर्णाञ्चलैरलङ्कृतानि । एवं कटककुण्डलग्रैवेयकनूपुरादीनि विविधानि सुवर्णाभरणान्यपि ऋग्वेदे निर्दिष्टानि । केशाः प्रसाधिताः, सुगन्धद्रव्यैः सुवासिताश्च श्रूयन्ते । अथर्ववेदे शतदती कङ्कतिका केशवर्धनौषधं च प्रस्तूयते । स्त्रियः केशान् प्रसाध्य जटारूपेण पुरुषास्तान् पिण्डीकृत्य शुक्तिकाकारेण च बबन्धुः । रुद्रः पूषा

चैवंरीत्या संयतकेशौ स्तूयेते । वसिष्ठगोत्रीयाः केशान् संयम्य मूर्ध्नो दक्षिणपार्श्वे बबन्धुः । उत्सवेषु गलिकलोकैर्माल्यानि धृतानि । वैदिकभारतीयैः श्मश्रूणि नियमेन प्ररोपितानि । विरलतया कैश्चिन्मुण्डितानि च । अथर्ववेदे—सोमस्य राज्ञः केशमुण्डनोत्सवे वायुरुष्णं जलमानीतवानिति सविता क्षुरं निपुणतरं प्रयुक्तवानिति च श्रूयते ॥

तेषां प्रधानभूतोऽभ्यवहारः क्षीरं, तच्च दोहनानुपदमेव कवोष्णं भुक्तं धान्यादिकं वा तेन पक्वम् । क्वचित् सोमेन सह मिश्रीकृत्य पीतम् । इतोऽपि प्रधानतरोऽभ्यवहारः घृतं, यत्खलु मनुष्याणामत्यन्ताभिरुचितत्वात् देवेभ्योऽप्याहुतीकृतम् । धान्यानि भर्जितानि पेषणोपलाभ्यां पिष्ट्वा पिष्टैरपूपान् कृत्वा यथेच्छं पयसा घृतेन वा पक्त्वा तानभक्षयन् । विविधानि सस्यानि फलानि च तेषां प्रधानभूतान्याहारद्रव्याणि । मांसभोजनं च विशेषतः पशुयज्ञेष्वनुष्ठितम् । वृषभाणां प्रधानयज्ञद्रव्यत्वश्रवणान्मन्यामहे तेषां मांसोऽपि पुरा भारतीयैर्भक्षित । अश्वमांसस्तु विरलतयैवोपयुक्तः । यतो ह्यश्वमेधाख्यो यागः यागान्तरापेक्षया वैरल्येनानुष्ठितः । मांसश्च भटित्रेषु वा भर्जितः स्थालीषु वा पक्वः । तत्र स्थाल्यो लोहमय्यो मृण्मय्यो वाऽभूवन् । पानपात्राणि तु दारुमयाण्येव ॥

वैदिकभारतीया द्विविधं मद्यमज्ञासिषुः । तत्र प्रधानभूतः सोमः । तस्योपयोगः केवलं यज्ञोत्सवादिधर्मक्रियास्वेव । क्रमशः

पर्वतोपान्तादपक्रान्तानां तेषां सोमलता दुर्लभाऽभूत् । अन्यन्मद्यं सुराख्यम् । असंशयं सुरा तेषां परिचितैवाभूत् । यतो हि सोमो हयोमरूपेणेव सुराशब्दोऽवस्तायां 'हुरा' इत्येवंरूपेणोपलभ्यते । यथाऽद्यत्वे भारतीयैः सुरा तण्डुलेभ्यः सम्पाद्यते तद्वत् तदानीमेषा धान्येभ्यः सम्पादिता । सुरायामत्यासक्तिर्जनानां द्यूतव्यसनजन्या वर्ण्यते । आह च ऋषिः कश्चि — क्रोधोऽक्षाः सुरा च नानापापायतनानि भवन्तीति । अन्य ...ाह—सुरापानोन्मत्तचेतसः सुराणां निन्दितारो भवन्तीति । वाजसनेयसंहिताकाले सुरापानं साधारणीभूतमवगम्यते । यतो हि तत्र पृथङ् निर्दिश्यमानेन सुराकारवर्गेण सुराकरणमुपजीवनवृत्तित्वेनाश्रितं दृश्यते ॥

ऋग्वेदकालिकैरार्यैराश्रितानां कर्मणां मध्ये सङ्ग्राम एव प्रधानतमः । ते रथिकाः पदातयो वा भूत्वा युद्धं चक्रुः । तत्र रथेषु योद्धा सारथिश्चासाताम् । महाभारतकालेऽप्ययमेवायोधनक्रमः प्रचलितः । तत्र हि योद्धुरर्जुनस्य श्रीकृष्णो भगवान् सारथ्यं चकार । अश्वसैन्यं तु न क्वापि निर्दिष्टम् । मन्यामहे बहोः कालादर्वागेव तत्सैन्यमारब्धम् । अलक्सान्द्राक्रमणकाले भारतीयानां चतुरङ्गबलेऽश्वसैन्यमन्यतममासीत् । सर्वथैव ऋग्वेदकालेऽश्वारोहणमात्रं परिचितमित्यवगम्यते । श्रूयते च तद्विषयको विशेषकथनप्रस्तावो यजुर्वेदेऽथर्ववेदे च । वैदिककाले योधाः सन्नद्धवर्माणः

समावद्धशिरस्त्राणाश्च युद्धाङ्गणं प्राविक्षन । प्रधानभूतं तेषां प्रहरणं धनुर्बाणम् । बाणस्तत्र विषमुखो लोहमुखो वाऽभूत् । तथा कुन्तकुठारमपि ऋग्वेदेऽसकृन्निर्दिश्यते ॥

वैदिकभारतीयानां प्रधानतम उपजीविकाव्यापारो गोरक्षणम् । तेषां बलवती वाञ्छा गोवृन्दसंवर्धने । अत एव क्षेमारोग्याभिवृद्धिप्रार्थनापरेषु मन्त्रेष्वपि गोसम्पत्तिरेव प्रथमतया प्रार्थ्यते ॥

तथापि नैव ते केवलगोपाला एव किन्तु कृषीवलाश्चाप्यभूवन् । अतिदूरेऽध्यनस्थान एव ते कृषिकर्मणि किञ्चिद्दूरं कृतप्रवृत्तयः सम्भाव्यन्ते । अत एव संस्कृतभाषायामवस्तभाषायां च समानरूपाः कृषादयः शब्दाः समुपलभ्यन्ते । सैषा कृषिः ऋग्वेदकाले गोरक्षणादन्यः सर्वसामान्यो जीविकोपायः समभूत् । अन्यदप्यथर्ववेदादवगम्यते यत्—कृष्यमाणेषु क्षेत्रेषु रेखासम्पत्त्यर्थं हलस्याग्रे लोहफालः संयोजित., तच्च हलं वृषभैरूढमिति । कृष्टेषु क्षेत्रेषु बीजावापः कृतः । जलाभ्युक्षणोपायोऽपि वैदिकभारतीयैः परिज्ञातः । यतो हि जलाय नदीगर्भखननमृग्वेदे प्रस्तूयते । यवाः पचेलिमाः लवित्रेण लूनाः । ततस्तान् भाण्डीकृत्य खलधान्ये निधाय विशोधयामासुः । ततो धान्यं शूर्पेण पावयामासुः ॥

इत्थं वैदिकभारतीयाः प्राधान्येन गोपालाः कृषीवलाश्च सन्तः किञ्चिद्दूरं मृगयामपि पर्यचैषुः । मृगयुर्धनुर्बाणधारी मृगयाविनोदमन्वतिष्ठन । मृगग्रहणाय कूटयन्त्रं वागुरां च योजयामास । पक्षिणः प्रायेण भूमौ विस्तीर्णेन जालेन गृहीताः । तथा सिंहाः पाशैः, कृष्णसारा गर्तैः, वराहा मृगयाकुक्कुरैश्चागृह्यन्त ॥

ऋग्वेदप्रस्तुता नौकायात्रा नदीतरणमात्रं परामृशतीति पूर्वमेव निरदीधराम । नौ, ग्रीकभाषायां 'नौस्' इत्युच्यते । नावः प्रथममरित्रेण प्रचोदिताः केवलदारुनिर्मिता अभूवन् । नैव कर्णं नापि लाङ्गलं न वा कूपं नापि वा वातवस्त्रं नामतोऽपि ऋग्वेदः प्रस्तौति ॥

वाणिज्यं तस्मिन् काले वस्तुविनिमयरूपमभूदित्यवगम्यते । यतो हि गाव एव ऋग्वेदे प्रधानद्रविणत्वेन वर्ण्यन्ते । तद्द्वारा च सर्वेषां वस्तूनामर्घनिश्चयः कृतः । ततः पश्चात् क्रमेण शर्मण्यदेशवदत्रापि सुवर्णाभरणानां दक्षिणादाने भृतिदाने चोपयुक्तत्वात् सोऽयं वस्तुविनिमयकालो नाणकालत्वेन परिणतः सम्भाव्यते । अत एव ऋग्वेदे कण्ठाभरणवाचकत्वेन दृष्टस्य निष्कशब्दस्य पश्चात्काले नाणकविशेषवाचकत्वेन परिणामः ॥

इत्थं वैदिककालस्यारम्भ एव दृष्टाः स्वस्वोदरपूरणोपयुक्ता एते जीविकोपायास्ततोऽपि प्रागेवारब्धा सम्भाव्यन्ते । तथापि

वेदकाले विशेषतो विविधानि कर्माणि वृत्तयश्च प्रवृत्तान्यवगम्यन्ते । तथा हि तस्मिन् काले नूतनारब्धत्वाद् दारुकर्मकारिण सातिशयं पदे पदे निर्दिश्यन्ते ऋग्वेदे । ते च तक्षकाः योजकाः रथकाराश्चेति त्रिविधाः । तत्र रथानां शकटानां च निर्माणे नैपुण्यातिशयस्यापेक्षणात् केचित् तस्मिन कर्मणि विशेषतो नैपुण्यं सम्पाद्य वेतनग्रहणेन तत्कर्म चक्रुरित्यपि ऋग्वेदाद्व्यक्तीभवति । अत एव ऋषयः स्वीयं सूक्तघटनाचातुर्यं तक्षकाणां रथकर्मनैपुण्येनोपमिन्वन्ति । एवमृग्वेदे लोहकारा अपि निर्दिष्टा. ये खल्वसंस्कृतान् धातूनग्नौ प्रक्षिप्य सञ्चक्रुः । अग्नेः प्रज्वालनाय चर्मभस्त्रिकायाः स्थाने तैः पतत्रिणां पत्राण्युपयुक्तानि । लोहकारास्ते कुण्डकटाहादीनि गृहोपयुक्तानि लोहपात्राणि निरमामिपुः । अपि च ऋग्वेदे चर्मकाराः. तैः सज्जीकृतानि मृगाणां चर्माणि च प्रस्तूयन्ते । स्त्रियस्तु तस्मिन् काले केवलं सीवने वेतसेन तृणान्तरेण वा कटकरणे च कुशला अभूवन्नित्यवगम्यते । अपि च रूपकोपमाद्यलङ्कारविधया ऋग्वेदे तत्र तत्राविष्कृतमन्यच्छिल्पं वयनम् । परन्तु तद्विपरकाणां वाक्यानां सूत्रप्रायत्वान् तत्कर्मणः स्वरूपं न सामग्र्येण निरूपयितुं प्रभवामः । अथाप्यथर्ववेदे वयनप्रकारः स्फुटमुपवर्णितः. यथा—स्वसृरूपे रात्र्यहनी यथाक्रममच्छिद्यमानैरनन्तैस्तन्तुभिः संवत्सराख्यं वासो वयतः, इति । शुक्लयजुर्वेदकाले तु कर्मविभागः सम्प्रतिपन्नः । यतो हि शुक्लयजुर्वेदे विविधानि शिल्पकर्माणि वृत्तयश्च परिगणितानि । अपि च विशे-

पतस्तत्र रज्जुकारः, रत्नकारः, हस्तिपकः, नर्तकः इत्येतेऽपि निर्दिष्टाः ॥

उद्योगशीलानां समरप्रियाणां च वैदिकार्याणां रथचर्याख्या केलिः स्पृहणीयतमा बभूवेत्ययमर्थस्तत्केल्याः रूपकविधया प्रस्तावादवधार्यते । पश्चात् पुराणकाले तु यद्यपि रथसञ्चारवृत्तान्तः सातिशयं प्रतिपादितस्तथापि तद्देशीयशीतोष्णप्रकृतेरोजोहानिकरत्वात् सिन्धुनदीतीरसुलभानामश्वानां दक्षिणदेशे क्लेशसाध्यत्वाच्च रथयुद्धं रथचर्या च क्रमेण नामावशेषतामगात् ॥

जनानां क्वचिदेकत्र सम्मेलनं मनोविनोदनार्थमादृता केलिः प्राधान्येनाक्षदेवनम् । तद्विषयकासक्त्या जायमानश्चित्तभ्रम, तन्निमित्तक. सर्वनाशश्चाक्षसूक्तोपवर्णितौ निर्वर्णित एवास्माभि. पञ्चमेऽध्याये । द्यूतगृहमहर्निशं सेवमानांस्तटस्थान् सभास्थाणव इति सोपहासमधिक्षिपति यजुर्वेदः । सेयमक्षक्रीडा तै. केन प्रकारेण प्रवर्तितेति नावगम्यते ऋग्वेदात् । अथापि तैरक्षचतुष्टयमुपयुक्तमित्येकस्मान्मन्त्रादवधार्यते । यजुर्वेदस्तु पञ्चभिरक्षैर्दीव्यमानमन्यं प्रकारमुपक्षिपति । क्रीडायां वञ्चनं महापातकत्वेनोद्घुष्यते ऋग्वेदे । अपि च कश्चिद् ब्रूते—वरुणाज्ञोल्लङ्घित्वादक्षाः पापकर्मणामुत्पत्तिस्थानानि भवन्तीति । अत एव ऋग्वेदे द्यूतकारपर्यायत्वेनोपयुक्तः

कितवशब्दः पश्चात्काले वञ्चाकापरपर्यायत्वेन गृहीतः प्रायेण वञ्चकत्वाद् द्यूतकाराणाम । तथा पश्चात्कालप्रसिद्धो वञ्चकपर्यायो धूर्तशब्दोऽपि द्यूतकारपरत्वेन प्रयुज्यते ॥

अन्य कश्चिन क्रीडाविशेषो नर्तनम् । तच्च स्त्रीभिः पुंभिश्च साधारण्येन परिशीलितं ज्ञायते । किन्तु प्राधान्येन स्त्रिय एव तस्मिन कर्मणि प्रवृत्ताः श्रूयन्ते । तथा ह्युषाः विलासोचितवेषो-ज्ज्वला नर्तकीव बाभातीति स्तूयते । तच्च नर्तनं तस्मिन काले महाजनानां समक्षं प्रवृत्तमित्ययमर्थः (१०–७६–६)——नृत्यतां जनानां मध्यादिव सान्द्राणि रजांस्युत्थितानीत्यादिवर्णनाविशेषैरभि-व्यज्यते ॥

अपि च ऋङ्मन्त्रानालोड्य भूयो विचारे क्रियमाणे विविधाः सङ्गीतविद्या अपि तस्मिन काले परिशीलिता इति व्यक्तीभवति । तथा हि ऋग्वेदे दण्डवाद्यो दुन्दुभिः, मुखवाद्यो वाणः, तन्त्रीवाद्या वीणा चेति त्रयो वादित्रविशेषाः परामृष्टाः । तत्र वीणा तु विशेषतः पुरेवाद्यापि भारतीयानां प्रियतमं वादित्रम् । अपि च 'पितृभिरध्युषिते यमलोके श्रूयते श्रोत्रमधुरो मुरलीध्वनि'रित्यस्मा-दृग्वेदगताद्वर्णनाविशेषाद्वैदिकभारतीया वादित्रध्वनिलोला अभूव-न्नित्यवधार्यते । कासुचिद्धर्मक्रियासु वादित्राणां वादनं प्रतिपादयता केनचित् सूत्रग्रन्थेन वीणाया पितृयज्ञेपूपयोगः प्रदर्शितः । यजु-र्वेदकाले सङ्गीतविद्यैषा कैश्चिज्जनैरुपजीविकात्वेनाद्रियत । यतो

हि तत्र वैणिकाः पाटहिका वाणध्माः शाङ्खिकाश्च शिल्पिनां मध्ये परिगणिताः । एवं गीतरागोऽपि ऋग्वेदेऽसकृत् प्रस्तूयते । मन्यामहे मुखोद्भवोऽयं गीतरागः भारतवर्षप्रवेशात् पूर्वमेवार्यैः सुशिक्षितोऽभूत् । यतो हि सोमयागस्य इण्डो-ऐरेणियकाल एव प्रवृत्तत्वेनात्यन्तपुरातनत्वात् तस्मिन् यागे पठनीयस्य तदङ्गभूतस्य सामगानस्याप्यतिप्राक्तनत्वं सिद्धमेव ॥



## ॥ सप्तमोऽध्यायः ॥

### अर्वाचीना वेदाः

अर्वाचां त्रयाणां वेदानां मध्ये सामवेद एव ऋग्वेदस्य सन्निकृष्टत्वात् प्रथमगणनीयः । चरित्रदृशाऽयं नातीव प्राधान्यमर्हति । यतो ह्यस्मिन् पञ्चसप्ततिर्मन्त्राः परमभिनवकृताः । अन्ये सर्वे ऋग्वेदादुद्धृता एव । ते च प्रायेणाष्टममण्डलात् प्राधान्येन सोमदेवनाकान्नवममण्डलाच्चोपात्ताः । सामवेदोऽयं यजुर्वेद इव यज्ञक्रियोपयोगमात्रफलक । अत एव ऋग्वेदीयतत्तत्प्रकरणादुद्धृतास्ते मन्त्रा अर्थसम्बन्धमनपेक्ष्यात्र केवलं सोमयागक्रियापठितव्यक्रमानुरोधेन सङ्घटिताः । साक्षादृङ्मन्त्राणामेषां चास्ति चेत् कश्चित् स्वरूपभेदः स केवलं स्वरभेदकृतः । इत्थं च सामवेदो नाम सोमयागक्रियायामुद्गातृभिरुद्गातव्यो विलक्षणस्वर. केवलं ऋङ्मन्त्रराशिरिति पर्यवस्यति । पठ्यन्ते च ते मन्त्राः गानाभिधानेषु ग्रन्थेषु गानलक्षणतां प्रापिताः । यत्र हि यौरोपग्रन्थगतेषु गीतशब्देष्विव यथायथं वर्णाम्रेडनं वर्णदीर्घीकरणं वर्णान्तरप्रक्षेपणमित्येते सङ्गीतमार्गमात्रसुलभा विशेषा सूच्यन्ते । एवंविधविषयकाः समुपलभ्यन्ते चत्वारो गानग्रन्थाः । तेषां द्वौ सामवेदस्य सर्वाङ्गपरामर्शिनौ । तन्निर्दिष्टा च साम्नां सङ्ख्या प्रत्येकं मन्त्राणां यथासम्भवं विभिन्नविधेन गानेनाव्यवस्थमधिकीकृतैव ॥

वस्तुत. सामवेदेऽस्मिन् १५४९ मन्त्राः सन्ति । ते च आर्चिकाख्ये भागद्वये विभज्य विन्यस्ताः । आर्चिकमिति ऋचां समूह इत्यर्थः । अनयोरार्चिकयोरवान्तरविभागप्रकारो नैकरूप. । तथा हि प्रथममार्चिकं षड्भिः प्रपाठकैः विभक्तम् । तत्र षष्ठवर्जमितरेषु प्रपाठकेषु प्रत्येकं मन्त्रदशकात्मिका दश दशतः सङ्घटिताः । षष्ठे तु केवलं नवैव । तत्र प्राथमिक्यो द्वादश दशतोऽग्निदेवताका. । अन्तिमा एकादश सोमस्तुतिपराः । मध्यपतितास्तु षट्त्रिंशद्दशतः सोमपानशीलमिन्द्रं स्तोतुं प्रवृत्ताः । द्वितीयमार्चिकं नवभिः प्रपाठकैः विभक्तम् । तेषामेकैकोऽपि प्रपाठकः प्रायेण द्वेधा क्वचित् त्रेधा च प्रविभक्तः । सर्वेऽप्येते प्रविभागाः प्रायेण मन्त्रत्रयघटिताः । एषामेकैकस्यापि प्रविभागस्य प्राथमिको मन्त्रः नियमेन प्रथमार्चिकेऽप्युपलभ्यते । द्वितीयमिदमार्चिकं स्वभावतोऽपि द्वितीयं कालतोऽप्यर्वाचीनम् । यतो ह्यत्र प्रथमार्चिकगता बहवो मन्त्रा प्रत्यावृत्ताः, ऋग्वेदादुद्धृता मन्त्राः प्रथमार्चिक इव नात्यन्तिकं पाठभेदं प्रापिताश्च । नन्विह द्वितीयस्मिन्नार्चिके प्रत्यावृत्ता मन्त्राः प्रथमार्चिकेऽपि तत्पार्श्वस्थितमन्त्रान्तराऽपेक्षयाऽधिकतरमृग्वेदपाठसंवादमाविष्कुर्वन्ति, तत्कथमिति चेन्मन्यामहे द्वितीयस्मिन्नार्चिके ऋग्वेदपाठानुविधायितया सङ्घटितैर्मन्त्रैः सहैकरूपतासम्पादनाय गुरुशिष्यपरम्परागता. सहचरितमन्त्रान्तरवद्विलक्षणपाठत्वेनानुमीयमाना एते मन्त्राः प्रथमार्चिके स्वेच्छया पश्चात्काले विपर्यासं प्रापिता भवितुमर्हन्ति ॥

अथ सामवेदस्य कः कालः ? शतपथब्राह्मणादिदं विद्मः, यत्—प्रथमार्चिकगताः सर्वे भागाः तद्ब्राह्मणग्रन्थोत्तरभागनिष्पन्निकाले लब्धात्मलाभा अभूवन्निति । अपि च सम्भाव्योऽयं सामवेदः यजुर्वेदसम्बन्धिनः तैत्तिरीयवाजसनेयाख्यसंहिताद्वयस्योत्पत्तेः प्रागेव संहितात्मतां प्रापद्यतेत्यपि शक्यवचनम् । यतो ह्यत्र संहिताद्वयेऽपि ऋग्वेदपाठादत्यन्त विभिन्नाः सामवेदादुद्धृता भवितुमर्हन्तो गानयोग्या बहवो मन्त्राः समुपलभ्यन्ते । तत्र वाजसनेयसंहितायास्तैत्तिरीयसंहितापेक्षयाऽधिकतर. ऋग्वेदपाठसंवादो दृश्यत इत्यन्यदेतत् । यत्तावदुक्त वीबराचार्येण—सामवेदे बहुषु मन्त्रेषु प्राचीनतराणां पाठभेदानां दर्शनादद्योपलभ्यमानर्ग्वेदसंहितानिष्पत्तेः पूर्वमेव सङ्कलितैः ऋङ्मन्त्रैरयं सङ्घटितो भवितुमर्हतीति तदेतदश्रद्धेयमेव । सामवेदीयाः पाठभेदास्तु वस्तुतः क्वचित् सम्प्रदायशैथिल्यात् क्वचित् तत्तत्क्रियानुगुण्येन मन्त्राणामन्यथाकरणाच्चोपनताः ॥

सामवेदस्य हि कौथुमराणायनीयाख्यं शाखाद्वयमिदानीमुपलभ्यते । तत्र कौथुमाः सम्प्रत्यपि गुर्जरदेशे सन्तीति शृणुमः । राणायनीयास्तु पूर्वं महाराष्ट्रेषु स्थिताः । इदानीं तदनुगामिनो हैदराबादस्य पौरस्त्यभागे विद्यमानाः श्रूयन्ते । अनयोरुभयोः शाखयोरल्पीयानेव पाठभेदो दृश्यते । तत्र राणायनीयपाठो बहुत्र प्रकाशितः । किन्तु यः पाठः प्रथमं 'स्टीवन्सन्' समाख्येन १८४२ तमे क्रिस्त्वब्दे प्रकटितः स पश्चात् 'बेनिफै' नाम्ना

पाश्चात्यविदुषा १८४८ क्रिस्त्वब्दे शर्मण्यभाषानुवादटिप्पणपूर्वकं यत्नतः प्रकाशितेन वास्तविकेन पाठेन प्रत्यादिष्टः । एवं वेदानां मध्ये सामवेद एवादावामूलाग्रं मुद्रणेन प्रकाशितः । अपि चैष राणायनीयपाठः सायणाचार्यभाष्यसंवलितः पश्चाद्भारतवर्षेऽपि प्रकाशितः । कौथुमानां पाठे तु नैगेयनामकैस्तदीयावान्तरशाखीयै द्वितीयार्चिकगतस्य सप्तमप्रपाठकस्य प्रथमार्चिके प्रक्षेपणान्नान्यो भेद इदानीमुपलभ्यते । तदनुसारी पाठः १८६८ तमे क्रिस्त्वब्दे प्रकाशितः । परन्तु नायं तस्य पुराकालिको वास्तविकः पाठः । यतो हि नैगेयशाखीयस्य देवतर्षिविषयकस्यानुक्रमणिकाद्वयस्य परिभावनायां पुराकाले कौथुमपाठस्येतो विभिन्नत्वं व्यज्यते ॥

यजुर्वेदस्तु ऋग्वेदाभिव्यक्तादन्यमेव आत्मोपत्तिदेशं भारतीयानां सात्त्विकधार्मिकाचारयोः प्रकारान्तरं च व्यञ्जयति । यजुर्वेदोऽयमृग्वेदोत्पत्तिदेशादतिदूरे पूर्वदिग्भागे समुत्पन्नः । न खल्वत्र सिन्धुनद्यास्तच्छाखानां वा नामाप्युपलभ्यते । प्रत्युतोत्तरभारतवर्षस्य मध्यभागे विद्यमानाः कुरुपञ्चालादयो देशाश्च निर्दिश्यन्ते । एवं च कुरुक्षेत्रमिति प्रसिद्धं कुरुराज्यमेव यजुर्वेदस्य तदीयब्राह्मणग्रन्थानां चोत्पत्तेः पवित्रं क्षेत्रमित्यवधार्यते । यत्खलु कुरुक्षेत्रं सरस्वतीदृषद्वतीभ्यामारभ्य पूर्वदक्षिणभागे यमुनापर्यन्तमभिव्याप्य शुतुद्रीयमुनयोरन्तराले विद्यते । तदिदमद्यत्वे 'सीर् हिन्द्' इति व्यपदिश्यते । तस्यैव पूर्वभागे पञ्चालदेशः । यश्च मीरुताख्याद् देशखण्डादारभ्य पूर्वदक्षिणभागेऽलहबादपर्यन्तमभिव्याप्य गङ्गा-

यमुनयोर्मध्यवर्तिनं डोयावदेशमालिङ्गति । इत्थं प्रथमतः कुरुक्षेत्र प्राप्तोदयाः ब्राह्मण्याः सात्त्विका धार्मिकाश्चाचाराः पश्चात् क्रमेण बहुलीभूय भारतवर्षे सर्वत्र प्रचेरुः । तदिदं कुरुक्षेत्रं चरित्रदृशाऽपि विश्रूयते । अत्र [illegible] मत्स्यपञ्चालयोः अन्यतः कुरुपञ्चालयोश्च महाभारतोपवर्णि[illegible] [illegible]युद्धं प्रवृत्तम् । विश्वविश्रुतायां मनुस्मृतौ क्षेत्रमिदं ब्राह्म[illegible] [illegible]भूतत्वाद् ब्रह्मावर्तशब्देन व्यपदिश्यते । अपि च मत्स्यपञ्चालशूर[illegible]नकैः सहितमिदं कुरुक्षेत्रं ब्रह्मर्षिदेश इति एतद्देशप्रसूतस्याग्रजन्मनः सकाशात् सर्वे मानवाः स्वं स्वं चरित्रं शिक्षेरन्निति च महर्षिणा मनुनाभिहितम् ॥

तत्रैव यजुर्वेदाध्यायिनो नानाशाखात्वेन विभिन्नाः । ता एव शाखाः पश्चात्काले पल्लविताः क्रमेण भारतवर्षीयान् दिगन्तानाभिव्यापुः । तत्रादिमा कठशाखा । तस्या एव काप्युपशाखा कपिष्ठलाख्या । एतच्छाखाद्वयावलम्बिनः पुरा ग्रीकागमनकाले पञ्जापदेशे तदनु काश्मीरदेशे च प्रतिवसन्ति स्म । तत्र कठाः सम्प्रति काश्मीरेषु परमुपलभ्यन्ते । कपिष्ठलास्तु ससूलनाशं नष्टाः । पूर्वैः कालापशब्देन व्यपदिष्टा. मैत्रायणशाखीया पुरा नर्मदानदीमुखाद् दक्षिणतो नासिकादेशपर्यन्तं च विस्तीर्णे समुद्रात् प्रायेण शतक्रोशदूरान्तरिते नर्मदातीरे न्यवात्सुः । अद्यत्वे तु तच्छाखीया. नर्मदामुत्तरेण स्थिते गुर्जरदेशे, अहम्मदाबादनगरे, तत्पश्चिमतो मोर्विपुरे च विरलतया निवसन्तः श्रूयन्ते । तदिदं शाखाद्वयं क्रैस्तवाब्दारम्भात्पूर्वं भारतवर्षे सर्वत्र लब्धप्रचारमभूत् ।

यतो हि तत्रभवान् पतञ्जलिः काठकं कालापकं च ग्रामे ग्रामे प्रोच्यमानं विश्वतः श्रूयमाणं चाह । तद्वदयोध्यायामपि शाखाद्वयमिदमादरेण सभाजितमिति रामायणादवगम्यते । परन्तु तदिदं शाखाद्वयमभिनवोदिताभ्यां तैत्तिरीयवाजसनेयसमाख्याभ्यां यजुश्शाखाभ्यामधःकृतम् । तत्र तैत्तिरीयशाखावलम्बिनः क्रिस्तोः पूर्वं चतुर्थे शतकाब्दे नर्मदाया दक्षिणतीरे स्थिताः । तस्या एव प्रधानभूता काचिदुपशाखा आपस्तम्बसमाख्या । एतच्छाखीया. सम्प्रति गोदावरीतीरमधिवसन्ति । अन्या काचित् तैत्तिरीयोपशाखा हिरण्यकेशिसमाख्या । तच्छाखीयाश्चाद्यत्वे गोदावर्या नातिदूरे दक्षिणभागे कृतवसतयो दृश्यन्ते । वाजसनेयशाखीयाः पुरा भारतवर्षस्य पूर्वोत्तरभागे गङ्गाकूलेऽवर्तिषत । इदानीं ते पूर्वोत्तरभागं मध्यदेशं चाभिव्याप्ता विशालं देशमध्यासते ॥

शाखाचतुष्टयेऽस्मिन्नत्यल्पा एवोपलभ्यन्ते परस्परपाठभेदाः । तत्र चतुष्काण्डात्मिका चतुःपञ्चाशत्प्रपाठकवती मैत्रायणीसंहिता तत्रभवता श्रोडराचार्येण प्रकाशिता (१८८१–८६) । तेनैव काठकसंहिताऽपि प्रकटीकृता । संहितयोरनयोर्भाषागतिरभिन्नरूपैव । अन्यत्राप्रयुक्ताः केचन शब्दाश्चात्रोभयत्रापि प्रयुक्ताः । कपिष्ठलसम्बन्धिन्या काठकसंहिताया कश्चिदेकदेशः परं सम्प्रत्यासाद्यते । आसाद्यमानोऽप्यपभ्रंशबहुलः । अपि नाम कुत्रचिदुपलभ्येत तच्छाखानुसारी समग्रः शुद्धः पाठः ? सन्दिहामहे । सप्तकाण्डात्मिका चतुश्चत्वारिंशत्प्रपाठकवती तैत्तिरीयसंहिता तु

पूर्वोक्तसंहिताद्वयापेक्षयाऽर्वाचीनतरा । सा च वीवराचार्येण प्रकाशतां प्रापिता (१८७१–७२) । एतास्तिस्रोऽपि यजुस्संहिता: समानरीतयः सजातायाश्च । तथा हि संहितात्रयेऽपि बहुत्र मन्त्रेषु वाक्येषु च शब्दकृतं साजात्यं व्यक्तमेव । तथा विषयोपवर्णनरीत्याऽपि व्यज्यत एवासामन्योन्यसम्बन्धः । यतो हि विषयाः सर्वत्र समानरीत्यैव गुम्फिताः । वाजसनेयसंहितायाः सरणिस्तावदितो भिद्यते ॥

वाजसनेयसंहितायां हि यज्ञक्रियासु पठितव्या मन्त्रा अर्थवादाश्च परं निबद्धाः न तु ब्राह्मणभागाः । ते तु पृथगेव ब्राह्मणग्रन्थे सङ्कलिताः । इत्थं विषयविभागेन शिष्यबुद्धिवैशद्यापादकत्वादेषा शुक्लपदेन विशेष्यते । तैत्तिरीयादिसंहितात्रये तु मन्त्रार्थवादभागा इव ब्राह्मणभागा अपि संहितायामेव सङ्कलिताः । इत्थं विषयसाङ्कर्येण ते शिष्याणां व्यामोहं जनयन्ति । अतस्ते कृष्णशब्देन विशेष्यन्ते । तत्र वाजसनेयसंहितायाः पाठद्वयमिदानीमुपलभ्यते । तयोरेको माध्यन्दिनानामपरः कण्वानाम् । उभयत्राप्यभिन्न एव प्रतिपाद्यो विषयः । विषयोपगुम्फनरीतिरपि समानैव । भेदस्तु केवलं पठनप्रकारकृतः । सोऽपि केवलं गद्यात्मकेऽर्थवादभागे न तु पद्यात्मके मन्त्रभागे । इत्थंविधसाजात्यभाजाविमौ पाठौ न भिन्नकालिकौ भवितुमर्हतः । योऽयं तयोः पठनरीतौ भेदः स देशभेदमूलकः सम्भाव्यते । दृश्यते चोभय-

त्रापि देशभेदैकसुलभ उच्चारणभेदः । एतत्पाठद्वयानुसारी शुक्लयजुर्वेदस्तत्रभवता वीवराचार्येण प्रकाशितः (१८४९–५२) ॥

सोऽयं शुक्लयजुर्वेदः सम्प्रति चत्वारिंशदध्यायघटितः समुपलभ्यते । तत्रायमादौ प्राथमिकाष्टादशाध्यायमात्रघटितो बभूवेति बाह्यैरान्तरैश्च प्रमाणैरवधार्यते । कानि तानि बाह्यानि प्रमाणानीति प्रथमं विचारयामः । अत्रत्या ह्यादिमाष्टादशाध्यायगताः पद्यमया गद्यमयाश्च सर्वे भागाः निर्विशेषं मन्त्रशब्देन निर्दिश्यमानास्तैत्तिरीयसंहितायामुद्धृताः । द्वाविंशात् पञ्चविंशपर्यन्तेष्वध्यायेषूपवर्णिता अश्वमेधप्राकरणिका अपि केचिद्भागास्तैत्तिरीयसंहितायामुद्ध्रियन्त इत्यन्यदेतत् । नैतदस्मदुक्तेर्व्याघातकं भविष्यति । तथा वाजसनेयसंहिताया अन्तिमेषु द्वाविंशतावध्यायेषु वर्ण्यमाना विषयास्तैत्तिरीयब्राह्मणारण्यकयोः परमनुसन्धीयन्ते न तु वाजसनेयब्राह्मणे तदारण्यके वा । प्रत्युत वाजसनेयब्राह्मणे प्राथमिके काण्डनवके प्राथमिकाष्टादशाध्यायगता मन्त्राः परं प्रतिपदार्थप्रदर्शनपूर्वकं व्याख्याताः । तदनन्तरसप्तदशाध्यायगता मन्त्रास्तु विरलतयैवोपात्ताः । तदनन्तराणामध्यायानां तु तत्र वार्ताऽपि नास्ति । अनेन हि प्राथमिकेष्वष्टादशस्वध्यायेषु ब्राह्मणकाराणामादरातिशयः प्रकट एव । स च तद्भागस्य पुरातनत्वादित्यसन्देहम् । अपि च कात्यायनकृतत्वेनोपलभ्यमानायां शुक्लयजुर्वेदानुक्रमणिकायां षड्विंशात् पञ्चत्रिंशपर्यन्ता दशाध्यायी खिलत्वेन परिगणिता ॥

आस्तामिदम् । वाजसनेयसंहितान्तर्गतानि प्रमाणानि विमृशामः । तत्र षड्विंशादेकोनत्रिंशपर्यन्ता चतुरध्यायी तदुपवर्णितानां विषयाणां पूर्वाध्यायविहितयज्ञक्रियान्वयित्वमात्रेणार्थवत्वात् पश्चात्कालिकीति निश्चयः सुकरः । त्रिंशादारभ्यैकोनचत्वारिंशपर्यन्ता दशाध्यायी च नरबलिपितृयज्ञाविश्वजिद्यज्ञादीरभिनवोदिता. क्रियाः प्रतिपादयन्ती ततोऽप्यर्वाचीनेत्यसन्देहम् । अन्तिमश्चत्वारिंशोऽध्यायस्तु सुतरामेवार्वाचीनः । न खल्वयमंशतोऽपि साक्षाद् यज्ञकर्माणि परामृशति । किन्तु केवलमुपनिषच्छायामनुहरति । अपि च तावदेतत्संहितोपवर्णितानां धार्मिकाणां साह्निकानां च आचाराणां विचारणायामर्वाचीनतामूलका केचिद्विशेषा प्रकटीभवन्ति । तथा हि—अस्या. षोडशेऽध्याये रुद्रपरतया प्रयुक्ता बहवो विशेषणशब्दाः पश्चात्तनेष्वध्यायेषु शिवपर्यायत्वेन प्रयुज्यन्ते । अपि च शिवस्य सर्वोत्कृष्टत्वबोधकौ 'ईशान महादेव'शब्दौ पूर्वत्रानुपयुक्तौ केवलमेकोनचत्वारिंशेऽध्याये प्रयुज्येते । तौ च शिवस्याभूतपूर्वं तादृशमुत्कर्षं कल्पयन्तौ पश्चात्काले प्रादुर्भूतौ । अपि च त्रिंशेऽध्याये बहुसङ्ख्याः सङ्कीर्णजातयः परिगण्यन्ते । षोडशाध्याये त्वल्पसङ्ख्याः । एतेन त्रिंशाध्यायोत्पत्तिकाले यावत्यः सङ्कीर्णजातयोऽभूवन् न तावत्यः षोडशाध्यायोत्पत्तिकाल इति व्यक्तमेव तयो. कालकृतं पौर्वापर्यम् ॥

एभिर्लिङ्गैः शुक्लयजुर्वेदोऽयं चतुर्षु भिन्नकालेषूत्पन्नः सम्भाव्यते । तथा हि—तत्र प्रधानभूता प्राथमिकी अष्टादशाध्यायी

प्रथमाविर्भूता । तदनन्तरा सप्ताध्यायी परिशिष्टरूपेण पश्चात्काले संयोजिता । यतो ह्यत्र भागद्वयेऽप्यविशेषेण सर्वयज्ञोपयुक्ताः क्रियाः प्रतिपाद्यन्ते । ततः क्रमेण सर्वतः सम्प्रवृद्धे क्रियाकलापे तदनन्तरा चतुर्दशाध्यायी संयोजिता । तत्र हि षड्विंशादेकोनत्रिंशपर्यन्तैरध्यायैः पूर्वाध्यायोपवर्णिताः, त्रिंशादेकोनचत्वारिंशपर्यन्तैरभिनवाविर्भूताश्च क्रियाः प्रतिपाद्यन्ते । अन्तिमश्चत्वारिंशोऽध्यायस्तु समन्तादस्तोन्मुखे क्रियाकलापे प्रादुर्भूतः । यतो ह्यत्र न साक्षाद्यज्ञक्रियोपादानं न चापि सर्वात्मना तत्परित्यागः । किन्त्वान्तरालिक कश्चिदवस्थाविशेषोऽनुभूयते ॥

योऽयमुक्तः शुक्लयजुर्वेदस्याष्टादशाध्यायात्मको मूलभागः सोऽपि कृष्णयजुस्संहितानामुत्पत्तेः परं प्रादुर्भूतः । यतो हि मन्त्रार्थवादभागस्य संहितायां विधिभागस्य ब्राह्मणग्रन्थे च विभज्य विनिवेशनामिका येयमभिनवा रीतिराहृता सा कृष्णयजुस्संहिताश्रितात् सम्मिश्रपाठरूपात् क्रमादत्यन्तमर्वाचीनैव भवितुमर्हति ॥

यजुर्वेदीये प्रधानभूते भागद्वय एकतो दर्शपूर्णमाससोमयागाः, अपरतः स्थण्डिलकरणप्रकारश्च प्रतिपाद्यन्ते । तत्र शुक्लयजुस्संहितायाः प्राथमिक्यां दशाध्याय्यां दर्शपूर्णमाससोमयागोपयुक्ताः, तदनन्तराष्टादशाध्याय्यां स्थण्डिलकरणक्रियोपयुक्ताश्च मन्त्राः सङ्ग्रथिताः । एतद्द्वयसम्बन्धिनौ विध्यंशौ तु यथाक्रमं शतपथब्राह्मणस्य प्राथमिके काण्डपञ्चके तदनन्तरे काण्डचतुष्के च

निबद्धौ । कृष्णयजुर्वेदेऽप्येतदुभयविषयकौ विधिमन्त्रभागौ पृथगेव निबद्धौ न तु मिश्रीकृतौ । परन्तु विधिभागोऽपि तस्यां संहितायामेवान्यत्र सङ्कलितो न तु पृथग्ब्राह्मणग्रन्थ इत्येतावानस्ति विशेषः । तथा हि—तैत्तिरीयसंहितायाः प्रथमकाण्डस्यादिमे प्रपाठकचतुष्टये दर्शपूर्णमाससोमयागार्थकाः, चतुर्थे काण्डे स्थण्डिलकरणार्थकाश्च मन्त्राः शुक्लयजुस्संहिताश्रितरीत्यैवोपगुम्फिताः । तत्रैतद्विषयकौ विधिभागौ तैत्तिरीयसंहितायामेवान्यत्र सङ्घटितौ । तथा ह्यस्याः पञ्चमे काण्डे स्थण्डिलक्रियासम्बन्धिनः, षष्ठे काण्डे सोमयागसम्बन्धिनश्च विधयः सङ्घटिताः । दर्शपूर्णमाससम्बन्धिनस्तु संहितायामनिवेशिताः पृथगेव तैत्तिरीयब्राह्मणे तृतीये काण्डे सङ्कलिताः । मैत्रायणसंहितायामप्येतादृश्येव व्यवस्था । तत्र हि प्रथमकाण्डस्यादिमे प्रपाठकत्रये दर्शपूर्णमाससोमयागोपयोगिनः, द्वितीयकाण्डस्योत्तरार्धात्मकेऽन्तिमे प्रपाठकसप्तमे स्थण्डिलक्रियोपयोगिनश्च मन्त्राः सङ्घटिताः । तद्विषयकौ विध्यंशौ च तस्यामेव संहितायां यथाक्रमं तृतीयकाण्डस्य षष्ठे प्रथमे च प्रपाठके विन्यस्तौ । कृष्णयजुस्संहितायामेतत्प्रकरणद्वयस्य परिशिष्टभागेषु परं विधिमन्त्रयोः पृथङ्निवेशनात्मकोऽयं विशेषो नादृतः । इत्थं च न केवलं ब्राह्मणभागानां मन्त्रभागानां च मिश्रपाठ एव किन्त्वेकसंहितापाठोऽपि कृष्णयजुर्वेदस्य कृष्णत्वविशेषणे बीजमित्यवधेयम् । तत्र कृष्णयजुस्संहितायामेतत्प्रकरणद्वयसम्बन्धिनोर्विधिमन्त्रभागयोः पृथक् सन्निवेशे को हेतुरिति न ज्ञायते । न खल्वत्र वाजसनेय-

संहिताशतपथब्राह्मणसम्बन्धापेक्षया सन्निकृष्टतरः कालिक आर्थिको वा सम्बन्धविशेषः कल्पयितुं शक्यः ॥

यजुर्वेदो यज्ञक्रियामात्रोपयोगित्वात् सामवेदसजातीय एव । अथाप्यस्त्येव तयोर्महद्वैलक्षण्यम् । तथा हि सामवेदः प्राधान्येन सोमयागमात्रसम्बद्धः । यजुर्वेदस्त्वखिलयज्ञक्रियानिलयः । अपि च सामवेद इव यजुर्वेदेऽपि ऋङ्मन्त्राः समुद्धृताः । परन्तु सामवेदः ऋङ्मन्त्रमयः । यजुर्वेदस्तु न तथा । अत्र हि किञ्चिदधिकश्चतुरंशः परमृग्वेदादुद्धृत । अन्यः सर्वोऽपि स्वतन्त्रकल्पितो भागः । तथा हि वाजसनेयसंहितायामस्यामेकोऽर्धभागः पद्यमयो मन्त्रात्मकः, अपरोऽर्धभागो गद्यमयोऽर्थवादात्मकश्च । तत्र मन्त्रभागे किञ्चिदधिकसप्तशता मन्त्राः परमृग्वेदादुपात्ताः । अवशिष्टः सर्वो मन्त्रभागः समग्रोऽर्थवादभागश्चाभिनवाविर्भूतः । नन्विह सामवेदविलक्षणतया नूतनमन्त्रार्थवादांशसृष्टौ को हेतुरिति चेदुच्यते—ऋग्वेदकालानन्तरं सर्वतोमुखतया सम्प्रवृद्धे प्राक्तने कर्मणि प्रादुर्भूते च समन्तादुच्चावचे नूतने क्रियाकलापे तत्र पठनार्हाणां मन्त्राणामृग्वेदेऽलाभान्नूतना सृष्टिरपेक्ष्यत । तेन तदन्वयिनो मन्त्रास्तत्प्रशंसापरा अर्थवादाश्च यथायथं प्रणीताः ॥

यजुर्वेदीयमन्त्रभागस्य भाषासरणिर्यद्यप्यात्मनोऽर्वाचीनतामावेदयत्येव तथापि सा ऋग्वेदभाषायाः सुतरां सन्निकृष्टा लौकिकसंस्कृतभाषायाः सुदूरं विप्रकृष्टा च भवतीति वेदितव्यम् ॥

यजुर्वेदीयो देवताविषयको मार्गः ऋग्वेदीयमार्गान्नात्यन्तं विलक्षणः । यतो हि ऋग्वेदप्रतिपादिता एव सर्वे देवा अत्राप्युपवर्ण्यन्ते । अथापि क्वचित् क्वचिदुपलभ्यन्त एव केचिद्विशेषाः । तथा हि ऋग्वेदस्यार्वाचीनेषु भागेषु लब्धाविर्भावः प्रजापतिरत्र प्रधानदेवतापदमधिरोहन्नवलोक्यते । तथा ऋग्वेदीयो रुद्रः अत्र शिवशब्देन पश्चात्कालप्रसिद्धैः शङ्करमहादेवादिभिः शिवपर्यायैश्च निर्दिश्यमानः शिवाभेदं प्रापितः । एवं विष्णुरपि ऋग्वेदापेक्षयाऽत्र किञ्चिदधिकतरं प्रकर्षं लम्भितः । विष्णुयज्ञयोरभेदोऽप्यैदंप्राथम्येनात्र प्रदर्शितः । अन्तरिक्षस्थाना यातुधानाश्चात्र सर्वत्राप्यसुरशब्देनैव निर्दिश्यमानाः सुमनसां सुराणां प्रतिकूलचारित्वेनोपवर्णिताः । देवासुरसमरवृत्तान्तोऽपि यजुर्वेदेऽत्र बहुत्र प्रस्तूयते । लौकिकसंस्कृतकाले प्रकर्षेण वर्ण्यमानाः हावभावादिरमणीगुणाभिरामाः लीलाविलासविभ्रमविवशीकृतसकललोकाः कमनीयलावण्याः अप्सरस्समाख्याः सुरलोकसुन्दर्यः ऋग्वेदापेक्षया सचमत्कारातिरेकतत्र प्रस्तूयन्ते । तासां कश्चिदत्र नामतश्च निर्दिष्टाः ॥

इत्थं विमृश्यमाने वस्तुनि—यजुर्वेदीये धर्ममार्गेऽपि क्वचिदन्यथाभावः क्वचिदभिनवक्रियाविर्भावश्च संलक्ष्यते । तथा हि—नवीनाः केचित् क्रियाविशेषा पुरस्कृताः । ऋङ्मन्त्रेषु 'भक्ति' रूपेऽर्थे प्रयुक्तत्वेनोपलभ्यमानो ब्रह्मशब्दो यजुर्वेदेऽस्मिन् सूक्तिविशुद्धिरूपार्थद्वयवाचकत्वेन परिणतः पश्चादुपनिषत्सु विशुद्धस्वरूपपरब्रह्माख्यपरावरवस्तुवाचकत्वेन निरूढः । अपि च ऋग्वेदे-

ऽनुपलभ्यमाना नागपूजा यजुर्वेदेऽस्मिन् भारतीयधर्माणामन्यतमत्वेनोपवर्णिता । अपि च यजुर्वेदोपस्थापितः पूजाभिसन्धेरभिनव. प्रकारोऽवश्यमवधारयत्यवास्य वेदस्य पश्चात्कालाविर्भूतत्वम् । तथा हि—यजुर्वेदे यज्ञदेवतासम्बन्ध. ऋग्वेदोक्तादन्य एवास्थितः । ऋग्वेदे हि देवास्तत्तद्यज्ञकर्मानुरूपफलप्रदातृत्वेन स्तूयन्ते । यज्ञास्तु देवतामनःप्रसादनार्थकत्वेनाभिमताः । एवं च ऋग्वेददृशा देवानां सर्वोत्कृष्टत्वं सर्वतन्त्रस्वतन्त्रत्वं चाध्यवसीयते । यजुर्वेदे तु यज्ञा एव स्तोतव्यत्वेनोद्दिष्टाः । यथाविधि तेषामनुष्ठानमेव सर्वप्रधानम् । त एव सर्वशक्ता, सर्वतन्त्रस्वतन्त्राश्च सन्तः कर्मानुरूपफलदानाय देवान् न केवलं विज्ञापयन्ति किन्त्वाज्ञापयन्तीत्याम्नातम् । इत्थं देवानां यज्ञाधीनत्व वर्णयतो यजुर्वेदस्य यज्ञानां ब्राह्मणाधीनत्वात् तद्वारा देवानां ब्राह्मणाधीनत्वे तात्पर्यमवसीयते ॥

यजुर्वेदविहिता यज्ञक्रियाः सर्वा यन्त्रकल्पैः पुरोहितैरनुष्ठेयाः । यज्ञान् हि परितः स्थिता नैके पुरोहिता उच्चावचानङ्गयागान् निष्पादयन्ति । तेषामेकैकस्याल्पीयसोऽपि कर्मणः महायागसम्बन्धः सुमहत् प्रयोजनं च परिकल्पितमस्ति । सर्वतोमुखतया सम्प्रवृद्धासु यजुर्वेदीययज्ञक्रियासु ऋग्वेदीया पारमार्थिका धर्माः क्रमेण प्रक्षीणाः प्रनष्टाश्च । अपि चात्र सूक्तानां सर्वेषां यज्ञक्रियान्वयित्वादैहिकोद्देशप्रधानत्वाच्च नेह देवतागतानामुत्कर्षोपकारितादिगुणानां स्तुतिः, स्तुत्यकरणे प्रत्यवायो वा श्रूयते । अतश्च यजुर्वेदीयमन्त्राणामर्थवत्वापेक्षाभावादुक्तयोरेव शब्दार्थयोः पुनः पुनरावृत्ति', बहूनाम-

नर्थकानां निपातानां प्रयोगश्च प्राचुर्येणादृतः । तत्रापि 'ओं' इत्ययं निपातः सातिशयं प्रयुक्तः । दृश्यतां मैत्रायणसंहितान्तर्गतः कश्चिन्मन्त्रः—'निधायो वा निधायो वा ओ वा ओ वा ओ वा ऐ ऐ ओं स्वर्णज्योति' इति । अत्र हि स्वर्णज्योतिरित्ययमंशः परं सार्थकः ॥

इत्थम्भूतोऽयं यज्ञक्रियाविधिरत्यन्तमेव । ब्राह्मणेतरेषां दुर्बोधो जातः । ततः क्रमेण ब्राह्मणैः यज्ञानामिवैषां मन्त्राणामपि विश्वनियामकत्वं सर्वशक्तिमत्वं चोद्घोषितम् । अत एव केचिन्मन्त्राः विजयप्रदानक्षमत्वेनाभिमताः श्रूयन्ते । तत्प्रयोगेणैवेन्द्र. असुरानवधीदिति चाम्नायते । कानिचित् सूक्तानि वृष्ट्युत्पादनक्षमाणि श्रूयन्ते । तत्सूक्तपठनपूर्वकं हविस्त्यागं कुर्वाणः पुरोहित. सद्य एव वृष्टिमुत्पादयितुं प्रभवतीति चावगच्छामः । इत्थमेषु सूक्तेष्वैन्द्रजालिकी कापि मायाशक्तिरभ्युपगता । ततः पश्चादीदृशममानुपशक्तित्वं तपसि सन्यासे चारोपितं ब्राह्मणैः, विशुद्धौ च बौद्धैः । यजुर्वेदीयार्थवादवाक्यानां देवतास्तुतिपरत्वाभावाद्यज्ञक्रियामात्रोपयोगित्वाच्च तानि तत्तद्यज्ञानुष्ठानस्य मन्त्रपरायणस्य च प्रयोजनानि प्रशंसन्ति । ऐहिकसुखावाप्तेः गोग्रामाद्यभीष्टार्थावाप्तेश्च हेतुभूतान् बहून् यज्ञक्रियारूपानुपायांश्चोपदिशन्ति । ऊहादिकुशलस्य शास्त्रपारगस्य ऋत्विजः सन्निधिर्यज्ञकालेऽवश्यमेवापेक्षितः । अप्रमादमनुष्ठेयानि कर्माणि । तत्र बहुभिः कर्मभि. प्राप्यत्वेनोत्प्रेक्षितानि फलान्यसङ्गतानि केवलं बालिशानि च । तथा ह्येकतमस्य कर्मणः

संवत्सरलाभः फलत्वेन श्रूयते । इयमुक्तिः केवला बालिशोक्तिरेव । एवं चन्द्रपदकामनया क्रियमाणः क्रियाविशेषोऽपि तादृग्विध एव ॥

एवं परम्परया विश्वतो विजृम्भमाणे यज्ञक्रियाविधौ भारतवर्षीयो जातिभेदः सुदृढबन्ध व्यवस्थापितः सशाखोपशाखीभूय प्रवृद्धः । ब्राह्मणास्तत्र सङ्घे धर्मे च सर्वोत्कर्षं प्रापुः । प्रायेण पञ्चशतोत्तरद्विसहस्रवत्सरीतः पूर्वस्मात्कालादारब्धोऽयं जातिभेदोऽद्य यावदविच्छिन्नो वरीवर्ति भारतीयानां मध्ये । यजुर्वेदकाले न केवलं प्रधानभूताश्चत्वारो वर्णा एव किन्तु भारतभूमावद्यत्वे दृश्यमानाः सर्वविधाः सङ्करजातिभेदाश्चाप्यभूवन्निति वाजसनेयसंहितात अवगम्यते । एवं च ऋग्वेदकालापेक्षया यजुर्वेदकाले भारतीयानां सङ्घधर्मयोः सरणिरन्यैवाभूदित्यध्यवसीयते ॥

ऋक्सामयजुर्वेदाः परं यज्ञक्रियोपयोगित्वादादौ प्रामाणिकत्वेनाङ्गीकृताः । अथर्ववेदस्तु सर्वथैव यज्ञक्रियासम्बन्धरहितः । तस्यापि कथञ्चित् तत्सम्बन्धसम्पादनस्पृहया तद्विषयप्रतिपादकमन्तिमं काण्डं तत्र पश्चात्काले संयोजितम् । तत्काण्डादन्यत्र नायं वेदो यज्ञसम्बन्धं भजति । तदीयाः केचिन्मन्त्राः गृह्यसूत्रानुवर्ण्यमानासु जननविवाहमरणादिविषयिकासु कासुचिद् गृह्यक्रियासु पट्टाभिषेकप्रभृतिषु कासुचिद् राजकीयक्रियासु च विनियुज्यन्ते न तु क्वापि यज्ञक्रियासु । भूयस्तयाऽयमथर्ववेदोऽभिचारक्रियाप्रतिपादकः ऋग्वेदादेरत्यन्तं विलक्षणविषयः । अभिचारक्रियैवात्र

प्राधान्येनोपदिश्यते । तथा हि व्याधयः, श्वापदाः, यातुधानाः, मायाविनः, शत्रवः, ब्रह्मद्वेषिणः, इत्येतेषामन्येषां च परिपन्थिनां निवारणस्तम्भनमारणाद्युपयुक्ता उपायाः समुपदिष्टाः । इत्थमभिचारप्रधानत्वादमाङ्गलिकेऽप्यस्मिन्नथर्ववेदे विरलतया संसारसुखं, ग्रामवासक्षेमं, वैरप्रशमनं, दीर्घायुः, आरोग्यं, श्रेयः, स्वस्त्ययनं, द्यूते दैवानुकूल्यं, इत्यादिकमाशंसमाना माङ्गलिकाश्चापि केचिन्मन्त्राः सम्भवन्त्येव । इत्थं चाथर्ववेदोऽयं निग्रहानुग्रहोभयलक्षणो भवतीति पर्यवस्यति ॥

अथर्ववेदोऽयमृग्वेदापेक्षया बलवत्तरान्धविश्वासघटितः । अत्र हि रक्षःपिशाचाद्यस्तित्वाभिमानकलुषाः प्राकृतजनोचिता आभिचारिका वासनाविशेषाः परं समुपस्थाप्यन्ते, न तु संस्कृतमतीनां पुरोहितानां मध्ये प्रादुर्भवन्तो मतधर्मविषयकाः परिष्कृताः प्रत्ययविशेषाः । तस्मादथर्ववेदप्रतिपाद्यो विषयश्चरित्राप्राप्यादतिदवीयसः कालादवतीर्णः सम्भाव्यते । तत्र शरीरामयोपशान्त्यर्थकाः केचिदभिचारविशेषाः स्वरूपतः स्वभावतः प्रयोजनतश्च अल्बर्टकुह्नदर्शितदिशा प्राक्तनजर्मण्य-लत्तिक-रुष्यभाषागतैरभिचारकर्मभिस्तुल्यरूपत्वात् 'इण्डो-यौरोप'कालिका अभिज्ञायन्ते । अथर्ववेदेऽस्मिन् विरलतयोपलभ्यमानाः समुत्कृष्टवर्गीयदेवतासम्बन्धिनो विषयास्तु ऋग्वेदीयविषयापेक्षयाऽत्यन्तमर्वाक्कालिका एव । यतो ह्यत्र संहितान्तरापेक्षया ईश्वरास्तित्ववादः सविशेषमुद्धा-

वितः । नागरिकपरिष्कारचरित्रेऽथर्ववेदोऽयमृग्वेदादप्यधिकतरमा-
दरमर्हति ॥

अथर्ववेदस्य पाठद्वयमिदानीमुपलभ्यते । तत्रैकः पैप्पला-
दानां पाठः । स च केवलमेकस्मिन् भूर्जग्रन्थेऽर्पितः प्राप्यते ।
भूर्जग्रन्थोऽयं चिरन्तन एव । किन्त्वपूर्णोऽनङ्कितस्वरश्च । सोऽयं
ग्रन्थः बुह्लराचार्येण काश्मीरदेशादधिगत. । उपनिबद्धश्च तद्विषयको
वृत्तान्तः १८७५ तमे क्रिस्त्वब्दे रोठाचार्येण । प्रकटीकृतं च
तस्य स्वरूपं तस्य प्रतिच्छन्दं प्रकाशयता ब्लूंफील्डाचार्येण । अय-
मेव मन्यामहेऽथर्ववेदीयपरिशिष्टभागे क्वचित् 'पैप्पलादमन्त्र'शब्देन
स्मृतः पैप्पलादानां पाठ. ॥

अपरः शौनकानां पाठः । स च विट्णिरोठाभ्यां संस्कृत्य
१८५६ तमे क्रिस्त्वब्दे प्रकाशितः । अथर्ववेदोऽयं सायणाचार्य-
भाष्यालङ्कृतो भारतवर्षेऽपि प्रकाशित । तस्मिन् भाष्ये
दर्शिता विविधाः पाठभेदाः विट्णिरोठाभ्यां प्रकाशितेन पाठेन
विसंवदन्ति ॥

अथर्ववेदसंहितायां विंशतिः काण्डानि ७३० सूक्तानि
प्रायेण ६००० मन्त्राश्चोपलभ्यन्ते । तत्र प्रायेण १२०० मन्त्रा
ऋग्वेदादुद्धृताः । तेषु भूयांसः दशमप्रथमाष्टममण्डलेभ्य अल्पी-
यांसो मण्डलान्तरेभ्यश्चोपात्ताः । तत्र विंशे काण्डे समुपलभ्यमानेषु

१४३ ऋग्वेदीयसूक्तेषु द्वादश सूक्तान्यपहायान्यानि सर्वाण्यपि न ऋग्वेदानुपूर्वीं जहति । काण्डान्तरेषु संयोजिता मन्त्रास्तु यथापेक्षमन्यथिताः । परन्तु संहितान्तरेष्विवात्राप्येते ऋग्वेदपाठापेक्षया जघन्यभावं भजन्ति । अथर्ववेदोऽयं न केवलं पद्यमयः किन्तु यजुर्वेद इव भूयसा गद्यमिश्रितः । पञ्चदशे षोडशे च काण्डे स्थितान्यधिकपञ्चाशानि काण्डान्तरेषु विप्रकीर्णान्युपत्रिंशानि च सूक्तानि गद्यवाक्यैर्ग्रथितानि । अन्येष्वपि शताधिकेषु सूक्तेषु पद्यमन्त्राणां मध्येऽपि गद्यमन्त्रा. समुपलभ्यन्ते ॥

अथर्ववेदः प्रथमं प्राथमिकत्रयोदशकाण्डमात्रात्मको बभूवेति तदीयविभागप्रकाराद् विषयस्वभावाच्च व्यक्तीभवति । तत्र ह्यादितः सप्तानां काण्डानां विभागस्तत्तत्काण्डीयसूक्तान्तर्गतमन्त्रसङ्ख्यानिबन्धनः । तथा हि प्रथमे काण्डे प्रतिसूक्तं चत्वार., द्वितीये पञ्च, तृतीये षट्, चतुर्थे सप्त, पञ्चमेऽष्टावरा अष्टादशपरा., षष्ठे त्रयः, सप्तमेऽर्धाधिके भागे केवलमेकैकश्च मन्त्राः सङ्घटिताः । तदनन्तरेषु षट्सु काण्डेषु दीर्घच्छन्दसो मन्त्राः सङ्कलिताः । अत्र त्रयोदशस्वपि काण्डेषु प्रतिपाद्या विषयाः अव्यवस्थं निबद्धाः ॥

समनन्तरं काण्डपञ्चकं तु विषयस्वभावानुरोधेन व्यवस्थापितम् । तथा हि तत्र चतुर्दशं काण्डं विवाहमन्त्रैर्घटितम् । तत्र भूयांसो मन्त्रा ऋग्वेदीयदशममण्डलादुद्धृताः । पञ्चदशं काण्डं

व्रात्याभिधानं परमात्मानं स्तौति । षोडशं सप्तदशं च लघीयसी काण्डे । तत्र षोडशे नव सूक्तानि सन्ति । सप्तदशे त्वेकमेव । तत्र काण्डद्वयेऽपि वशीकरणार्थका मन्त्राः सङ्घटिताः । अष्टादशे काण्डे खननसंस्कारः पितृगणश्च प्रस्तूयते । पञ्चदशकाण्डवत्त्रापि बहवो मन्त्रा ऋग्वेदीयदशममण्डलादुपात्ताः । तस्मादष्टादशं पञ्चदशं च काण्डमथर्वलक्षणबहिर्भूतं द्रष्टव्यम् ॥

अन्तिमं काण्डद्वयमसंशयमेव पश्चात्काले संयोजितम् । तयोरेकोनविंशं काण्डं परिशिष्टभागसंसृष्टम्, अपभ्रंशबहुलश्च तस्यैकदेशः । विंशं च काण्डं भूयस्तयेन्द्रदेवताकैरविकृतानुपूर्वीकमृग्वेदादुद्धृतैः सूक्तैः सङ्घटितम् । इत्थमत्र मूलभागविलक्षणतया ऋग्वेदपाठस्यैवाहृतत्वादस्य तदपेक्षयाऽर्वाचीनत्वं व्यक्तमेव । अपि चास्यार्वाचीनताबोधकानि भूयांसि लिङ्गान्तराण्युपलभ्यन्ते । तथा ह्येतत्काण्डप्रतिपाद्यो विषयः सोमयागः । किन्तु यज्ञक्रियासम्बन्धो नामाथर्ववेदस्यापूर्वो विषयः । मन्यामहेऽस्य चतुर्थवेदत्वस्थापनकाम्यया यज्ञसम्बद्धत्वरूपवेदलक्षणनिष्पत्यर्थं वेदत्रयोपवर्णितसोमयागसम्बन्धः पश्चात्काले सम्पादितो भवितुमर्हति । तस्मादेतत्काण्डं पश्चात्कालिकमवधार्यते । अपि चान्तिमस्य काण्डद्वयस्य नामापि नोपलभ्यतेऽथर्वप्रातिशाख्ये । तस्मात् तत्प्रातिशाख्योत्पत्तेरनन्तरमेवैतत् काण्डद्वयं संयोजितमिति व्यक्तमेव । द्वे गद्यवाक्ये अपहाय (४८, ४९) विंशे काण्डेऽस्मिन् कुन्तापसूक्तानि परं (१२७–१३६) अभिनवकृतो भागः, अन्यः सर्वोऽपि ऋग्वेदा-

दुपात्त । तत्र याः खलु बहुप्रदान् यजमानान् राजकुमारांश्च स्तोतुं प्रवृत्ताः, याश्च पुराणोपनिबद्धानां राजयोधादिस्तुतीनामवलम्बभूतास्तासामृग्वेदीयानां दानस्तुतीनामनुकुर्वन्ति कुन्तापसूक्तानि ॥

अथर्ववेदोऽयं यत्किञ्चिद्रूपापन्नः शतपथब्राह्मणान्तिमभागस्य (११–१३–१४) तैत्तिरीयब्राह्मणस्य च्छान्दोग्योपनिषदश्चोत्पत्तिकाले स्थित इत्ययमर्थोऽस्य तेष्वनुसन्धानादवगम्यते । महाभाष्यकाले त्वयं परं प्रतिष्ठां गत । अत एव भगवान् पतञ्जलिरथर्ववेदं प्रथमवेदत्वेनोदाहरति । अथर्वादिर्वेद इति चाह ॥

अथर्ववेद एव निर्दिश्यमानं प्राक्तनं तस्य नामधेयं 'अथर्वाङ्गिरसः' इति । तदेव नामधेयं भूर्जग्रन्थस्य चारम्भे लिखितम् । पदद्वयघटितोऽयं समस्तशब्दोऽथर्वाङ्गिरस्समाख्यं गोत्रद्वयमभिधत्ते । अत्र ब्लूंफील्डाचार्योऽन्यथा ब्रवीति यथा—अथर्वाङ्गिरस इत्यत्र अथर्वशब्दस्तद्वेदभाजं माङ्गलिकं, आङ्गिरसशब्दोऽभिचारपरममाङ्गलिकं च भागं परामृशतीति । तत्राथर्वेति नामैकदेशः पश्चात्काले समग्रस्यैवाथर्ववेदस्याभिधायकत्वेन परिणतः । उपलभ्यत एव बहुत्र ब्राह्मणग्रन्थेषु 'अथर्वाणः' इति माङ्गलिकांशपरतया प्रयोगः । 'अथर्वा' इत्येकवचनप्रयोगस्तु प्रथममुपनिषत्स्वारब्धः । 'आथर्वणानि' इति तद्धितान्तनपुंसकबहुवचनप्रयोग, तदीयसूक्तविवक्षयाऽथर्ववेदस्यैकोनविंशे काण्डे प्रयुक्त, समुपलभ्यते । ततः क्रमेण तस्य तस्मिन्नर्थे प्रयोगः साधारणीभूतः । 'अथर्ववेदः' इति

वेदपदघटितव्यवहारस्तु सूत्रग्रन्थेष्वेवप्राथम्येन कृतः न तु तत प्राक्तनेषु ग्रन्थेषु । अपि च सूत्रग्रन्थेष्वेव त्रयीतुलामधिरोपितो दृश्यते । अन्यदप्यधिगम्यते नामधेयद्वयमथर्ववेदस्य । तत्रैकं 'भृग्वाङ्गिरसः' इति । तच्चाथर्ववेदे यज्ञकाण्डे प्रयुक्तमुपलभ्यते । तत्र भृगवो नाम गोत्रान्तरीयाः । तेऽत्र अथर्वणां स्थाने समादिष्टाः । अन्यन्नामधेयं 'ब्रह्मवेदः' इति । तच्चाथर्वसम्बन्धिषु ग्रन्थेषु न प्रयुज्यते । किन्तु ऋग्वेदीयगृह्यसूत्रे क्वचिदुपात्तं दृश्यते ॥

अथर्ववेदोऽयं प्रतिपाद्यविषयस्वभाववैलक्षण्येन बहोः कालादनन्तरमेव वेदत्वेन प्रतिपन्नः । ऋग्वेदीयानामर्वाचीनतमानां सूक्तानामुत्पत्तिकालेऽपि नायं पृथग्ग्रन्थात्मना प्रपन्नः । यतो हि ऋग्वेदीये पुरुषसूक्ते यज्ञियास्त्रयो वेदाः परं ऋचः सामानि यजूंषीति नामग्राहं निर्दिश्यन्ते नत्वाथर्वणानि । न च वाच्यमथर्ववेदस्याभिचारक्रियाप्रतिपादकत्वेन निषिद्धकोटौ परिगणनात् तस्य यज्ञियवेदेऽनिर्देशः इति । कुत इति चेत्—न खलु भारतीयैरभिचारिकी सरणिरधर्म्यत्वेन परिगणितेत्यत्र किञ्चित् प्रमाणमुपलभ्यते । प्रत्युत ऋग्वेदः प्राधान्येन यज्ञदेवताः स्तुवन्नपि बहुत्र सूचयत्येव प्राक्कालेऽपि भारतीयगृह्याचाराणामभिचारक्रियाकरम्बितत्वम् । यजुर्वेदेऽपि तैत्तिरीयसंहितायामेकत्र केवलमथर्ववेदोऽयं 'आङ्गिरस'शब्देन वेदान्तरैः सह निर्दिष्टः । अन्यत्र सर्वत्रापि त्रयो वेदा एव केवलं निर्दिश्यन्ते । अथापि यजुर्वेदोऽथर्ववेदसरण्या सुदूरमाक्रान्तो दृश्यते । क्वचित् क्वचिदथर्ववेदीयाः शब्दा एव चोपलभ्यन्ते ।

नन्वित्थमभिचारक्रियाया सर्ववेदानुगतत्वे ऋग्यजुषयोरथर्ववेदस्य चैकलक्षणत्वापत्त्या मिथो भेदासिद्धिरिति चेन्नैतद्युक्तं अस्त्येव तयोरस्य च मिथो भेदः प्रधानव्यपदेशात् । तथा हि ऋग्यजुषयोः यज्ञक्रियैव प्राधान्येन प्रतिपाद्यते । अभिचारक्रियात्वप्राधान्येन । अतस्तयोर्यज्ञियत्वम् । अथर्ववेदे त्वयमर्थः प्रातिलोम्येन । अतस्तस्याभिचारिकत्वम । तन्निमित्तकस्तयोरस्य च भेदव्यपदेशः ॥

अथर्ववेदोऽध्यात्मानमेकत्र अथर्वाङ्गिरस'शब्देन अन्यत्र कचित् माङ्गलिकांशपरामर्शिना भेषज'शब्देन च वेदान्तरैः सह निर्दिशति । वेदान्तराणि तु पदे पदे प्रस्तौति । एतेन हि तावत्कालपर्यन्तं वेदान्तरावलम्बिनामथर्वानुयायिनां च मिथो नाभूद्वैमत्यमित्यवधार्यते ॥

इतो ब्राह्मणग्रन्थेषु चक्षुः पातयामः । अथर्ववेदमधिकृत्य का वार्ता तत्रेति विमृशामः । तत्र ऋग्वेदब्राह्मणेषु नामापि नोपलभ्यतेऽथर्ववेदस्य । तैत्तिरीयब्राह्मणे च तैत्तिरीयारण्यक इवायं केवलं द्विरनुसंहितः । शतपथब्राह्मणे तु शश्वदनुसन्धीयमानो यद्येव न वेदत्वं तथापि पूर्वापेक्षयाऽभ्यर्हिततरं स्थानमधिरूढो दृश्यते । अपि च तत्रैव ब्राह्मणग्रन्थे त्रयो वेदाः ऋक्, यजुः, सामेति पृथङ्नामनिर्देशेन वा त्रयी विद्येत्येवंरूपेण वा बहुत्र निर्दिश्यन्ते । किञ्च तत्रैव बहुषु वाक्येषु ते तत्र तत्रेतिहासपुराणगाथासूत्रोपनिषदादिभिः सह परिगण्यन्ते । तादृशस्थले नियमेनायमथर्ववेदो वेदत्रयानन्तरं निर्दिश्यमानश्चतुर्थवेदत्वेनाभिप्रेतस्तर्क्यते । अत एव तत्रेतिहास-

पुराणाद्यो व्युत्क्रमेणापि पठ्यन्ते. नन्वथर्ववेदश्चतुर्थस्थानाद्भ्रंशितः । उपनिषत्स्वप्ययैव स्थितिः प्रायेण । तत्राथर्वोपनिषत्सु पुराणेति-हासादिपरिगणनं विनाप्ययं त्रिभिर्वेदैः सह परिगण्यते इत्यस्ति कश्चिद्विशेषः । अथ श्रौतसूत्रेषु का वार्ताऽथर्ववेदस्य ? कात्यायनीये शुक्लयजुःश्रौतसूत्रे नामापि नोच्चार्यते तस्य । शाङ्खायनीयाश्वलायनीययोः ऋग्वेदश्रौतसूत्रयोः केवलमेकैकवारं निर्दिश्यते च ॥

इदमत्रावधेयं यत्— नायमथर्ववेदः श्रौतसूत्रग्रन्थेषु कुत्रा-प्यप्रामाण्यधिया तिरस्कृतः. नापि त्रयीधर्मावलम्बिभिरधर्म्यत्वेन निराकृतः' इति । परन्त्वयमीदृश सम्भव. स्वप्नेऽप्यतर्कितः कथन्तरामुपनतः ? मन्यामहे, यज्ञक्रियाभिचारक्रिययोर्वस्तुतो भेदसद्भावेऽपि तादृशभेदस्येदन्तया निर्देष्टुमशक्यत्वात् त्रयीकारै-रभिचारक्रियाऽपि धर्मत्वेन परिगृहीता । इत्थमथर्ववेदोऽपि तैः प्रामाणिकत्वेनाभ्युपगतः । अत एव शतपथब्राह्मणे यातुविद्या (अभिचारविद्या) यद्यपि भयहेतुत्वात् पैशाचत्वेनोक्ता तथापि यातुविदो विचक्षणाः वह्वृचसामान्यं बहुमताः । तत्र यथा ऋग्वेदेऽभिचारविषयका मन्त्राः परिमितास्तथाऽथर्ववेदीयमूलभागे यज्ञविषयका मन्त्राः केवलमानुषङ्गिकाः । तथा हि तत्र षष्ठे काण्डे द्वयो. सूक्तयो. (४७–४८) प्रत्यहं कर्तव्यं त्रैकालिकं सोमसवन प्रस्तूयते । अपि च क्वचित् क्वचिद्यज्ञकालाचरितदोषपरिहारायानु-ष्ठेयाः प्रायाश्चित्तीया इष्टयः प्रतिपाद्यन्ते । यथा षष्ठे काण्डे

११४ तमं सूक्तम् । एवं चाथर्वानुयायिनोऽपि जनास्तस्य वेदस्याधुनिकं यद्रूपं तत्सम्पत्तेः पूर्वं कांश्चिद्यज्ञानुपज्ञाय यथायथमन्वतिष्ठन्नित्यधिगम्यते । अथापि प्रथममत्यल्प एवासीदथर्ववेदे श्रौतक्रियाभागः । तदनु तत्सम्बन्धस्य वहुलीचिकीर्षया साक्षाद्यज्ञक्रियाप्रतिपादकैः ऋक्सूक्तैर्घटितं विंशं काण्डं पश्चात्काले तत्र संयोजितमिति प्रसङ्गवशान् पूर्वमेव निश्चप्रचमस्माभिः ॥

इत्थं च श्रौतसूत्रग्रन्थेष्वथर्ववेदस्य निर्देशाभावे तस्य श्रौतक्रियाप्रधानसम्बन्धाभाव एव हेतुः, न तु तस्य प्रामाण्यग्रहाभाव इत्यविवादम् । गृह्यसूत्रेषु पुनरभिचारस्यापि प्रतिपाद्यत्वान् तत्राथर्ववेदस्य संसर्गः प्रतीक्ष्यत एव । दृश्यते चायमर्थः कचित् कचित् । यद्यपि हि श्रौतसूत्रेष्विव गृह्यसूत्रेष्वपि भूयस्तया तत्तत्सम्बद्धेभ्य एव वेदेभ्यो मन्त्रा. परिगृहीतास्तथाप्यत्र विशेषतोऽथर्ववेदादप्यविकृता एकदेशविकृताश्च केचिन्मन्त्राः समुद्धृता उपलभ्यन्ते । एवमप्येते गृह्यसूत्रग्रन्थाः प्रकृतविषयविचारे न लेशतोऽप्युपकुर्वन्ति । यत्सत्यमत्र सर्वत्राप्यथर्ववेदस्य चतुर्थवेदत्वेन व्यवहारः श्रूयत एव । किन्तु तेन तेषामर्वाचीनतामात्रं व्यज्यते न त्वथर्ववेदीयचरित्रमार्गे कश्चिन् प्रकाशो वितन्यते ॥

लौकिकाचारप्रतिपादकेषु धर्मशास्त्रेष्वप्यथर्ववदीया आचाराः शिष्टत्वेनैवाभिमताः । यतो हि संसारिणामवश्यमाश्रयणीया वैद्यविद्या ज्योतिर्विद्या च व्यक्तमेवाथर्ववेदीया । तद्वदभिचारप्र-

योगेण शत्रूणां मारणोच्चाटनादौ प्रभविष्णुत्वेन प्रतीत आस्थानपुरोहितोऽप्यथर्ववेदविशारदो भवितुमर्हति । लौकिकव्यवहारप्रतिपादकेषु धर्मशास्त्रेष्वैदम्प्राथम्येन श्रूयतेऽथर्ववेदविषयिणी निन्दा । युक्तं चैतत् । यानि हि निषेद्धुमेते धर्मग्रन्थाः प्रवृत्तास्तान्येव हिंसाकर्माण्यथर्ववेदीया मन्त्रा उपदिशन्ति । तन्नैते धर्मग्रन्थाः सहन्ते । अथर्ववेदीयान् बहूनभिचारानेते घातुकान् मन्यन्ते । अत एवाथर्ववेदस्य जघन्यत्वं तदुपदिष्टानामाचाराणामधर्म्यत्वं च तेषूद्घोषितम् । अयमर्थो मुक्तकण्ठमापस्तम्बीये धर्मसूत्रे सिद्धान्तित । अपि चार्वाचीनायां विष्णुस्मृतावथर्ववेदीयं मारणाभिचारं प्रयुञ्जानाः सप्तविधानामुपांशुघातुकानामन्यतमत्वेन गणिता. । अपरं च भिषजो दैवज्ञाश्चाशिष्टत्वेनोक्ताः । मूलिकादिप्रयोगः सर्वात्मना निषिद्ध । अभिचारशापयोः घोरं तप एव प्रायश्चित्तत्वेन निश्चितम् । अथापि क्वचिद्विषयेऽथर्ववेदीया श्लाघाऽपि श्रूयते । तथा ह्यथर्ववेदो नाम शत्रूत्सादनोपयुक्तं परम्परोपसङ्क्रान्तं परमायुधं ब्राह्मणानामिति मनुधर्मशास्त्रे स्मृतम् ॥

महाभारते त्वथर्ववेदोऽयं वेदान्तरवत् परमप्रमाणत्वेनाभिष्टुतः । तत्र नियमेन वेदानां चतुष्टयमेवोद्घुष्यते । विष्णुब्रह्माणौ च तत्कर्तृत्वेन वर्णितौ । अपि चाथर्ववेदोऽपि तत्र पृथगेव भृशमभिनन्दितः । तदुपदिश्यमानाः क्रियाश्चापि धर्मत्वेनैवास्थिताः न त्वधर्मत्वेन विगीताः ॥

अनन्तश्च पुराणानि न केवल वेदानां चतुष्ट्वमेवामनन्ति किन्त्वाभिचारिकग्रन्थसमुदायोपवर्णितमथर्ववेदस्य समुत्कृष्टं स्थान-मनुमन्यन्ते च । तत्रान्यतमे विष्णुपुराणे तस्य ब्रह्मनाम्ना चतुर्थेन ऋत्विजा सह सम्बन्धः प्रतिपादितः ॥

अथापि तावदथर्ववेदमधिकृत्य कश्चिदधिक्षेपोऽपि धर्मसूत्र-कालादारभ्यो दृश्यते । दाक्षिणात्या ब्राह्मणाः सम्प्रत्यपि चतुर्थ-वेदस्य नानुमन्यन्ते प्रामाण्यम् अनादित्वमप्यस्य नाङ्गीकुर्वन्तीति बर्नेलः प्राह । लौकिकसंस्कृतग्रन्थेष्वथर्ववेदीयब्राह्मणादिग्रन्थेषु चोपलभ्यमानैरथर्ववेदप्रामाण्यसमर्थनार्थकैर्वचनैरप्ययमेवार्थो ऽध्यव-सीयते । अथर्वानुयायिनो हि ब्राह्मणादयो ग्रन्थाः न केवलमथ-र्ववेदसहभावेनैव सर्वत्र वेदान निर्दिशन्ति, किन्तु तं वेदानामग्रे कीर्तयन्ति च । अपि चाथर्ववेदस्य ऋत्विकसम्बन्धाभावन्यूनतां परिजिहीर्षन्तस्ते तस्य ब्रह्मनाम्ना ऋत्विजा सह सम्बन्धं च सम-र्थयन्ति । यो हि ऋत्विक् त्रयीदृष्ट्या होत्रादिवद् एकवेदसम्बन्ध-रहितः त्रयीविद्यापारगः त्रयीमन्त्रविनियोगाभिज्ञश्च भवन् यज्ञक्रि-याध्यक्षत्वेन विवक्षितः । तमिमं ब्रह्माणं वेदसम्बन्धरहितं मत्वा एते ब्राह्मणादयो ग्रन्थास्तस्याथर्वसम्बन्धमकल्पयन् । सोऽयं ब्रह्मा सन्दृष्टब्रह्मपारः समधिगतदेवतातत्त्वः परिशीलिताखिलक्रियाकलापश्च सर्वर्त्विजां परिवृढत्वेनाभिमत. । अत एव गोपथब्राह्मणेऽथर्व-वेदस्य सारभूतब्रह्मात्मकत्वेन सर्वोत्कृष्टत्वं प्रतिपाद्य तस्य 'ब्रह्मवेद' व्यपदेशः कृत इत्याहुः । वस्तुतस्तु व्यपदेशोऽयमथर्ववेदे ब्रह्मशब्दस्य

प्राचुर्येणोपलम्भात् संहितान्तरातिरेकेण तत्र ब्रह्मविद्यायाः प्रतिपादनाद्वा सिद्धः । वेदान्तरीयेषु ब्राह्मणादिग्रन्थेषु नैवमथर्ववेदस्य ब्रह्मर्त्विजा सम्बन्धः प्रतिपादित । प्रत्युत तत्र केषुचिद्ग्रन्थेषु यावदपेक्षितज्ञानवान् यः कश्चिद्वोपन्नो ब्रह्मा भवितुमर्हतीत्यभिहितम् । अपि चाथर्ववेदीया ब्राह्मणग्रन्थाः पुरोहितेनाथर्वविदैव भाव्यमिति साटोपमुदीरयन्ति । तद्वचनानि चानुसृत्य राजानः सर्वेऽभिचारक्रियानिपुणानथर्वपण्डितानेव पुरोहितपदे न्ययुञ्जत ॥

अथर्ववेदे सुदुर्लभान्येव तदुत्पत्तिदेशनिर्णायकानि लिङ्गानि । अतोऽथर्ववेदीयानि सूक्तानि कस्मिन् देशे प्रादुर्भूतानीति निर्णयो दुष्कर एव । यत्सत्यमथर्ववेदीयमूलभागे क्वचित् (५–२२) पश्चिमोत्तरभागावस्थिता गन्धारा., मूजवत . महावृषा., बह्लीका . तथा पौरस्त्यभागावस्थिताः मगधाः अङ्गाश्च गृहीतनामानो दृश्यन्ते । किन्तु तावन्मात्रेण तदुत्पत्तिदेशो निश्चेतुमशक्य एव ॥

ज्योतिर्विद्यासम्बन्धिनोऽपि केचिद्विषया अथर्ववेदे प्रतिपाद्यन्ते । यत्तु तत्रैकोनविंशे काण्डे ज्योतिषां परिगणनं कृतं तत्र कतिपयानि ज्योतिर्नामानि तैत्तिरीयसंहितादृष्टेभ्योऽत्यन्तं भिद्यमानान्यर्वाचीनतामभिव्यञ्जयन्ति । तदेतद्वाक्यं पश्चात्काले संयोजितं प्रतिभाति ॥

अथर्ववेदीया भाषारीतिः शब्दशास्त्रदृशा विमृश्यमाना ऋग्वेदीयभाषारीतेरर्वाचीनतरा ब्राह्मणग्रन्थभाषारीतेः प्राचीनतरा

च विभाव्यते । अपि च संहितान्तरेषु प्रसक्त्यभावादप्रयुक्ताः सर्वसाधारणाः केचिच्छब्दा अथर्ववेदेऽस्मिन्नुपलभ्यन्ते ॥

अत्र केषाञ्चित् सूक्तानां पूर्वमेवोत्पन्नत्वेऽप्यथर्ववेदोऽयमृग्वेदब्राह्मणग्रन्थानामुत्पत्तिकालं यावन्न संहितात्मतां प्रापद्यतेत्यसन्देहम् ॥

इतः किञ्चिदथर्ववेदप्रतिपाद्यान् विषयान् निरूपयामः । अत्रत्या आभिचारिका मन्त्राः प्रायेण विविधानां रोगाणां रोगोत्पादकत्वेन तर्कितानां भूतप्रेतपिशाचापस्मारब्रह्मराक्षसादीनां च निवारणार्थमुपयुज्यन्ते । तथा हि—ज्वर-श्वित्र-कामला-जलोदर-गण्डमाला- राजयक्ष्म- नेत्ररोग-शिरोरोग-हृद्रोगादिविविधामयोपशान्त्यर्थकाः, शस्त्राद्यभिघातजव्रण-सर्पादिविषबाधा-चित्तोन्मादादिपीडानिवारणार्थकाश्च मन्त्राः समुपलभ्यन्तेऽथर्ववेदे । मन्त्राश्चैते तत्तद्भेषजौषधिपुरस्सरं प्रयुज्यन्ते । अतश्चाथर्ववेदोऽयं भारतवर्षीयवैद्यविद्यायाः प्रथमोत्पत्तिस्थानमित्यवगन्तव्यम् ॥

तत्र कासोपशान्त्यर्थकानां मध्यान्मन्त्रत्रयमत्रोदाह्रियते (६-१०५—

यथा मनो॑ मनस्के॒तैः
 प॑रा॒पत॑त्याशु॒मत् ।

एवा त्वं कासे प्रपत
मनसो नु प्रवाय्यम् ॥

यथा बाण सुसंशितः
परापतत्याशुमत् ।
एवा त्वं कासे प्रपत
पृथिव्या अनु संवतम् ॥

यथा सूर्यस्य रश्मयः
परापतन्त्याशुमत् ।
एवा त्वं कासे प्रपत
समुद्रस्यानु विक्षरम् ॥

अयमधस्तनो मन्त्रः कृष्णवर्णौषधिप्रयोगपूर्वकं श्वित्रापनोदनायोपयुज्यमान —

नक्तं जातास्योषधे
रामे कृष्णे असिक्नि च ।
इदं रजनि रजय
किलासं पलितं च यत् ॥ (१–२३–१)

भूतप्रेतपिशाचराक्षसादीनां, अभिचारक्रियाकारिणां, वैरिणां च प्रतिक्रियार्थं बहवोऽभिचाराः प्रवृत्ताः । अधस्तनं मन्त्रद्वयं

यथाक्रममभिचारकारिणो वैरिणश्चोद्दिश्य प्रयुक्तमभिचारमाह—

परि णो वृङ्धि शपथ
हृदमग्निरिवा दहन् ।
शप्तारमत्र नो जहि
दिवो वृक्षमिवाशनिः ॥ (६–३७–२)

यथा सूर्यो नक्षत्राणा-
मुद्यंस्तेजांस्याददे ।
एवा स्त्रीणां च पुंसां च
द्विषतां वर्च आ ददे ॥ (७–१३–१)

अनेकान्यभिचारकर्माणि ब्रह्मद्वेषिणो ब्रह्मस्वापहारिणश्चोद्दिश्य प्रवृत्तानि । अधस्तनो मन्त्रस्तादृशां पापाचाराणामनिष्टापादनाय प्रयुक्तः—

येन मृतं स्नपयन्ति
श्मश्रूणि येनोन्दते ।
तं वै ब्रह्मज्य ते देवा
अपां भागमधारयन् ॥ (५–१९–१४)

एवं बहवोऽभिचारा सप्रभावविविधौषधिचूर्णानुलेपनपूर्वकमनुष्ठेये स्त्रीवशीकरणकर्मणि प्रयुज्यन्ते । तत्र केचित् प्रतिस्पर्द्धिनां

हिंसार्थं प्रयुज्यमानत्वात् प्रतिपक्षाभिचारसमानस्वभावा । अधस्ता-दुदाह्रियमाणः प्रतिस्पर्धिहिंसां विना स्त्रीवशीकरणार्थं प्रवृत्तः—

यथेमे द्यावापृथिवी
सद्यः पर्येति सूर्यः ।
एवा पर्येमि ते मनो
यथा मां कामिन्यसो
यथा मन्नापगा असः ॥ (६–८–३)

आधीपर्णां कामशल्या
मिषुं सङ्कल्पकुल्मलाम् ।
तां सुसन्नतां कृत्वा
कामो विध्यतु त्वा हृदि ॥ (३–२५–२)

अथर्ववेदीये माङ्गलिके भागे दीर्घायुरारोग्यलाभाय रोग-मरणाभावाय च मन्त्रप्रयोगः श्रूयते—

यदि क्षितायुर्यदि वा परेतो
यदि मृत्योरन्तिकं नीत एव ।
तमाहरामि निर्ऋतेरुपस्था-
दस्पार्शमेनं शतशारदाय ॥ (३–११–२)

उत्क्रामातः पुरुष मावं
पत्था मृत्योः पड्वीशमवमुञ्चमानः ।
मा च्छित्था अस्माल्लोका-
दग्नेः सूर्यस्य सन्दृशः ॥ (८–१–४)

अन्यानि कानिचित् सूक्तानि भयभीतैः विपद्ग्रस्तैः गृहक्षेत्रा-भिवृद्धिकामैः गोकामैः वाणिज्यलाभकामैः द्यूतविजयकामैश्च प्रयोक्तव्यान्युपलभ्यन्ते । अधस्तनं मन्त्रद्वयं द्यूतविजयकर्मणि प्रयोक्तव्यम्—

यथा वृक्षमशनि-
र्विश्वाहा हन्त्यप्रति ।
एवाहमद्य कितवा-
नक्षैर्बध्यासमप्रति ॥ (७–५२–१)

अक्षाः फलवतीं द्युवं
दत्त गां क्षीरिणीमिव ।
सं मा कृतस्य धारया
धनुः स्नाव्नेव नह्यत ॥ (७–५२–९)

अन्यानि कानिचित् सूक्तानि जनेष्वैकमत्यसम्पत्त्यै, क्रोध-कलहवैमत्योपशान्त्यै, सभाविजयावाप्त्यै च प्रयोक्तव्यानि । अय-मुदाह्रियमाणो मन्त्रः सभाविजयकामैः प्रयोक्तव्यः—

विद्म ते सभे नाम
नरिष्टा नाम वा असि ।
ये ते के च सभासद-
स्ते मे सन्तु सवाचसः ॥ (७–१२–२)

कतिपयानि सूक्तानि यज्ञक्रियालोपप्रायश्चित्तपराणि परिवेदनपापक्षयार्थानि दुश्शकुनदुस्स्वप्नाद्यशुभफलनिवारणार्थानि च समुपलभ्यन्ते—

यदि जाग्रद् यदि स्वप
न्नेन एनस्योकरम् ।
भूतं मा तस्माद् भव्यं च
द्रुपदादिव मुञ्चताम् ॥ (६–११५–२)

मन्त्रत्रयात्मकमत्यल्पं किमपि सूक्तं (६–१२०) पापक्षयार्थकम् । तस्यायमन्तिमो मन्त्रः—

यत्रा सुहार्दः सुकृतो मदन्ति
विहाय रोगं तन्व१ः स्वायाः ।
अश्लोणा अङ्गैरह्रुता स्वर्गे
तत्र पश्येम पितरौ च पुत्रान् ॥

अन्यानि कतिपयानि सूक्तानि राजवरणावसरे राज्यश्रीलिप्सुभिः नष्टराज्यप्रतीप्सुभिः श्रीकामैः सङ्ग्रामविजयकामैश्च

राजभिः प्रयोक्तव्यानि । अधस्तनो मन्त्रः शत्रुत्रासनार्थकः—

उत्तिष्ठत सन्नह्यध्व
मुदाराः केतुभिः सह ।
सर्पा इतरजना रक्षां-
स्यमित्राननुधावत ॥ (११–१२–१)

अयं मन्त्रः परसेनात्रासनकर्मणि दुन्दुभिध्वननपूर्वकं प्रयोक्तव्यः—

यथा श्येनात् पतत्रिणः संविजन्ते
अहर्दिवि सिंहस्य स्तनथोर्यथा ।
एवा त्वं दुन्दुभेऽमित्रानभि
क्रन्द प्र त्रासयाथो चित्तानि मोहय ॥

विश्वोत्पत्तिवर्णनपराणां ब्रह्मविद्याप्रतिपादनपराणां च सूक्तानां मध्ये त्रिषष्ट्या मन्त्रैर्घटितमतिदीर्घं पृथिवीसूक्तं चारुतमम् (१२–१) । तच्चारुतापरीक्षार्थं स्थालीपुलाकन्यायेन मन्त्रद्वय-मुदाहरामः—

यस्यां गायन्ति नृत्यन्ति भूम्यां मर्त्या व्यैलबाः
युध्यन्ते यस्यामाक्रन्दो यस्यां वदति दुन्दुभिः ।

सा नो भूमिः प्रणुदतां सपत्ना-
नसपत्नं मा पृथिवी कृणोतु ॥

निधिं बिभ्रती बहुधा गुहा वसु
मणिं हिरण्यं पृथिवी ददातु मे ।
वसूनि नो वसुदा रासमाना
देवी दधातु सुमनस्यमाना ॥

त्रयोदशे काण्डे सूक्तचतुष्टये रोहितो विश्वोत्पादकत्वेन वर्ण्यते । अत्र रोहितपदेनोद्यन् सूर्यो विवक्षित । सूर्योऽन्यत्र क्वचिन (११–५) ब्रह्मचारित्वेन वर्णितः । अन्यत्र सूक्तेषु प्राणः (११–४), कामः (९–२), कालश्च (१९–५३. ५४), सर्वजगन्निदानत्वेन स्तूयन्ते । एकस्मिन् सूक्ते (११–७) उच्छिष्ट-मपि परमात्मत्वेन कीर्त्यते । सूक्तमिदं ब्राह्मणग्रन्थभाषाशैल्या निबद्धम् । छन्दोबन्धः परं विशिष्यते ॥

इदमन्यद् वरुणदेवताकं किमपि सूक्तं (४–१६) अविमृश्य प्रकृतविषयमुपसंहरन्तो वयमविमृश्यकारिणः स्याम । यतो ह्येकस्मिन् सूक्तेऽन्तिमं मन्त्रद्वयं परं पाशेन शत्रोर्बन्धनार्थेऽभिचार-कर्मण्युपयुक्तमथर्वच्छायामनुधावति । अन्यत् सर्वमपि मन्त्रजातं चमत्कारिण्या सरण्या वरुणस्य सार्वज्ञ्यं वर्णयदनुपमां सुषमां बिभर्ति । वेदान्तरेष्वपि दुर्लभमेवैतादृशं सूक्तम् । तन्मध्या-ल्लोकातिशायिरमणीयार्थप्रतिपादकं मन्त्रत्रयं निदर्शयामः —

उतेयं भूमिर्वरुणस्य राज्ञ
उतासौ द्यौर्बृहती दूरे अन्ता ।
उतो समुद्रौ वरुणस्य कुक्षी
उतास्मिन्नल्प उदके निलीनः ॥

उत यो द्यामतिसर्पात् परस्ता-
न्न स मुच्यातै वरुणस्य राज्ञः ।
दिव स्पशः प्रचरन्तीदमस्य
सहस्राक्षा अति पश्यन्ति भूमिम् ॥

सर्वं तद्राजा वरुणो विचष्टे
यदन्तरा रोदसी यत्परस्तात् ।
सङ्ख्याता अस्य निमिषो जनाना-
मक्षानिव श्वघ्नी निमिनोति तानि ॥



## ॥ अष्टमोऽध्यायः ॥

### ब्राह्मणानि

(क्रिस्तोः पूर्वं ८००–५००)

अथ वैदिकसूक्ताविर्भावरङ्गसमाप्तेरनन्तरमारब्धो द्वितीयरङ्गः प्रथमरङ्गीयसाहितीमार्गाद्विलक्षणामन्यामेव साहितीसरणिमाश्रित्य तत्वविचारपरान् ब्राह्मणग्रन्थानाविर्भावयामास । ते च प्रायेण गद्यमयाः प्राधान्येन यज्ञक्रियाविषयकाश्च । परिशीलिताखिलयज्ञ-कर्मणां विदुषामेव तत्राधिकारित्वमभिप्रेत्य ऋषयस्तत्र दुर्बोधानंशान् परं प्रतिपादयन्ति, न तु कर्मणां समग्रं स्वरूपं प्रदर्शयन्ति । अत-स्तत्र कर्मस्वरूपजिज्ञासया प्रवर्तमाना बालाः क्लिश्येरन् । तेषु ब्राह्मणग्रन्थेषु विध्यर्थवादोपनिषदाख्यास्त्रयो भागा. सङ्घटिताः । तत्र विधिशब्देन कर्मविधायकानि. अर्थवादशब्देन प्ररोचनापराणि, उपनिषच्छब्देन विवरणपराणि इतिहासात्मकानि संवादरूपाणि तत्वविचारपराणि च प्रकरणानि विवक्षितानि । ते चैते ब्राह्मण-ग्रन्था. यद्यप्यद्यत्वे बहुसङ्ख्या समुपलभ्यन्ते तथापि केचित् पुरैवोत्पन्नविनष्टास्तर्क्यन्ते । यतो ह्यस्माभिरदृष्टाश्रुतानां ब्राह्मण-ग्रन्थानां नामग्रहणं तदीयवाक्यानुसन्धानं च तत्र तत्रोपलभ्यते बहुषु ग्रन्थेषु । यस्मिन् काले भारतीयैः कर्मानुष्ठानैकनिरतैरभूयत तस्मिन् काल इमे ब्राह्मणग्रन्थाः प्रादुर्भूता. । यतो ह्येते ग्रन्थाः कर्ममार्गानेव निर्दिशन्तः कर्मणामेव महिमानमुदीरयन्तः कर्मणा-

मेवोत्पत्तिप्रयोजने निरूपयन्तश्च कर्ममात्रं परामृशन्ति । एवञ्जातीयकानभिन्नरूपान् ग्रन्थानाविर्भावयन्नयं ब्राह्मणरङ्गो दीर्घकालव्यापी बभूव । यतो हि ब्राह्मणग्रन्थानां सर्वेषां सजातीयत्वेऽपि तेषु केषाञ्चिन् कालभेदः समुद्भासते । तथा हि यजुर्वेदीयगद्यभागोत्पत्तेः परं पञ्चविंशं तैत्तिरीयं चेति ब्राह्मणद्वयमितरब्राह्मणग्रन्थापेक्षया प्रागुत्पन्नमिति तदीयशब्देषु वाक्यग्रथनरीतौ च प्राचीनताप्रतिभासादनुमीयते । तत्र तैत्तिरीयब्राह्मणेऽनुभूयमानः पञ्चविंशब्राह्मणे भूतपूर्वत्वेन ज्ञायमानश्च स्वरसम्प्रदायोऽप्यमुमेवार्थं स्थिरयति । जैमिनीयब्राह्मणं कौषीतकिब्राह्मणमैतरेयब्राह्मणं च ततः पश्चादुत्पन्नानि । भाषास्वारस्यानुसन्धाने त्वेतेषां त्रयाणामपि क्रमिकः कालभेदो व्यक्तीभवति । शतपथब्राह्मणमभिनवार्थगर्भितत्वात् ततोऽर्वाचीनम् । अपि चेदम्प्रथमतयाऽत्र लिटः परोक्षार्थे प्रयोगारम्भोऽस्य ऐतरेयब्राह्मणादर्वाचीनतरत्वं बोधयति । एतदीया भाषागतिरपि पूर्वोक्तब्राह्मणभाषापेक्षया लब्धाधिकसंस्कारा समनुभूयते ॥

ब्राह्मणग्रन्थाः प्रायेण ऋग्वेदापेक्षया शब्ददारिद्र्यं भजन्ति । अथापि लेडाख्यो लकारः प्राक्तनाः सर्वे तुमुन्नर्थकाः प्रत्ययाश्च प्राचुर्येण प्रयुक्ताः । तदीया वाक्यशैली ऋग्वेदमतिक्रम्य भारतवर्षीयवाक्यरचनायाः प्रथमारम्भरीतिमुदाहरति । यत्सत्यमृग्वेदः प्राचीनतमो ग्रन्थः, अथापि तदीयभाषागतेः पद्यबन्धानुगुण्येन अन्याथितत्वात् न तेनोदाहर्तुं शक्या प्राथमिकी भाषारीतिः । ये

तत्र ब्राह्मणग्रन्थेषु गद्यभागानां मध्ये विप्रकीर्णतया पद्यभागाः समुपलभ्यन्ते ते स्वगतैरेव स्वभावविशेषैः स्वेषां प्राचीनत्वमववारयन्ति । ब्राह्मणग्रन्थानामेषां सगर्भ्य एतद्वर्गीयः सविशेषस्मरणार्हो ग्रन्थ कश्चिन सुपर्णाध्यायः । स च वैदिकसूक्ताविर्भावरङ्गसमाप्तेः परं वैदिकसूक्तच्छायानुकारेण विरचितः । यद्यपि तत्र बाहुल्येन प्राचीनानां प्रयोगविशेषाणां स्वरसम्प्रदायस्य च दर्शनात् तस्य प्राचीनत्वं प्रतीयते तथापि स एव ग्रन्थः सर्वात्मना वेदभाषारीतिमनुकर्तुमशक्नुवानः अर्वाचीनतैकसुलभान् स्वभावविशेषाननुवर्तमानश्च आत्मनः कृत्रिमतामर्वाचीनतां च व्यनक्ति ॥

तस्मिन्नेव रङ्गे ततः पश्चादारण्यकान्युत्पन्नानि । ब्राह्मणग्रन्थानन्तरभावित्वमेषां तत्तद्ब्राह्मणग्रन्थेष्वन्तावयवतया सङ्घटनात् सविशेषमीश्वरास्तित्ववादपुरस्करणाच्च निश्चीयते । कर्मातिगानां वानप्रस्थाश्रमिणामेव तदध्ययनाधिकारात् तान्यारण्यकशब्देनाभिधीयन्ते । ओल्डन् बर्गाचार्यस्तु तेषामतिपवित्रत्वादरण्यैकान्तेऽध्येतव्यतया तथा व्यपदेश इत्यभिप्रैति ॥

ततः पश्चादुपनिषदः समुत्पन्नाः । ताश्च प्रायेण तत्तदारण्यकानां मध्येऽन्ते वा तदङ्गतया गर्भीकृताः । उपनिषच्छब्दस्य— उप समीपे निषदनमवस्थानमित्यवयवार्थः । स चादावेव एकान्तावस्थानरूपेऽर्थे रूढः 'पारमार्थिकतत्त्व'रूपार्थलक्षकोऽभूत् । अत एवैता उपनिषद. शिक्षणावसाने विशिष्टत्वेन गृहीतेभ्यः परिमितेभ्यः

शिष्येभ्यः परमुपदिष्टाः । अत्राध्यात्मतत्त्वविचारमात्रस्य विषयी-करणादेतासां ब्राह्मणरङ्गावमानकालोत्पन्नत्वेऽविवादः । अत एवासां वेदान्तशब्देन व्यपदेशः । सोऽयं वेदान्तशब्दः पश्चात्काले वेदोद्देशपरतया व्याख्यातः । ता एता उपनिषदः श्रुतित्वेनाभ्युप-गताः । तदनन्तरोत्पन्नाः सूत्रग्रन्थास्तु स्मृतित्वेन । तत्र प्राचीन-तराणामुपनिषदां प्रतिपाद्यो विषयः केवला अध्यात्मविद्यैव । इद-मेकमेव वस्तु बहुधा प्रतिपद्यमानैः तत्तच्छाखीयैः तत्तदुपनिषदः प्रणीताः । यज्ञक्रियाविषये यथा ब्राह्मणग्रन्थाः तथैवाध्यात्मविद्या-विषयेऽमी उपनिषद्ग्रन्थाः परमप्रमाणान्यभूवन ॥

आरण्यकानामुपनिषदां च भाषागतिः प्रायेण लौकिकसंस्कृ-तभाषायाः तुल्यरूपा । तत्र प्राचीनतरा उपनिषदः परं सूत्र-ब्राह्मणयोरन्तरालवर्तिनीं किञ्चिद्विलक्षणां रीतिमनुधावन्ति ॥

ऋग्वेदसम्बन्धिनोः द्वयोर्ब्राह्मणयोरैतरेयं प्रधानतमम् । अद्यो-पलभ्यमानमैतरेयब्राह्मणं चत्वारिंशदध्यायात्मकम् । ते च पञ्चि-काष्टकत्वेन संविभक्ताः । तत्रान्तिमा दशाध्यायी पश्चात्काले संयोजितेति तदभिव्यज्यमानैरेव लिङ्गैरवधार्यते । अपि चैतद्ब्राह्म-णगतविषयानुवादपरे शाङ्खायनब्राह्मणे उक्तदशाध्यायीप्रतिपाद्यानां विषयाणामनुपादानं प्रत्युत शाङ्खायनसूत्रे तदुपादानं चास्मदुक्ति मुपष्टम्भयति । अपि चात्र अन्तिमे पञ्चिकात्रये लिटः परोक्षार्थे प्रयोगो दृश्यते । आदिमे पञ्चिकापञ्चके तु प्राचीनब्राह्मणग्रन्थेष्विव

तस्य वर्तमानवाचकताशक्तिरेवानुभूयते । एतेन ह्यन्तिमं पञ्चिका-त्रयमितरापेक्षया अर्वाचीनतरमिति व्यक्तमेव । अपि च ब्राह्मण-ग्रन्थस्यास्य प्रधानभूतो भागः सोमयागविषयकः । तथा ह्यादिमे-ऽध्यायषोडशकेऽग्निष्टोमाख्य एकाहसाध्यः सोमयागः तदनन्तरे-ऽध्यायद्वये षष्ट्युत्तरत्रिशताहसाध्यं गवामयनं, तदनन्तरेऽध्यायषट्के द्वादशाहश्च प्रतिपाद्यते । तदनन्तरेष्वष्टस्वध्यायेषु आनुषङ्गिका अग्निहोत्रादयो वर्णिताः । तस्मात् तेषां परिशिष्टरूपत्वं निश्चीयते । अवशिष्टायामष्टाध्याय्यां राजकीयपट्टाभिषेकमहोत्सव तत्र राज-पुरोहितानामधिकारश्च प्रतिपाद्यते । तेन तेषामर्वाचीनत्वं च व्यज्यते ॥

ऋग्वेदीयमन्यद् ब्राह्मणं शाङ्खायनब्राह्मणापरनामधेयं कौषी-तकिब्राह्मणम् । तच्च त्रिंशदध्यायात्मकम् । ऐतरेयब्राह्मणस्य प्रधानभागप्रतिपादिता एव विषया प्रायेणात्राप्युपपाद्यन्ते । किन्तु किञ्चिदिव विस्तरेण । तथा ह्यत्र प्रथममग्न्याधानं ततोऽग्निहोत्रं ततो दर्शपूर्णमासौ पश्चात् चातुर्मास्यानि चोपक्रमाध्यायेषु प्रतिपा-द्यन्ते । इत्थमत्रापि सोमयाग एव प्राधान्येन विषयीकृतः । ब्राह्मणेऽस्मिन् रमणीयया सरण्या विषयाणां व्यवस्थापनाद् ऐतरेय-ब्राह्मणगतं यत् प्राथमिकं पञ्चिकापञ्चकं तदपेक्षयाऽस्य पश्चा-त्कालिकत्वं निश्चीयते । नायमर्थः कणिकयाऽपि भाषारीतौ भासते । वेबराचार्यस्तु—अत्र वाक्य एकस्मिन् ईशानमहादेव-शब्दौ पश्चात्कालप्रसिद्धस्य शिवस्य पर्यायतया प्रयुक्तौ पश्यन्

तादृशप्रयोगविशेषवटिताः सर्वे ग्रन्थाः समानकालिका भवितु-र्महन्तीति मत्वाऽस्य ब्राह्मणस्य शुक्लयजुर्वेदीयानामर्वाचीनकाण्डानां उक्तप्रयोगोपलक्षितानां शतपथब्राह्मणीयभागानां च समानकालो-त्पन्नत्वं सङ्गिरते ॥

ब्राह्मणग्रन्थयोरनयोरुत्पत्तिदेशनिर्णये लिङ्गानि दुर्लभान्येव । अथाप्यैतरेयब्राह्मणगतस्य भारतवर्षीयवर्गभेदपरिगणनाप्रकरणस्या-नुसन्धाने ब्राह्मणमिदं यत्र यज्ञकर्माणि निरन्तरायं व्यजृम्भन्त; यत्र च सूक्तानां सङ्कलनेन संहितापाठः सम्पादितः तस्मिन् सर्व-धर्मधाम्नि कुरुपञ्चालदेशे प्रादुर्भूतमवधार्यते । कौषीतकिब्राह्मणं तु कुत्रोत्पन्नमिति निर्णयो दुष्कर एव । तस्मादेव ब्राह्मणादेताव-दधिगम्यते यत्—उत्तरे भारतवर्षे विशेषतो जनैः भाषाभ्यासः कृतः, तत. समावृता विद्वांसो भाषाविषये प्रामाणिकत्वेन च स्वीकृता इति ॥

ब्राह्मणग्रन्थसमुदायेऽत्र विमर्शकानां परमादरस्तदुपवर्णित-पुरावृत्ताख्यानांशे न तु कर्मभागे । तत्र शुनःशेपाख्यानमतिरमणीयं विस्तीर्णं च । तच्चैतरेयब्राह्मणे सप्तमपञ्चिकायाः तृतीयाध्याये निबद्धम् । तद्यथानुश्रूयते—अपुत्रो राजा हरिश्चन्द्रः प्रतिजज्ञे यदि मे पुत्रो जायते तेन वरुणं यक्ष्यामीति । वरुणस्य प्रसादात् तस्य जज्ञे रोहिताख्यः पुत्रः । राजा स्वप्रतिज्ञामकुर्वाणः काल-मनयत् । क्रमेण यदा बालो नवयौवने पदं चकार तदा तस्य

पिता वरुणेन कृतनिर्बन्धो यज्ञमारभत । रोहितस्त्वात्मानां परित्रायमाणः अरण्यं जगाम । गत्वा च षड्वर्षाणि वन एव चचार । तदा वरुणः कुपितः तस्य पितरं जलोदरव्याधिना पीडयामास । अत्रान्तरेऽशनायाबाधितः कश्चिदकिञ्चनो ब्राह्मणः समेत्य शताय गोभ्यः शुनःशेपनामानमात्मनः पुत्रं रोहितप्रतिनिधित्वेन बलीकर्तुं दास्यामीत्यवोचत् । वरुणोऽपि प्रीतः भूयान् वै ब्राह्मणः क्षत्रियादिति ब्रुवन् ब्राह्मणकुमारस्य प्रतिनिधीकरणमन्वमन्यत । तथा परिक्रीतः शुनःशेपो यूपे बद्धः । ततः स ब्राह्मणकुमारः क्रमेण प्रजापत्यादिदेवतास्तुष्टाव । विविधैः स्तोत्रैः भूयो भूयः प्राञ्जलौ स्तुवति तस्मिन् स्वयमेव वरुणात् पाशः स्रस्तः । राज्ञो जठरामयश्चोपशान्तः । इत्थं शुनःशेपो मोचितः । राजा हरिश्चन्द्रश्चोल्लाघतां गतः ॥

ऐतरेयब्राह्मणाश्रिता गद्यसरणिः अपक्वा असुन्दरा विषमा लुप्तपदा च । ब्राह्मणग्रन्थारूढानां पद्यभागानां स्वरूपावगमाय शुनःशेपाख्यानात् कतिपयानि पद्यानुदाह्रियन्ते । तानि च हरिश्चन्द्राय राज्ञे पुत्रोत्पत्तेः प्रयोजनानि वर्णयता महर्षिणा नारदेन कथितानि—

ऋणमस्मिम् सन्नयति
अमृतत्वं च गच्छति ।

पिता पुत्रस्य जातस्य
पश्येच्चेज्जीवतो मुखम् ॥

यावन्तः पृथिव्यां भोगा
यावन्तो जातवेदसि ।
यावन्तो अप्सु प्राणिनां
भूयान् पुत्रे पितुस्ततः ॥

शश्वत् पुत्रेण पितरो
अत्यायन् बहुलं तमः ।
आत्मा हि जज्ञ आत्मनः
स इरावत्यतितारिणी ॥

अन्नं ह प्राणः शरणं ह वासो
रूपं हिरण्यं पशवो विवाहाः ।
सखा ह जाया कृपणं ह दुहिता
ज्योतिर्ह पुत्रः परमे व्योमन् ॥

ऐतरेयब्राह्मणान्तर्गतः कश्चित् भागः ऐतरेयारण्यकम् । तत्र पञ्च काण्डाः अष्टादशाध्यायाश्च समुपलभ्यन्ते । तत्रान्तिमं काण्डद्वयं सूत्रशैल्या ग्रथितत्वात् सूत्रग्रन्थसजातीयम् । प्राथमिके काण्डत्रये विभिन्नविषयकाणि चत्वारि प्रकरणानि सङ्घटितानि ।

तथा हि प्राथमिके काण्डे विविधानां सोमयागानां प्रतिपादनेन केवलः क्रियामार्गः समाश्रितः । तदिदमादिमं प्रकरणम् । अथ द्वितीयकाण्डस्य प्राथमिकेऽध्यायत्रये प्राणपुरुषादिशब्दाभिधेयस्य विश्वात्मनः स्वरूपविचारद्वारा ईश्वरास्तित्ववादः समुपस्थापितः । अयमंशो विषयस्वाभाव्यादुपनिषत्सजातीयः । अनुवर्णिताश्चात्रत्या प्रधानभूता बहवो विषयाः कौषीतकोपनिषदि बहुत्र । तदेतत् द्वितीयं प्रकरणम् । द्वितीयकाण्डस्यैवावशिष्टमध्यायचतुष्टयमैतरेयोपनिषदात्मकं तृतीयं प्रकरणम् । चतुर्थं तु प्रकरणं तस्यैव तृतीयं काण्डम् । यत्र खलु संहितापदक्रमभेदेन त्रेधा भिन्नानां पाठानां स्वरूपभेदा वर्णमालान्तर्गतानां बहूनां वर्णानां स्वयमुत्प्रेक्षिताः तत्वार्थाश्च प्रतिपाद्यन्ते ॥

कौषीतकारण्यकं कौषीतकब्राह्मणाङ्गभूतम् । तच्च पञ्चदशाध्यायात्मकम् । तत्रादिमौ द्वावध्यायौ ऐतरेयारण्यकस्य प्रथमपञ्चमकाण्डाभ्यां सप्तमाष्टमौ तृतीयकाण्डेन च साधर्म्यं भजन्ति । तन्मध्यपतिताः तृतीयादारभ्य षष्ठपर्यन्ताः चत्वारोऽध्यायाः कौषीतकोपनिषदात्मकाः । तेऽमी उपनिषदध्यायाः पूर्वोत्तरभागाकाङ्क्षारहितत्वात् पश्चात्काले तत्र संयोजितास्तर्क्यन्ते । अत एव केषुचित् तालपत्रग्रन्थेष्वेतद्भागस्य स्थानव्यत्ययः समुपलभ्यते ॥

सामवेदीयशाखाद्वयसम्बन्धीनि ब्राह्मणानि ताण्ड्यानि जैमिनीयापरनामधेयानि तलवकारीयाणि च । यद्यपीह कर्मप्रति-

पादका बह्वो ग्रन्थाः सामवेदसम्बद्धत्वेन प्रथन्ते तथापि तेषां त्रय एव वस्तुतो ब्राह्मणग्रन्थव्यपदेशयोग्याः । तेष्वेकं तलवकार-ब्राह्मणम् । तच्च पञ्चकाण्डात्मकम् । तत्रादिमे काण्डत्रये विविधानि यज्ञकर्माणि प्रतिपादितानि । गहनार्थत्वाद् 'उपनिषद्ब्राह्मणम्' इत्यभिधीयमाने चतुर्थे काण्डे न केवलमारण्यकरीत्यनुविधानेन स्वयमुत्प्रेक्ष्योत्प्रेक्ष्यार्थानामुपनिबन्धनं न च केवलमाचार्याणामनुक्रमणिकाद्वयस्य प्रकाशनं नापि केवलं प्राणस्य पूर्वावस्थाविचारः न चापि केवलं सावित्रीमन्त्रार्थविचारश्च कृतः किन्तु ह्रसीयान् बह्वर्थः केनोपनिषद्भागोऽपि तत्र गर्भीकृत. । आर्षेयब्राह्मणाभिधाने पञ्चमे तु काण्डे सामद्रष्टॄणामृषीणां काचिद्वंशानुक्रमणिका परं निबद्धा ॥

तण्डिशाखावलम्बिब्राह्मणं पञ्चविंशाभिधानम् । यत् खलु स्वनामानुगुण्येन पञ्चविंशत्या काण्डैः सङ्घटितम् । इदमेव ताण्ड्य-ब्राह्मणमिति प्रौढब्राह्मणमिति चोच्यते । ब्राह्मणमिदं प्राधान्येन सोमयागक्रियां निरूपयति । अल्पाल्पादङ्गकर्मणः समारभ्य शताहानेकवार्षिकमहायागपर्यन्ताः सोमयागसम्बन्धिनः क्रिया-विशेषाः क्रमेण तत्र प्रतिपादिताः । अपि च ब्राह्मणग्रन्थेऽस्मिन् बहून्युपाख्यानानि सरस्वतीदृषद्वत्योरन्तरालवर्तीनि देशेऽनुष्ठितानि बहूनि यज्ञकर्माणि चोपवर्णितानि । एवं कुरुक्षेत्रमपि तस्य परिचितम् । अथापि तस्योत्पत्तिदेशः कुरुक्षेत्राद् विप्रकृष्टः पौर-स्त्यदिग्भाग इति तद्गतै. नदीपर्वतादिनिर्देशविशेषैरवधार्यते । तदु-पवर्णितानां यज्ञकर्मणां मध्ये व्रात्यस्तोमाख्याः क्रतवोऽब्राह्मणान्

आर्यान् ब्राह्मणीकर्तुं प्रवृत्तत्वात् विशेषतः स्मरणार्हा. । अपि च ब्राह्मणमिदमात्मनः कौषीतकिशाखया सह विपक्षभावमाविष्करोति । तत्र हेतुश्चिन्त्यः । षड्विंशाख्यं ब्राह्मणं यद्यपि नामतो भिन्नमेव तथापीदं पञ्चविंशब्राह्मणस्य षड्विंशो भाग एवेति तन्नामशब्देनाभिव्यज्यते । षडध्यायात्मकस्य तस्य अन्तिमोऽध्यायः अद्भुतब्राह्मणमिति संज्ञायते । तच्चोत्पातमूलकानां दुरुदर्काणां निवारणे प्रभविष्णुत्वेनाभिमतम् । अत एव तत्र देवताविशेषाः हसन्तः रुदन्तः गायन्तः नृत्यन्तः स्विद्यन्तः माद्यन्तः तथाविधान्यवस्थान्तराण्यनुभवन्तश्च वर्ण्यन्ते ॥

एतच्छाखीयमन्यद् ब्राह्मणं छान्दोग्याभिधानम् । तस्याल्पीयानेव भागः क्रियाप्रतिपादक. । न तत्र नामतोऽपि सोमयाग प्रस्तूयते । किन्तु जनविवाहादिविषयकाः केचित् क्रियाविधय उपादिश्यन्ते । अन्यत्र देवताश्च स्तूयन्ते । एते च विषयाः सामवेदब्राह्मणात्मके तस्य प्राथमिकेऽध्यायद्वये प्रतिपादिताः । अवशिष्टा अध्यायास्तु च्छान्दोग्योपनिषदात्मकाः ॥

अन्याश्चतस्रः खण्डकृतयो यद्यपि ब्राह्मणव्यपदेशं भजन्ति । तथापि न वस्तुतो ब्राह्मणव्यपदेशयोग्याः । तथा हि तेषामन्यतमं सामविधानब्राह्मणम् । यत् खल्वन्धविश्वासमूलकेष्वभिचारकर्मसु अनुष्ठेयान् मन्त्रप्रयोगानुपदिशति । अन्यत् देवताध्यायब्राह्मणम् । यदपि सामवेदीयान् देवताविशेषान् स्तौति न तु नामतोऽपि

क्रियासम्बन्धं भजति । अन्यत् वंशब्राह्मणम् । यच्चापि सामवेदीयानामाचार्याणां वंशानुक्रममात्रं वर्णयति । चतुर्थं संहितोपनिषद्ब्राह्मणम् । ऐतरेयारण्यकतृतीयकाण्डवदत्र केवलं वेदाध्ययनरीतिरुपदिश्यते न तु कापि क्रिया प्रतिपाद्यते ।

सामवेदीयानि ब्राह्मणानि विषमीभूतैरतिशयोक्तिनिर्भरैश्च कल्पनाविशेषैः अत्यन्तं विलक्षणानि बाभान्ति । प्रधानभूतस्तद्गतो विशेषस्तु विविधरूपाणां साममन्त्राणां दिविजवस्तुत्वेन भुविजवस्तुत्वेन च प्रतिपादनम् । एवं चरित्रानुकूलाश्च बहवोऽर्थाः सामवेदीयेषु ब्राह्मणग्रन्थेषु समुपलभ्यन्ते ॥

अथ कृष्णयजुर्वेदीयानि ब्राह्मणान्यधिकृत्य विचारयामः । तत्र कठशाखायां मैत्रायणीयशाखायां च तत्तत्संहितारूढा गद्यभागा एव ब्राह्मणत्वेनाङ्गीकृता. । तैत्तिरीयशाखायां तु संहिताबहिर्भूतं प्राचीनतमं काण्डत्रयात्मकं ब्राह्मणमपि पृथगेवोपलभ्यते । परन्तु तैत्तिरीयब्राह्मणमिदं तैत्तिरीयसंहितातो नातीव भिद्यते । यतो हीदं संहितोपेक्षितान् विषयानुपस्थापयत् संहितोपवर्णितान् क्रियाविशेषान् व्यवस्थापयच्च तदनुबन्धात्मकं भवति । तैत्तिरीयारण्यकमस्यैव ब्राह्मणस्य परिशिष्टात्मको भाग. । तस्मिन् दशाध्यायाः सन्ति । तत्रान्तिमाश्चत्वारोऽध्यायाः तच्छाखीये द्वे उपनिषदौ भवतः । तथा हि—सप्तमाष्टमनवमा अध्यायाः तैत्तिरीयोपनिषत्,

दशमोऽध्याय याज्ञिकोपनिषदपरनामधेया महानारायणोपनिषच्च भवतीति द्रष्टव्यम् । नैतदध्यायचतुष्टयादन्यत्र ब्राह्मणेऽस्मिन् ब्राह्मणारण्यकव्यपदेशभेदनिमित्तभूतं संहितापेक्षया विषयवैलक्षण्यं पश्यामः । तस्मादत्र ब्राह्मणारण्यकव्यपदेशभेदः वेदान्तरीयसादृश्यसम्पादनाय पश्चात्काले कल्पित. सम्भाव्यते ॥

एतद्ब्राह्मणस्य तृतीयकाण्डगतमन्तिममध्यायत्रयम्, एतदारण्यकस्य प्राथमिकं काण्डद्वयं च यद्यपि नाद्यत्वे तथापि पूर्वं कदाचित् काठकशाखासम्बद्धं बभूवेति शक्यमनुमातुम् । यतो हि ब्राह्मणे आरण्यके च विवादविषयभूतेषु भागेषु 'य् व्' वर्णयोः यथाक्रमं 'इय् उव्' रूपेणानुपलम्भात् तदन्यत्र तदुपलम्भाच्च तेषामितरेषां भागानां च भिन्नशाखोत्पन्नत्वं व्यक्तमेव । अपि च काठकशाखासम्बद्धत्वेनानुमीयमाने तैत्तिरीयब्राह्मणभागे (३—२) नचिकेताग्नेः प्रतिपादनावसरे तन्नाम्नः कस्यचिद् ब्राह्मणकुमारस्योपाख्यानमुदाहृतम् । यो हि कुमारो यमस्य सदनं प्राप्तः तत्र यमाद्वरत्रयमवापेति श्रूयते । इदमेवोपाख्यानमवलम्ब्य काठकोपनिषदारब्धा । तस्मादस्मदभ्यूहः सुस्थ एव ॥

यद्यपि मैत्रायणशाखायां पृथग् ब्राह्मणं नोपलभ्यते तथापि मैत्रायणसंहितागतं चतुर्थं काण्डं विधिरूपत्वात् परिशिष्टात्मकत्वात् विलक्षणच्छायानुहारित्वाच्च ब्राह्मणग्रन्थव्यपदेशमर्हति । एतच्छाखीया उपनिषदपि तस्यां संहितायामेवोपानिबद्धा तालपत्रग्रन्थेषु

केषुचित् द्वितीयकाण्डत्वेन केषुचित् पञ्चमकाण्डत्वेन च पठ्यमाना मैत्रायणोपनिषत् । इयमेव मैत्रायणीया मैत्रीति चाभिधीयते ॥

शुक्लयजुर्वेदीयो विध्यंशः शतपथब्राह्मणे सविस्तरं निबद्धः । तच्च नामधेयं तस्य शतं पन्थानो यस्मिन्निति व्युत्पत्त्या शताध्यायघटितत्वादन्वर्थम् । निखिलेऽपि वैदिकग्रन्थसमुदाये ऋग्वेदादनन्तरं प्राधान्यमस्यैव । तस्यास्य शतपथब्राह्मणस्य पाठद्वयमुपलभ्यते । तत्रैको माध्यन्दिनानां पाठः, यो वीबराचार्येण प्रकाशितः । अपरः कण्वानां, योऽपि यग्गलिङ्गाचार्येण प्रकटितः । तत्र माध्यन्दिनपाठानुरोधेन चतुर्दश काण्डाः कण्वपाठानुरोधेन सप्तदश काण्डाश्च भवन्ति । माध्यन्दिनपाठानुरोधिनः प्राथमिका नव काण्डाः वाजसनेयसंहिताया मूलभागात्मकैरादिमैः अष्टादशभि. काण्डैः सह दृष्टसंवादाः प्राचीनतरा भवितुमर्हन्ति । अपि च तत्र द्वादशस्य काण्डस्य मध्यमसंज्ञाव्यवहारदर्शनात् तद्व्यवहारान्यथानुपपत्त्या च तस्यान्तिमा पञ्चकाण्डी कस्मिंश्चित् काले शतपथब्राह्मणाद् बहिः पृथग्ग्रन्थत्वेन स्थितेत्यनुमीयते । तत्र दशमे काण्डेऽग्निरहस्यमुप वर्णितम् । एकादशे पूर्वोपपादिता एव विषया अनूदिताः । द्वादशे त्रयोदशे च परिशिष्टरूपा विविधविषयाः क्रोडीकृताः । अन्तिमं काण्डमारण्यकम् । तस्याप्यन्तिमा षडध्यायी बृहदारण्यकोपनिषत् ॥

शतपथब्राह्मणस्यास्य षष्ठादारभ्य दशमपर्यन्ता पञ्च काण्डाः

क्वचिद्विषये काण्डान्तरापेक्षया वैलक्षण्यं भजन्ति । तथा हि तत्राग्नि-रहस्यप्रतिपादनविधौ शाण्डिल्यमतमेव प्रामाणिकत्वेनाभ्युपगम्यते न तु याज्ञवल्क्यमतम् । याज्ञवल्क्यस्य नामापि न तत्रोच्चार्यते । तन्निर्दिश्यमानाः गान्धारसाल्वकेकयप्रभृतयोऽपि पश्चिमोत्तर-देशीयाः । काण्डान्तरेषु पुनः तत्प्रातिलोम्येन याज्ञवल्क्य एव परमाचार्यपदेऽभिषिक्तः । अपि चात्र पौरस्त्यदेशीयाः, कुरुपाञ्चाल-कोसलविदेहसृञ्जयादयो मध्यदेशीयाश्च परं निर्दिश्यन्ते । अपि च शाण्डिल्यप्रमाणकानां पञ्चानां काण्डानां भिन्नकर्तृकत्वं भाषामार्गेऽपि प्रतीयते । तेऽमी पञ्च काण्डाः पश्चात्कालेऽप्रमार्जितभाषाभेदा एव शतपथब्राह्मणे संयोजिताः । किञ्च परोक्षार्थे लिटः प्रयोगोऽपि शाण्डिल्यकाण्डानां त्रयोदशस्य काण्डस्य चाविदित ॥

शतपथब्राह्मणमिदं तदात्वेऽपि ब्रह्मकर्मैकनिलयत्वेन स्थितयोः कुरुपञ्चालदेशयोः प्रादुर्भूतमिति तद्गतैरेव निर्देशविशेषैरवधार्यते । तथा ह्यत्र जनमेजयः कुरुराजशब्देन व्यपदिश्यते । तदानीन्तनो महायाज्ञिक आरुणिरपि पञ्चालदेशीयः श्रूयते । अथाप्येते शतपथब्राह्मणोपदिष्टा धर्मास्तस्मिन् काले मध्यदेशस्य पौरस्त्यभागेषु अयोध्याप्रधानेषु कोसलेषु मिथिलाप्रधानेषु विदेहेषु च लब्धप्रचारा अभूवन्नित्यपि अवश्यमभ्युपगन्तव्यम् । यतो हि वैदेहस्य जनकस्य राज्ञः सभा कुरुपञ्चालदेशीयैः ब्राह्मणैरधिष्ठिता श्रूयते । अपि च तत्सभायां प्रवृत्ता वादप्रतिवादाः प्राधान्येन शतपथब्राह्मणस्यावो-

चीनेषु भागेषु समुट्टङ्किता उपलभ्यन्ते । तत्र च वादगोष्ठयां खर्विताखिलपाश्चात्यप्रान्तीयपण्डितमण्डलीगर्वः शतपथब्राह्मणेऽस्मिन् पञ्चकाण्ड्या अन्यत्र प्रामाणिकत्वेनाभ्युपगत आरुणेः शिष्यो याज्ञवल्क्यः सभापतित्वेन वर्ण्यते । स च विदेहदेशीय इत्यपि तत एवाधार्यते । एतेन हि तदात्वे शुक्लयजुश्शाखीयो धर्मः पौरस्त्यदेशेष्वपि लब्धप्रचारोऽभूदित्यवसीयते ॥

अपि च ब्राह्मणेऽस्मिन्नुपलभ्यमानैः तादात्विकस्थितिविशेषस्मारकैः लिङ्गविशेषैरिदमवधार्यते यत्—नैतद्ब्राह्मणोत्पत्तिकाले विदेहदेशः ब्राह्मणाधिवासयोग्योऽभूदिति । श्रूयते हि तत्र प्रथमे काण्डे किञ्चिदुपाख्यानं, येन पूर्वां दिशं प्रयातानामार्याणां त्रिविधा स्थितिरभिव्यज्यते । तथा हि—विदेघपतिर्माथवः स्वपुरोहितराहूगणसनाथः कदाचित् सरस्वत्याः कूले स्थितः । पश्चादग्निर्वैश्वानरः माथवेन तत्पुरोहितेन चानुप्रयातः तस्माद्देशात् पूर्वाभिमुखः प्रस्थाय भूमिं दहन् प्रतीच्यपर्वतात् प्रभवन्तीं सदानीरां यावज्जगाम । न चैष तां नदीमधाक्षीत् । अतः पुराकाले जनाः नेयमग्निना पवित्रितेति मत्वा न तां नदीमस्प्राक्षुः । नापि तामतार्षुः । तस्मिन् काले तस्याः पौरस्त्यतीरभागः अकृष्टोऽनूपश्चासीत् । अद्यत्वे तु देशोऽयं यज्ञाग्निना पवित्रीकृत इति मत्वा ब्राह्मणास्तत्र निवसन्ति । कृषिकर्म च तत्र महदेव प्रवर्तते । ततो विदेघपतिर्माथवोऽग्निं पप्रच्छ 'कुत्र मया वर्तितव्यम्' इति । अग्निः

प्रत्युवाच 'अस्या नद्याः पूर्वतीरे वर्तस्व' इति । सैषा नदी कोसलविदेहदेशयोः सीमानमापादयन्ती तयोर्मध्ये प्रवहति ॥

शुक्लयजुर्वेदीयवाजसनेयशाखीयैः स्वकीयानामेषु पौरस्त्यदेशेष्वभिवृद्धिं गतानां धर्मग्रन्थानां परमोत्कृष्टत्वमभिव्यञ्जितम् । आविष्कृता च बहुत्र शतपथब्राह्मणे चरकशाखीयानामध्वर्यूणां निन्दा । तत्र चरकशाखेत्यनेन कृष्णयजुर्वेदीयं काठककपिष्ठलमैत्रायणीयसमाख्यं शाखात्रयं गृह्यते ॥

इह तावत् प्रथमं कोसलविदेहदेशयोः प्रादुर्भूय तदानीं बाल्यावस्थायां स्थितं बुद्धमतमधिकृत्य ब्राह्मणमिदं किमभिप्रैतीत्यवश्यमेव विचारणीयम् । तत्र तावदिदमनुस्मरणीयं यत्—अर्हच्छ्रमणप्रतिबुद्धशब्दाः प्राचीनतरेषु ब्राह्मणादिग्रन्थेष्वप्रयुक्ताः ब्राह्मणेऽस्मिन् प्रथमप्रयुक्ताः समुपलभ्यन्ते । अथाप्येते शब्दा न बौद्धसङ्केतितेष्वर्थेष्वत्र प्रयुक्ता इति । ब्राह्मणेऽस्मिन्नुट्टङ्कितायां ऋषिवंशावलिपट्टिकायां विशेषतः गौतमवंशोऽपि प्रवेशितो दृश्यते । गौतमाश्च कपिलवस्तुवास्तव्याः शाक्या एव । तेषामेव कुले बुद्धो जनिमलभत । सूक्ष्मेक्षणिकया भूयः पर्यालोच्यमाने वस्तुनि साङ्ख्यमतमपि तस्मिन्नेव काले लब्धाङ्कुरमवधार्यते । यतो हि ब्राह्मणेऽस्मिन् आसुरिर्नाम कश्चिदाचार्यो नाम्ना निर्दिश्यते । स च साङ्ख्यमतप्रवर्तकाचार्य इति साम्प्रदायिकाः । इतस्तावद्विचारयामः

पुराणादिषु वर्ण्यमानानामाख्यानानां कानि कानि मूलकथावस्तूनि ब्राह्मणेऽस्मिन्नुपलभ्यन्त इति । तत्र महाभारतप्रसिद्धः कुरुराजो जनमेजयः शतपथब्राह्मणेऽस्मिन्निदम्प्रथमतया निर्दिष्टः समुपलभ्यते । कुरुक्षेत्रसमराङ्गणोद्दीपितोद्दामयशसां पाण्डवानां तु ब्राह्मणान्तरवदत्रापि नोपलभ्यते नामापि । अर्जुनशब्दोऽप्यत्र प्रयुज्यमानः केवलमिन्द्रवाचकः, न तु पाण्डवान्यतमवाचकः । परन्तु महाभारतनायकस्य अर्जुनस्य इन्द्रात्मजत्वश्रवणात् मन्यामहे पूर्वमिन्द्रवाचकत्वेन स्थितः अर्जुनशब्दः पश्चात्काले पाण्डवान्यतमवाचकत्वेन परिणतो भवितुमर्हति । एतद्ब्राह्मणनिर्दिष्टो विदेहाधिपतिर्जनकोऽपि रामायणकथानायिकायाः सीतायाः पितैव ।

कविसार्वभौमेन कालिदासेन विरचिते विश्वविख्याते रूपकद्वये यदुपनिबद्धमितिवृत्तद्वयं तत्रैकतरं ब्राह्मणेऽस्मिन् विस्तरेणोपवर्णितं अन्यदुदक्षिप्तं चोपलभ्यते । तथा हि ऋग्वेदेऽविस्पष्टं निर्दिष्टः उर्वशीपुरूरवसोः अनुरागविरागवृत्तान्तः शतपथब्राह्मणेऽस्मिन् सुस्पष्टं प्रदिष्टः । तथा शकुन्तलाभिधानायामप्सरःस्त्रियां लब्धजनुषः दुष्यन्ततनयस्य भरतस्योपाख्यानमत्र क्वचिदुपाक्षिप्तं दृश्यते ॥

शतपथब्राह्मणे श्रूयमाणमन्यत् किमपि रमणीयमुपाख्यानं प्रलयविषयकम् । तच्च अवस्तायामप्युपलभ्यते अथर्ववेदे क्वचित् प्रसङ्गवशादनुसन्धीयते च । अथापि प्राचीनतरेष्वितरेषु वैदिक-

ग्रन्थेषु न प्रस्तूयते । इहैव ब्राह्मणग्रन्थे प्रथमोपवर्णितमुपलभ्यते । महाभारते तु सुबहु प्रपञ्चितम् । तदिदमुपाख्यनं समितिकशाखाप्रभवमभ्यूहन्ति चर्चकाः । तच्चेत्थमुपाख्यातं श्रूयते——मनुः कदाचिदेकं मत्स्यं ददर्श । स च मत्स्यो मनुं शरणमयाचत । प्रतिजज्ञे च भाविनि जलप्रलये भवतो रक्षणेन प्रत्युपकरिष्यामीति । मनुस्तथेत्युक्त्वा तं यथावद्ररक्ष । मत्स्यस्याज्ञया मनु. पोतमेकं कारयामास । समारब्धे च जलप्रलये मत्स्यशृङ्गयोराबद्धं तं पोतमारुक्षन्मनुः । मत्स्यश्च तं सत्वरमुदीच्यपर्वतशिखरमनैषीत् । पश्चान्मनुः स्वसुतया सह भूयो मर्त्यलोकस्य जनयिता बभूव ।

इत्थं शतपथब्राह्मणमिदं सहृदयावर्जकानामुपाख्यानरत्नानामाकरो भवति । तदिदं ब्राह्मणं ब्राह्मणग्रन्थानां मध्येऽत्यन्तमर्वाचीनमिति तद्गतैरेव लिङ्गविशेषैः व्यक्तीभवति । ब्राह्मणान्तरभाषापेक्षयाऽत्यन्तं ललितमधुरा तदीया भाषागतिरपि अमुमेवार्थमवधारयति । ब्राह्मणेऽस्मिन् कृष्णयजुर्वेदीयब्राह्मणभागप्रतिपादिता एव क्रियाविशेषाः सुस्पष्टं व्यवस्थाप्यन्ते । एतदीयतत्त्वविचारसरण्याः पर्यालोचनायां विश्वैकत्ववादः ब्राह्मणेऽस्मिन् अभिनवैरभिप्रायविशेषैः परिष्कृतो दृश्यते । तदीया उपनिषत् वैदिकतत्त्वविद्यायाः वासभवनम् ॥

अथर्ववेदीयं गोपथब्राह्मणम् । यद्यपि तस्य संहितया सह नोपलभ्यते साक्षात्सम्बन्धः तथापि तस्याथर्ववेदीयत्वं दुरपह्नवम् ।

तच्च काण्डद्वयात्मकम् । तत्र प्रथमे काण्डे पञ्च, द्वितीये षट् चाध्यायाः सन्ति । काण्डद्वयमप्येतदत्यन्तमर्वाचीनम् । नैतदथर्वानुयायिनां पारम्पर्योपदेशमवष्टभ्य निर्मितं किन्तु वैतानसूत्रग्रन्थोत्पत्तेः परं तच्छायानुकारेण विरचितम् । तत्र प्रथमे काण्डे क्वचित् क्वचित् ब्राह्मणान्तरेष्वदृष्टाः नूतनाविर्भूताः केचित् क्रियाविशेषाः प्रतिपाद्यन्ते । अन्ये सर्वेऽप्यंशाः शतपथब्राह्मणस्यैकादशात् द्वादशाच्चाध्यायादुद्धृताः । ऐतरेयब्राह्मणादपि कानिचित् वाक्यान्यत्रोपात्तानि । तदिदं प्रथमं काण्डं प्राधान्येनाथर्ववेदस्य ब्रह्मनाम्नश्चतुर्थपुरोहितस्य च प्रशंसार्थं प्रवृत्तम् । अत्र शिवशब्दव्यवहारस्य दर्शनादयं भागः वैदिककालपरिसमाप्तेः परं समुत्पन्नः, न तु ब्राह्मणरङ्गे प्रादुर्भूतः । अत एव तत्राथर्ववेदस्य विंशतिकाण्डात्मकत्वं प्रस्तूयमानमुपपद्यते । अत एव च शब्दशास्त्रोपस्कृतानां भूयसां पाणिनीयानां शब्दानां प्रयोगोऽप्युपलभ्यमानः सङ्घटते । द्वितीयं काण्डं भूयसा वैतानश्रौतसूत्राश्रितक्रमेण यज्ञक्रियामात्रस्य प्रतिपादकत्वात् ब्राह्मणव्यपदेशमर्हति । अथ तु तत्र भूयान् भागो ग्रन्थान्तरेभ्यः सङ्कलितः । ब्राह्मणसूत्रग्रन्थयोः यश्चरित्रकारैरुल्लिखितः पौर्वापर्यक्रमः सोऽत्र विपर्यस्तो दृश्यते । यतो ह्येतत् द्वितीयं काण्डं वैतानसूत्रावलम्बेन विरचितम् । वैतानसूत्रग्रन्थ एवास्य संहितास्थानीयः । प्रायेण काण्डेऽस्मिन् त्रिषु द्वावंशौ प्राचीनग्रन्थेभ्यः समुद्धृतौ । तत्रैतरेयकौषीतकिब्राह्मणाभ्यां भूयानंशः, मैत्रायणतैत्तिरीयब्राह्मणाभ्यामल्पीयानंशश्चोपात्तः । तथा

शतपथब्राह्मणात् पञ्चविंशब्राह्मणाच्च कतिपयानि वाक्यान्युद्धृत्य संयोजितानि ॥

इतस्तावदुपनिषत्प्रतिपाद्यान् विषयान् विचारयामः । यद्यप्युपनिषद कर्माङ्गभूतं ज्ञानकाण्डं प्रतिपादयन्त्यो ब्राह्मणाङ्गभूतत्वेन प्रतीयन्ते तथापि वस्तुतस्ताः कर्ममार्गपरिपन्थिभूतमेव ज्ञानमार्गमुपदिशन्तीत्यवधेयम् । न खलूपनिषदां परमोद्देश ऐहिकसुखानुभूतौ पारात्रिकफलावाप्तौ वा किन्तु तत्वज्ञानेन जीवात्मनः संसारबन्धविच्छित्तिसम्पादनद्वारा परमात्मसायुज्यप्राप्तावेव । एवं चैतद्दृष्ट्या कर्मणामपकृष्टत्वं तत्वज्ञानस्य सर्वोत्कृष्टत्वं च पर्यवस्यति ॥

उपनिषत्सु प्रतिपाद्यत्वेनाधिकृतो विषय विश्वात्मतत्वम् । तत्र ऋग्वेदोक्तः पुरुषोऽत्रात्मत्वेन प्रतिपन्नः । तथा ऋग्वेदे साकारत्वेन वर्ण्यमानः प्रजापति जगत्स्रष्टृत्वेनाम्नातः । उपनिषत्सु पुनः निराकारत्वेनास्थितं परं ब्रह्मैव जगत्कारणत्वेनाभ्युपगतम् । अयमेवोपनिषत्सु प्राधान्येन प्रतिपाद्योऽर्थः । आत्मशब्दश्च ऋग्वेदे प्राणवाचकत्वेन प्रयुक्त. । तथा हि तत्र वायुरेव वरुणस्यात्मत्वेन वर्ण्यते । सोऽयमात्मशब्दो ब्राह्मणग्रन्थेषु ज्ञानाधिकरणात्मकविलक्षणवस्तुवाचकत्वेन प्रयुज्यते । अपि च तत्र प्राणानामात्मत्वमात्मनो देवताभिन्नत्वं च वर्णितम् । तेन चात्मनो

विश्वात्मकत्वे तात्पर्यमित्यायाति । अत एव शतपथब्राह्मणस्यार्वा-
चीने कस्मिंश्चिद्भागे (१०–६–२) केवलज्ञानाकारत्वेन वर्ण्यमान-
स्यात्मनः विश्वव्यापित्वमुररीकृतम् । नपुंसकलिङ्गको ब्रह्मशब्दः
ऋग्वेदे स्तुतिरूपे शक्तिरूपे चार्थे प्रयुज्यते । ब्राह्मणग्रन्थेषु पुनः
प्राचीनतमेष्वपि स शब्दः स्तोत्रयज्ञपुरोहितान्यतमगतत्वेन यादृशी
दृश्यते तादृशीं लोकोत्तरां विशुद्धिमभिधत्ते । उपनिषत्सु पुनस्ते-
नैव ब्रह्मशब्देन जगदुपादानभूतं नित्यशुद्धात्मकं वस्तु निर्दिश्यते ।
इत्थंरीत्या समुत्पन्नो ब्रह्मशब्दस्यार्थविपरिणाम एव तत्त्वविचारसरणौ
तत्तत्प्रघट्टेषु तत्तत्कल्पनाभेदोत्पत्तौ प्रधानो हेतुः । ताविमौ ब्रह्मा-
त्मशब्दावुपनिषत्सु पर्यायतया प्रयुक्तौ । वस्तुतस्तु प्राचां मते
ब्रह्मशब्देन जगदुपादानात्मकं विश्वव्यापि परब्रह्माख्यं वस्तु, आत्म-
शब्देन शरीरावच्छिन्नः केवलो जीवश्च गृह्यते । तत्र ब्रह्मणोऽ
ज्ञेयत्वप्रतिपादनार्थमात्मनो ज्ञातत्वमङ्गीकृतम् । तथा ह्ययमात्मा
अक्षरशब्देन निर्दिश्यमानो बृहदारण्यकोपनिषदीत्थमुपवर्ण्यते
(३–८,–८, ११)—

"अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्व-
नाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्रमा-
णममुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति
कश्चन । तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ अश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ ।
नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्य-
दतोऽस्ति विज्ञात्रेतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" ॥

ब्रह्मविद्यासरणावदृष्टपूर्वः परमात्मास्तित्ववादोऽप्युपनिष-
द्भिरेव यथावदैदम्प्रथाम्येन प्रतिपादितः ॥

आत्मनः स्वरूपमितोऽपि व्यक्तया गत्याकाठकोपनिषदि
प्रतिपाद्यते—

यतश्चोदेति सूर्यो
अस्तं यत्र च गच्छति ।
तं देवाः सर्वेऽर्पिता-
स्तदु नात्येति कश्चन ॥ (४–९)

न सन्दृशे तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चनैनम् ।
हृदा मनीषा मनसाभिकॢप्तो
य एतद्विदुरमृतास्ते भवन्ति ॥ (६–९)

नैव वाचा न मनसा
प्राप्तुं शक्यो न चक्षुषा ।
अस्तीति ब्रुवतोऽन्यत्र
कथं तदुपलभ्यते ॥ (६–१२)

ऋग्वेदे सगुणप्रजापतिनिष्ठत्वेन दृष्टा सृष्टिशक्तिरुपनिषत्स्वा-
त्मगतत्वेन वर्ण्यते । तथा हि बृहदारण्यके श्रूयते (१–४)—

अग्रे विश्वमिदमात्मैवासीत् । स स्वस्यैकाकित्वात् भयचकितो द्वितीयाभावात् रतिमलभमानश्च द्वितीयेच्छया स्वयमेव स्त्रीपुंसावभवत् । ततो मनुष्या अजायन्त । ततः स आत्मा क्रमेण सर्वप्राणिजातौ स्त्रीपुंसलक्षणं द्वन्द्वमुत्पाद्य अन्तेऽग्निं देवादींश्चासृजदिति । तदनु तत्रैवात्यन्तातिशयेन वर्ण्यते—

स एष इह प्रविष्ट आनखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वम्भरो वा विश्वम्भरकुलाये वा तं न पश्यन्ति । अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति वदन् वाक्पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तस्यैतानि कर्मनामान्येव स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति ॥

पश्चात्काले वेदान्तशास्त्रकारैर्डिण्डिमीकृतो जगन्मायावादः प्राचीनतरासूपनिषत्सु मनागभिव्यञ्जितः अर्वाचीनास्वन्यतमायां श्वेताश्वतरोपनिषदि (४–१०) मुक्तकण्ठमभिहितश्च दृश्यते । तथा हि तत्र जगदेतन्मायिना महेश्वरेण सृष्टा केवला मायैवेत्युक्तम् । सोऽयं मायावादः—अनुभूयमानमिदमखिलं पारमार्थिकस्य वस्तुनः प्रतिबिम्बरूपमित्येवमात्मकेन ग्रीकदेशियप्लाटोसिद्धान्तेन, स्थूलरूपमिदं जगत् तदन्तर्यामिणः सूक्ष्मरूपस्य वस्तुनो विकासरूपमित्येवमात्मकेन शर्मण्यदेशीयकान्तसिद्धान्तेन च तुल्यरूपो भवति ॥

उपनिषत्सु प्राधान्येन सिद्धान्तितोऽर्थः जीवात्म-परमात्मनोरद्वैतम्। सोऽयमर्थश्छान्दोग्योपनिषदः षष्ठाध्यायगतैः नवभिः खण्डैः (८–१६) सोदाहरणं विशदीकृतः। यथा हि— ऐतदात्म्यमिदं सर्वं तत्सत्यं, स आत्मा, तत्त्वमसि श्वेतकेतो, इति। तत्वमसीत्यत्रैव सर्वेषामुपनिषद्वाक्यानामन्वयः। अयमेवार्थो बृहदारण्यकोपनिषदि (१–४–१०)—य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशते, आत्मा ह्येषां स भवति, इत्येवंरीत्या भङ्ग्यन्तरेण प्रतिपादितः॥

अभेदवादोऽयं शतपथब्राह्मणेऽप्यङ्गीकृतः। तथा हि तत्र (१०–६–३)—'यथायमत्यन्तमणीयः प्रियङ्गुबीजं तथैवायं हिरण्मयः पुरुषो हृदये। स एव परमात्मा ममात्मा। संसरन्न-हमित ऊर्ध्वं तमात्मानं प्रपत्स्ये' इत्याख्यातम्॥

इहोपनिषद्ग्रन्थेषु सर्वेष्वपि विश्वात्मकस्यात्मनः स्वरूपस्य विशदीकरणायोच्चावचा दृष्टान्ताः प्रदिष्टाः। तथा हि बृहदारण्यको-पनिषदि (२–४–१२) प्राज्ञोयाज्ञवल्क्यः सर्वसङ्गपरित्यागेन वनं प्रतिष्ठासुः स्वपत्न्या मैत्रेय्या पृष्टः प्रत्याह—यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहणायेव स्यात्। यतो यतस्त्वाददीत लवणमेवैवं वा अर इदं महद्भूतमनन्तमपारं विज्ञान एव। एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य

संज्ञाऽस्तीति । अपि चैतदुपष्टम्भकतया स भूयो भूयोऽप्याह यदा कारणभूतं द्वैतं नश्यति तदा कार्यात्मिका संज्ञाप्यवश्यं नश्यतीति ॥

अपि च तस्यामेवोपानिषद्यन्यत्र श्रूयते (२–१–२०)— 'सयथोर्णनाभिस्तन्तुनोच्चरेत्, यथाऽग्नेः क्षुद्राविस्फुलिङ्गा व्युच्चरन्त्येव-मेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति' इति ॥

मुण्डकोपनिषद्ययमपरो दृष्टान्तः श्रूयते (३–२–८)

यथा नद्यः स्यन्दमानाः समुद्रेऽ
स्तंगच्छन्ति नामरूपे विहाय
तथा विद्वान् नामरूपाद्विमुक्तः
परात्परं पुरुषमुपैति दिव्यम् ॥

बृहदारण्यके क्वचित् (३–७) याज्ञवल्क्य आत्मानमन्त-र्यामितया वर्णयति । यथा— सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत इति ॥

अपि च तस्यामेवोपनिषदि कश्चित् सरसः सल्लापः श्रूयते । तत्र काशीपतिरजातशत्रुः ब्राह्मणं बालाकिं गार्ग्यमाह—नादित्ये न चन्द्रे न वायौ नवान्येषु प्राकृतेषु भूतेषु नापि संज्ञानवत्यात्मनि

विद्यमानः पुरुषो ब्रह्मेति भ्रमितव्यम् । किन्तु लीलया स्वाभी-
प्सितं रूपं प्रतिपद्यमानः सकलचराचरोत्पत्तिनिमित्तभूतः सुप्तो वा,
प्रकृतपदार्थप्रलयाधिष्ठानभूतः सुषुप्तो वात्मा ब्रह्मेति वेदितव्यम्'
इति । अनेन ब्रह्मणः सङ्कोचविकासात्मकमवस्थाद्वयं व्याख्यातं
भवति । अत्रोभयथाऽपि जगतो मिथ्यात्वमेव पर्यवस्यति स्वप्न-
दृष्टस्य प्रातिभासिकत्वेन पारमार्थिकत्वायोगात् ॥

ईदृशोऽयमभिप्रायश्छान्दोग्येऽपि किञ्चिद्वैलक्षण्येनोद्भावितः
(८. ७–१२) । तत्र हि ब्रह्मविद्यामुपदिशन् प्रजापतिः शरीराव-
च्छिन्नस्यात्मनोऽवस्थात्रयं दृष्टान्तयति । तथा हि प्रथमं सलिला-
दर्शान्यतरगतप्रतिबिम्बदृष्टान्तेनात्मनः केवलं ब्रह्मप्रतिबिम्बरूपत्वं
ततः स्वप्नदृष्टतुल्यत्वं तदनु सुषुप्तात्मतुल्यत्वं चोपवर्णितम् ॥

पुरा जनकराजधानीप्रचालितायां वादगोष्ठ्यां जिज्ञासितत्वेन
पुरस्कृतानां विषयाणां वस्तुतत्वे विमृश्यमाने—अयमद्वैतवादस्त-
स्मिन् काल एव सर्वैः निर्विशङ्कमभ्युपगत इति व्यक्तीभवति । तथा
हि बृहदारण्यके (३–४,५) तद्वादगोष्ठीसदस्यौ द्वौ ऋषी विषय-
मेकं जिज्ञासमानौ पर्यायेण प्रार्थयेते—यत्साक्षादपरोक्षाद्ब्रह्म य
आत्मा सर्वान्तरस्तं व्याचक्ष्वेति ॥

तत्वज्ञानं ब्रह्माद्वयानन्दस्य कारणमित्येतेन सिद्धान्तेन सह
संसारशब्दनिर्दिष्टः पुनर्जन्मसिद्धान्तोऽपि क्रमेण प्रतिष्ठां प्राप्तः ।

प्राचीनतरेषु उपनिषद्ग्रन्थेषु प्रस्तूयमानत्वात् बुद्धमुनिना सिद्धवत्कृत्य स्वग्रन्थेषु स्वीकृतत्वाच्च पुनर्जन्मसिद्धान्तोऽयं बुद्धमताविर्भावात् पूर्वमेव प्रतिष्ठितोऽभूदित्यध्यवसीयते । शतपथब्राह्मणानुरोधेन सिद्धान्तोऽयं प्रथमत निर्विशेषं 'पुनरपि जननं पुनरपि मरणम्' इत्येवंरूपेण प्रतिपन्नोऽभूत । स च तत्र पुनर्जन्मनिवृत्युपायप्रदर्शनपूर्वकं पुरस्कृतः । तथा हि—ये तत्वज्ञानिन. सन्तः यज्ञान् यजन्ति ते मृत्युं प्राप्य अमृतत्वाय कल्पन्ते, ये तु तत्वज्ञानशून्या अयज्ञाश्च भवन्ति ते पुनःपुनर्मृत्योर्वशमापद्यन्त इति तत्र श्रूयते । अस्या. श्रुते अज्ञानिनामयज्ञानां च अमुष्मिन्नेव लोके पुनर्जन्मेत्यत्र तात्पर्यमनुसन्धीयते । सोऽयमर्थ पश्चादुपनिषद्ग्रन्थेषु तेषामस्मिन लोके पुनर्जनिमास्थाय किञ्चिद्विपर्यासं प्रापितः । इयमेव संसारपदनिर्दिष्टा पुनर्जनिः । तदुपष्टम्भकतया पश्चात् बृहदारण्यकोपनिषदि प्रारब्धकर्माप्यङ्गीकृतम् । तथा हि पञ्चभूतमयेऽस्मिन् शरीरे पञ्चत्वं प्राप्ते कर्मैव केवलं शिष्यते, येन लोकः सुकृती दुष्कृती वा भूत्वा कर्मानुरूपं फलं विन्दत इत्याम्नातम् । मन्यामहे प्रारब्धकर्मसिद्धान्तोऽयं बौद्धानां मध्ये प्रादुर्भूतः । यतो हि तैरात्मनोऽनङ्गीकारेऽपि पुनर्जन्मसिद्धान्तस्थापनायावश्यमेवाभ्युपगन्तव्यमभूत् प्रारब्धकर्म ॥

वेदकाल एवाविर्भूय क्रमशः प्रतिष्ठां प्राप्तस्यास्य पुनर्जन्मसिद्धान्तस्य समग्रं स्वरूपं च्छान्दोग्योपनिषदि विस्तरेण प्रदर्शि-

तम् । तथा हि श्रूयते—वनप्रस्थवासी विशुद्धज्ञानवानृषिः देव-यानं प्राप्य ब्रह्मसायुज्यमृच्छति, गृहवासी च समुपाहृतयज्ञः सत्कर्मपूतः पितृयानेन चन्द्रमसं प्रविश्य तत्र स्वकृतानां कर्मणां फलमुपभुज्य क्षीणे कर्मणि पुनरेव लोके वृक्षलतादिनानायोनिषु जन्म प्रतिपद्य अन्ते द्विजातिषु जायते, दुष्कर्माणस्तु चण्डालानां शुनां सूकराणां वा जातौ जनि लभन्त इति । अत्र प्रथममुष्मिन् लोके पश्चादस्मिन् लोक इति द्वेधा कर्मफलोपभोगः समुद्दिष्टः । तत्र आमुष्मिकः फलोपभोगः वेदानामप्यनुमतो ज्ञेयः ॥

बृहदारण्यकेऽप्ययमेवार्थः प्रतिपादितः । यथा (६-२-१५, १६) 'य एवमेतद्विदु ये च श्रद्धामुपासते ते देवलोकं सूर्यं च प्रविश्य पश्चात् ब्रह्मलोकं प्रपद्यन्ते, यतस्ते न पुनरावर्तन्ते, अथ ये यज्ञेन दानादिसत्कर्मणा वा सुकृतिनो भवन्ति ते पितृ-लोकं प्रविश्य पश्चात् चन्द्रमसं प्राप्नुवन्ति, क्षीणे च पुण्ये ततः पुनरावर्तन्ते, ये खलु पृथिव्यां नानायोनिषु जनुः प्रपद्य अन्ते मनुष्यजातौ जायन्ते, अकर्माणस्तु कीटाः पतङ्गा दन्दशूका वा भवन्ति' इति ॥

कौषीतकोपनिषदुपदिष्टो मार्गस्त्वितः किञ्चिद्विलक्षणः (१-२-३) । तत्र हि अस्माल्लोकात् प्रयान्तः सर्वे चन्द्रमसमेव प्रथमं प्राप्नुवन्ति । ततस्तु केचित् पितृयानेन गत्वा ब्रह्मलोकं

विशन्ति । अन्ये च यथाकर्म यथाविद्यं च लोकेऽस्मिन्नाकीटादामर्त्यं नानायोनिषु जनिमापद्यन्त इत्युक्तम् ॥

निखिलोपनिषच्छिरोरत्नायमाने काठके तु प्रेत्यभावविषयकं तत्वमुपाख्यानरूपेण प्रतिपादितम् । तद्यथा—नचिकेता नाम कश्चिन् ब्राह्मणकुमारः कदाचिद्यमलोकं गत. । तत्र यमेनाभ्यर्थितः स कुमारो यमाद्वरत्रयमवृणोत् । तत्र तृतीयो वरः—मरणानन्तरं मनुष्योऽस्ति न वेत्येतत्तत्त्वजिज्ञासाविषयक । तच्छ्रुत्वा यमः प्रत्याह—देवैरप्यत्र विचिकित्सितं पुरा, नाणुरेष धर्मः, तस्मादन्यं वरं नचिकेतो वृणीष्वेति । इत्थं वदन् विविधैः स्पृहणीयतमैर्भोग्यवस्तुभिः प्रलोभयन्नपि यमस्तस्य स्थिरतरं चेतो निवर्तयितुमशक्नुवन् पश्चात् तस्य तत्त्वविद्यासक्त्या भक्त्या च तुष्टस्तस्मै—जननमरणे केवलं विकाररूपे, ब्रह्माद्वैतज्ञानेन ते तीर्त्वा पुरुषः परं पदमुपैतीत्येवमादिरूपां तत्वविद्यामुपादिक्षत् । तथा हि—

> यदा सर्वे प्रमुच्यन्ते
> 　　कामा येऽस्य हृदि स्थिताः ।
> अथ मर्त्योऽमृतो भव-
> 　　त्यत्र ब्रह्म समश्नुते ॥ (६-१४)

नचिकेतःप्रलोभनपरामिमां कथामवलम्ब्यैव, मन्यामहे, बुद्धचरिते. मारकृतबुद्धप्रलोभनोपाख्यानमुपनिबद्धम् । तत्र बल-

वत्प्रलोभितावुभावप्यविप्रलब्धहृदयावन्ते समीहितसिद्धिमध्यगच्छ-ताम् ॥

नैव तावदेता उपनिषदः परितो दृश्यमानानां लौकिकानां वस्तूनां तत्वार्थं विचारयन्ति । किन्त्वंशतः साहितीसरणिमंशत-स्तत्वविद्यासरणिं चाश्रित्य सँल्लापरूपैर्वादप्रतिवादरूपैश्च वाक्यै-रलौकिकमात्मविद्यामात्रं प्रस्तुवन्ति । तत्राव्यवस्थमुपवर्णिता एव विषयाः पश्चात्काले वेदान्तशास्त्रेषु यथायथं व्यवस्थापिताः । तासां प्राचीनतमा उपनिषद क्रिस्तोः पूर्वस्मात् षष्ठशतकाब्दा-दर्वाच्यो न भवितुमर्हन्तीत्यसन्देहम् । यतो हि तास्विदम्प्रथम-तयोपस्थाप्यमानाः केचित् सिद्धान्ताः बुद्धमताविर्भावात् प्रागे-वोत्पन्नाः प्रतीयन्ते । सर्वेषामुपनिषद्ग्रन्थानामुत्पत्तिकालश्चतुर्धा प्रविभक्तुं शक्यः । तत्र प्रथमकालोत्पन्नाः क्रमेण बृहदारण्यक-च्छान्दोग्य-तैत्तरीय-ऐतरेय-कौषीतकोपनिषदः । एताः सर्वा अपि ब्राह्मणग्रन्थभाषानुकल्पया कयापि विकृतया गद्यभाषया निबद्धाः। ततः पश्चात् प्रथमकालोत्पन्नानां बृहदारण्यकाद्युपनिषदां छाया-मनुबध्नन् अंशतः गद्यमयः द्वितीयकालोत्पन्नानां प्रथमकालिकोप-निषद्विषयव्यवस्थापनपराणां केवलपद्यमयीनां काठक-ईश-श्वेताश्व-तर-मुण्डक-महानारायणोपनिषदामुत्पत्तौ द्वारमुद्धाटयन् अंशतः पद्यमयश्च केनोपनिषद्ग्रन्थः मध्यकाले प्रादुर्भूतः । द्वितीयकाला-विर्भूताः काठकाद्युपनिषदः कवितासौन्दर्येण सचेतसां चेतां-

स्यावर्जयन्ति । प्रथमकालिक्य उपनिषदोऽप्योजसा वर्णनाचातुर्येण प्रसादेन च बिभ्रत्येव महान्तं शोभातिशयम् । तासां सङ्घटना-रीतिरपि चमत्कृतैव । तृतीयकाले प्रश्न-मैत्रायण-माण्डूक्योप-निषदः समुत्पन्नाः । अत्र सर्वत्रापि प्रतिप्रसवमर्यादया गद्यभाषा समादृता । अथाप्यत्रत्या भाषारीतिः प्रथमवर्गीयोपनिषद्भाषापेक्ष-या विलक्षणीभूता आर्षप्रयोगविकला च भूयसा लौकिकसंस्कृत-भाषासारूप्यमापन्ना दृश्यते । चतुर्थे तु कालेऽर्वाचीना अथर्वोप-निषदः सम्भूताः, यासां काश्चन पद्यमय्यः काश्चन गद्यमय्यश्च ॥

उपनिषदामल्पिष्ठा ऐतरेयोपनिषत् केवलमध्यायत्रयघटिता । तत्र प्रथमेऽध्याये—जगदिदं ब्रह्मरूपिणाऽऽत्मना सृष्टमिति तत्र मनुष्यजातिरुत्कृष्टा सृष्टिरिति च प्रतिपाद्यते । यद्यप्ययमीदृशो-ऽर्थः ऋग्वेदीयपुरुषसूक्त एवोपवर्णितः तथाप्यत्र विशेषतः आदिमः पुरुषः सलिलादात्मसृष्टात् स्वयमुत्पन्नत्वेनोक्तः । आत्मनश्च मनुष्यशरीरे—इन्द्रियेषु मनसि हृदये चेति त्रिषु स्थानेष्ववस्थान-मुक्तम् । येन खलु यथाक्रमं जाग्रत्स्वप्नसुषुप्त्याख्यास्तिस्रोऽवस्थाः विवक्षिताः । द्वितीयस्मिन्नध्याये—आत्मनस्त्रिविधं जन्म प्रति-पाद्यते । जन्मविच्छित्तिरूपो मोक्षाख्यः पदार्थोऽपि तत्र निरूपितः । स च स्वर्गलोके जरामरणरहितावस्थानरूपेण प्रतिपन्नः । तृतीय-स्मिन्नध्याये—आत्मनः स्वरूपं विचार्य अन्ते प्रज्ञाया ब्रह्मत्वं सिद्धान्तितम् ॥

कौषीतकोपनिषत् चतुरध्यायाऽतिदीर्घा च । तत्र प्रथमेऽध्याये—मरणात्परं मनुष्याणां पुनर्जन्मविषये मार्गद्वयमुपदिष्टम् । द्वितीयस्मिन्नध्याये—प्राण आत्मलिङ्गत्वेन वर्णितः । अन्तिमे चाध्यायद्वये—ब्रह्मविद्याविचारप्रसङ्गात् ज्ञानेन्द्रियविषयभूतानां वस्तूनामिन्द्रियाधीनत्वं इन्द्रियाणां प्राणप्रज्ञात्मोभयाधीनत्वं च प्रतिपद्यते । तदनु ये तत्वज्ञानमीप्सन्ति तैर्न विषयलम्पटैर्भवितव्यं, किन्तु ज्ञानेन कर्मणा च प्राप्यत्वेनोद्दिष्टं यत् सर्वोत्तमाभिधमन्तर्याम्यात्मरूपं वस्तु तन्निदिध्यासनैकतानैर्भवितव्यमित्यभिहितम् ॥

यथा ऋग्वेदीयाः सर्वा उपनिषदः होत्रा पठनीयैः उक्थमन्त्रैरारभ्यन्ते तथा सामवेदीया उपनिषदः सर्वा अध्यात्मविद्याप्रतिपादकत्वेनोन्नीयमानैः साममन्त्रैः समारभ्यन्ते । सर्ववेदसंबद्धानां सर्वासामप्युपनिषदामेकरूपत्वादेकोद्देशकत्वाच्च मन्यामहे चिरात्प्रभृति सम्प्रदायक्रमेणागतमेकमेव तत्वार्थं विभिन्नशाखीयाः परमर्षयः स्वस्वाभिरुचितेन पथा वर्णयन्तस्तत्तदुपनिषद्ग्रन्थान् प्रणिन्युः ॥

तत्र सामवेदीया च्छान्दोग्योपनिषत् शरीरतः किञ्चिदिव हीयमानाऽपि विषयतो बृहदारण्यकादहीयमाना दृश्यते । सैषा बृहदारण्यकोपनिषदिव विप्रकीर्णतया स्थितैर्विविधैर्भागैः सङ्घटितेति तद्घटितानामष्टानामप्यध्यायानां परस्परनिरपेक्षत्वात् तत्त-

दध्यायानामन्ते संयोजितानां परिशिष्टभागानां तत्तदध्यायोपवर्णितविषयसम्बन्धरहितत्वाच्चावधार्यते ॥

तस्या. प्राथमिकेऽध्यायद्वये—सामान्यतः साम्नः तदङ्गभूतस्योक्थस्य च स्वरूपविचार' क्रियते । तत्र द्वितीयाध्यायगते परिशिष्टभागे नानाविधैर्विषयान्तरैः सह प्रणवाक्षरस्योत्पत्तिः धर्मस्कन्धस्य त्रैविध्यं ब्रह्मचारिगृहस्थवानप्रस्थभेदेनाश्रमाणां त्रैविध्यं च प्रतिपाद्यते । अत्राश्रमाणां त्रिविधत्वकथनान् चतुर्थस्य सन्यासाश्रमस्य पश्चात्कालकल्पितत्वमवधार्यते । तृतीयस्मिन्नध्याये—ब्रह्मण आदित्यत्वं प्रत्यक्षस्यादित्यस्य तदुत्पन्नत्व चाख्यातम् । अपि च तत्र पूर्णात्मकं ब्रह्म पूर्णरूपेणैव मनुष्याणां हृद्देशे तिष्ठतीत्याख्याय पश्चात् ब्रह्माधिगमौपयिकः पन्था. जीवात्मपरमात्मनोरभेदश्च समुपदिष्टः । अन्ततः ऋग्वेदोपदिष्टस्य मनुस्मृत्युपवर्णितस्य च जगत्सृष्टिसिद्धान्तस्य मिथः सामरस्यसम्पादकं किमप्युपाख्यानं वर्णयन्नेतदध्यायो विरमति । चतुर्थेऽध्याये—वायुप्राणादीनि भौतिकानि वस्तूनि विचार्य तेषां ब्रह्मत्वं प्रतिपाद्य मरणानन्तरमात्मनो ब्रह्मत्वावाप्तिप्रकारः समुपदिष्टः ॥

पञ्चमाध्यायस्य पूर्वार्धे बृहदारण्यकषष्ठाध्यायोपवर्णिता एव विषयाः प्रतिपाद्यन्ते । सोऽयमंशः पुनर्जन्मविषयकं वृत्तान्तं प्रस्तुवन्नत्यन्तमवधेयः । तस्यैवोत्तरार्धे—द्वैतात्मकस्य जगतः प्राति-

भासिकत्वमिदम्प्रथमतयोपवर्णितं दृश्यते । तस्मादयमंशोऽप्यनुस्मरणीय. । षष्ठेऽध्याये— अग्रे स्थितं सदात्मकं वस्तु स्वेच्छया स्वस्मादेव तेजस्सलिलान्नरूपं त्रिविधं मूलतत्वमस्राक्षीत् (पञ्चभूतात्मकं तत्वपञ्चकं पश्चात्कालेऽभ्युपपन्नम्) । तदिदं सदात्मकं वस्तु जीवात्मरूपेण तेजस्सलिलान्नाभिधानि मूलतत्वान्यनुप्रविश्य प्रत्येकं मूलतत्वांशत्रयघटितं त्रिवृदात्मकं विविधं विकारजातं व्याकरोत् । परन्तु सर्वमिदं विकारजातं केवलं नामधेयं सदित्येव सत्यं तदेवात्मा तत्त्वमसीत्याम्नायते । सप्तमेऽध्याये— नामोपासनात: समारभ्य भूमोपसनान्ता: ब्रह्मोपासनाया: क्रमिका: षोडश प्रकारा: प्रतिपादिता: । अत्र भूमा नाम सर्वात्मक: सर्वान्तर्यामी च परमात्मैव । अष्टमाध्यायस्य पूर्वार्धे— आत्मानमन्तर्यामिणं विश्वव्यापिनं चोक्त्वा पश्चात् तदधिगमोपायो विचारित: । तस्योत्तरार्धे च—भौतिकं शरीरं स्वप्नं सुषुप्तिं चाश्रित्य अवस्थात्रयमनुभवत आत्मनो दृष्टान्तेन असत्यात् सत्यस्यात्मनो भेद: प्रतिपादित: । तत्र सुषुप्त्यवस्थागत आत्मैव सत्य:, सुषुप्तौ प्रतिपत्तृप्रतिपत्तव्ययोर्भेदास्तमयादित्युपपादितम् ॥

शाखानाम्ना कृतनामधेयाऽत्यल्पा तलवकारोपनिषदपि सामवेदीया । सा च बहो: कालात्परं यदा तलवकारशाखातो विश्लेषमापद्यत तदा तदारम्भकशब्दं निमित्तीकृत्य केनोपनिषदित्याहूता । तस्यां विभिन्नविषयकं खण्डद्वयं सङ्कटि-

तम् । तत्र गद्यमये प्राचीनतरे च द्वितीयखण्डे—अग्न्यादिदेवानां सर्वथैव ब्रह्मायत्तत्वं तेषां शक्तेः ब्रह्मसम्भूतत्वं च प्रतिपाद्यते । पद्यमयेऽर्वाचीनतरे च प्रथमखण्डे—वेद्यावेद्ययोरुपास्यानुपास्ययोश्च सगुणनिर्गुणब्रह्मणोः भेदः प्रदर्शितः । तत्र निर्गुणब्रह्मणोऽविज्ञेयतामाह—

न तत्र चक्षुर्गच्छति
न वाग्गच्छति नो मनः ।
न विद्मो न विजानीमो
यथैतदनुशिष्यात् ॥

कृष्णयजुस्सम्बन्धिन्य उपनिषदः सर्वा अप्यर्वाचीनतालिङ्गमाविष्कुर्वन्ति । तत्र मैत्रायणोपनिषत् गद्यमयी नातिह्रस्वा च कृति. । तत्र तत्र पद्यमन्त्राश्च सङ्घटिताः । सैषा सप्तभिरध्यायैर्विभक्ता वर्तते । अथ तु तत्र सप्तमोऽध्याय. षष्ठाध्यायस्यान्तिमा अष्टौ खण्डाश्च पश्चात्कालायोजिताः । अत्र मैत्रायणशाखामात्रसम्बन्धिनां केषाञ्चिद्वर्णविशेषाणां सन्धिनियमानां च दर्शनादुपनिषदेषा प्राचीनेति न भ्रमितव्यम् । यतो ह्यत्र बहूनामन्योपनिषद्वाक्यानामनुसन्धानात् बहूनामर्वाचीनशब्दानां योजनात् परिपुष्टरूपस्य साङ्ख्यमतस्योपन्यसनात् वैदिकधर्मपरिगन्थिभूयमवलम्बमानानां नास्तिकमतानां पूर्वपक्षीकरणाच्च अस्या अर्वाची-

नता निर्विशङ्कमवधार्यते । वस्तुतो ह्यत्र नूतनाविर्भूतैः साङ्ख्य-बौद्धसिद्धान्तैरनुविद्धाः प्राचीनोपनिषदुपवर्णिता एव विषयाः समुपस्थाप्यन्ते । सैषा प्राधान्येन क्लेशैकनिलयां क्षणभङ्गुरां च लोकयात्रां विनिन्दते ऐक्ष्वाकाय बृहद्रथायोपदिश्यमानमात्मतत्वं वर्णयति । अपि च जगदसारतावादः प्राचीनतरासूपनिषत्सु लेशतः सूचितोऽत्र साङ्ख्यबुद्धमतयोः परिचयवशादत्यन्तातिशये-नोपवर्णित. ॥

सैषा प्रश्नत्रयावतारणपूर्वकमारभ्यते । तत्न कथमात्मा शरीरं प्रविशतीति प्रथमः प्रश्न. । तस्य चोत्तरं प्रजापतिः स्वेनो-त्पादिते शरीरे जीवोत्पादनार्थं स्वयमेव पञ्चप्राणरूपेण तदनुप्रवि-शतीति श्रूयते । द्वितीयः प्रश्न. कथं परमात्मा भूतात्मतया परि-णमतीत्येवंरूपः । अस्योत्तरं साङ्ख्यमतानुरोधेन कृतं न तु वेदान्तमतानुरोधेन । तथाहि प्रकृत्याश्रितेन गुणत्रयेणाभिभूयमान आत्मा स्वकीयां पारमार्थिकीमवस्थां विस्मृत्य देहाभिमानी सन् जनिमापद्यते इत्युक्तम् । तृतीयः प्रश्नः तादृशात् क्लेशात् कथ-मात्मनो मुक्तिरित्येवंरूपः । अयं च प्रश्नो न वेदान्तमतरीत्या नापि साङ्ख्यमतरीत्या किन्तु कयाप्यदृष्टपूर्वया रीत्या समाहितः । तथा हि ये तावत् ब्राह्मणोचितान् पुराकल्पीयान् वर्णाश्रमधर्माननुवर्तन्ते त एव ब्रह्मविषयकेण ज्ञानेन तपसा ध्यानेन च मुक्तिं लभन्त इत्युदीरितम् । ब्राह्मणग्रन्थेषु त्रितयत्वेन

वर्ण्यमाना अग्निवाय्वादित्याख्यास्त्रयो देवाः कालप्राणान्नाख्यास्त्रयः पदार्थाः सर्वलोकाभिवन्दिता ब्रह्मरुद्रविष्ण्वाख्यास्तिस्रो मूर्तयश्चात्र ब्रह्मसम्भूतत्वेनोक्ताः ॥

अस्या अवशिष्टो भागः परिशिष्टात्मकः । अथाप्यत्राप्यत्यन्तं श्रद्धेया बहवो विषयाः सन्ति । अत्र हि ब्राह्मणग्रन्थोक्ततुल्यरूपे विश्वोत्पत्त्युपाख्याने प्रकृतिनिष्ठास्तमोरजस्सत्त्वाख्यास्त्रयो गुणाः रुद्रब्रह्मविष्णुगतत्वेनोपवर्णिताः । तदिदमुपाख्यानं ऋग्वेदोक्ततत्वविद्यायाः साङ्ख्यविद्यायाश्च मिथः सामरस्यं सम्पादयतीत्यवधेयम् । किञ्च परिशिष्टभागेऽस्मिन् आदित्यमात्मनो बहिर्लिङ्गत्वेन प्राणमन्तर्लिङ्गत्वेन चोक्त्वा ओमित्येकाक्षरेण भूर्भुवः स्वरिति व्याहृत्या सावित्रीमन्त्रेण च तयोरुपासनापि कर्तव्यत्वेनोपदिष्टा । अपि चात्र ब्रह्माधिगमोपायतया मनोनिग्रहफलकः समाध्यन्तो योगमार्गोऽप्युपवर्णितः । परन्त्वत्रत्यो मार्गः पश्चात्कालिकयोगमार्गापेक्षया संक्षिप्तस्वरूपः । अपरं चात्र ब्रह्मणो जाग्रत्स्वप्नसुषुप्तिसमाख्यादवस्थात्रयादन्या तुरीयाख्या काचिदवस्थाऽधिकतयोपस्थापिता । सैवेयमन्तिमावस्था नाम । उपसंहारे च ऋतं मायां च स्वदितुकाम आत्मा द्वैतात्मकमिदं जगदनुप्रविशतीत्याख्यातम् ॥

काठकश्वेताश्वतरोपनिषदावपि कृष्णयजुस्सम्बन्धिन्यौ । एतद्द्वयगतानां वाक्यानां मैत्रायणोपनिषदि अनुसन्धानादेतयोः

तदपेक्षया प्राचीनतरत्वमवधार्यते । तत्र काठके १२०, श्वेताश्वतरे ११० च मन्त्राः सन्ति ॥

काठकोपनिषदि नचिकेतस उपाख्यानमुपवर्ण्यते । तच्चास्माभिः तैत्तिरीयब्राह्मणान्तर्गतकाठकांशविचारावसरे प्रसङ्गवशान्निरूपितमेव । तदिदं काठकोपाख्यानमात्मनः तैत्तिरीयब्राह्मणोपवर्णितस्योपाख्यानस्य परिचयमाविष्करोति । यतो हि तदारम्भकैरेव शब्दैरेषोपनिषदारभ्यते । सेयमद्यत्वे यद्यप्यध्यायद्वयोपेता दृश्यते तथाप्येषा पूर्वं कदाचित् प्रथमाध्यायमात्रघटिता बभूवेति शक्यमेवाभ्यूहितुम् । यतो हि द्वितीयस्मिन्नध्याये परिपुष्टरूपस्य योगमार्गस्य परिपूर्णरूपस्य जगन्मिथ्यावादस्य चोपवर्णनात् तस्यार्वाचीनत्वं सुज्ञानमेव । प्रथमेऽध्याये— प्रथमतः प्रस्तावनात्मकमुपाख्यानं पश्चादात्मतत्वं, आत्मनः शरीरानुप्रवेश., योगेन तन्निवृत्तिरित्येमे विषयाः प्रस्तूयन्ते । द्वितीयोऽध्यायः व्यवस्थाविकलोऽपि विषयगौरवेण प्रथमाध्यायान्न परिहीयते । तस्य चतुर्थवल्यां—आत्मतत्वविचारप्रसङ्गात् प्रकृतिपुरुषयोरभेदः सिद्धान्तितः । पञ्चमवल्यां— सर्वेषु भूतेषु तत्रापि विशिष्य मनुष्येष्वात्मनोऽनुप्रवेश. समाम्नातः । तत्रैव सर्वभूतान्तर्वर्तिनोरपि प्रत्येकं वस्तूनि बहिरप्यालिङ्ग्य वर्तमानयोः अग्निवाय्वोः दृष्टान्तेन तस्य लौकिकैः क्लेशैरलिप्यमानत्वं च निदर्शितम् । अन्तिमायां वल्यां— योगः

परमपुरुषार्थसाधनोपायत्वेन सिद्धान्तितः । अत्र प्रसङ्गवशादनुषज्यमान इन्द्रियाद्युत्कर्षापकर्षविचारः साङ्ख्ययोगयोश्चरित्रार्थचर्चायामुपकरोति । अत्र ह्यबोधपूर्वकः कश्चिन् वेदान्तमतविरोधः समापतितः । तथा ह्यात्मा यद्यप्यत्र सर्वभूतान्तर्यामित्वेनोक्तः तथापि प्रसक्तानुप्रसक्त्या प्रकृतिपुरुषयोः भेदोऽप्युपवर्णितः । अत एव पश्चात्काले साङ्ख्ययोगौ वेदान्तमतापेक्षया भिन्नप्रस्थानत्वेनाश्रितौ ॥

श्वेताश्वतरोपनिषदः तन्नामधेयं श्वेताश्वतरनामककृष्णयजुःशाखासंबन्धादिति यदुच्यते साम्प्रदायिकैः तन्निर्मूलं तदुक्त्यैव तस्याः श्वेताश्वतरनाम्ना ऋषिणा प्रणीतत्वावधारणात् । अद्योपलभ्यमानरूपेयमुपनिषत् नैककर्तृका भवितुमर्हति । अयं चार्थः तत्र प्रतिपाद्यानां विषयाणामन्योन्यघटनाभावात् छन्दोलक्षणनियमानां क्वचिदनादरणात् क्वचिदन्यथाकरणात् प्रक्षिप्तांशानां बाहुल्येनोपलम्भाच्चावगम्यते । अपि चाद्योपलभ्यमानरूपैषा काठकादर्वाचीनतरा निश्चीयते । यतो ह्यत्र काठकीयाः परश्शता मन्त्राः क्वचिदेकदेशविकृताः क्वचिदविकृताश्च संयोजिताः समुपलभ्यन्ते । अपि च परिपुष्टिं गतो योगमार्गोऽत्र प्रस्तूयते । किञ्च प्राचीनोपनिषत्स्वनुपलभ्यमानाः प्रत्यग्रोदिता बहवो विषया अत्र समुपस्थाप्यन्ते । तथा हि कल्पान्ते ब्रह्मणा जगतः संहृतिः कल्पादौ तेनैव तस्य पुनः सृष्टिः जगतोऽस्य

ब्रह्मोत्पादितमायामयत्वमित्यादयो विषया अदृष्टाश्रुतपूर्वा एव । तस्मादस्या अत्यन्तमर्वाचीनतायामसन्देहः । अपि चात्र तत्रभवान् ऋषिः ब्रह्मणि सावित्रीत्वमीशानत्वं रुद्रत्वं चारोपयन् तस्य पुरुषविधत्वकल्पनायां यत्नवान् दृश्यते । यद्यप्यत्र शिवशब्दो न सर्वात्मना रुद्रपर्यायत्वेन परिणतः तथापि तस्यात्र रुद्रविशेषणत्वेन प्रयोगदर्शनात् तदात्वे तत्पर्यायत्वेन परिणामोन्मुखः समभूदित्यवधार्यते । अपि चात्र बहवः साङ्ख्यसम्बन्धिनः पारिभाषिकाः शब्दाः प्रयुक्ताः। तथा विविधाः साङ्ख्यसिद्धान्ताश्चाप्युपस्थापिताः। त इमे सिद्धान्ता वेदान्तिभिः प्रकृत्यादेर्मायात्वादिकल्पनया वेदान्तसिद्धान्ताभिन्नत्वेन व्याख्यायन्त इत्यन्यदेतत् । तस्मादद्योपलभ्यमानरूपाया अस्या अत्यन्तमर्वाचीनत्वमवश्यमेवानुमन्तव्यम्।

शुक्लयजुस्सम्बन्धिनी बृहदारण्यकोपनिषदतिदीर्घा च्छान्दोग्यादितरासामुपनिषदां मध्ये प्रधानतमा च । सा च तत्र तत्र विप्रकीर्णतयाऽवस्थितैः नानाभागैः सङ्घटितेति तद्गतैरेव लिङ्गैरवधार्यते । तत्र षडध्यायास्त्रिभिः काण्डैः संविभक्ताः । तेषामन्तिमः काण्डः खिलकाण्ड इति साम्प्रदायिका व्याख्यातार एव सम्मन्यन्ते । अनुमन्यन्ते चैतदर्वाचीना विमर्शका. । एवं प्राथमिकौ काण्डावपि पूर्वं कदाचित् पृथगेव स्थिताविति शक्यमनुमातुम् । यतो हि काण्डद्वयेऽप्यभिन्नानुपूर्वीकैरेव वाक्यै. याज्ञवल्क्यस्य तद्भार्ययोश्चोपाख्यानमुपवर्ण्यते। तयोरेककृतित्वे ह्येकस्यैव

विषयस्योभयत्र प्रतिपादने नावकाशः । अपि चात्र काण्डद्वयेऽपि शतपथब्राह्मणीयदशमकाण्ड इव पृथक् ऋषिवंशानुक्रमणिका-प्रकटिता दृश्यते । एतदनुक्रमणिकाद्वयस्य विचारणायां तत्र मधुकाण्डाख्यः प्रथमो भागः याज्ञवल्क्यकाण्डाख्यो द्वितीयो भागश्च शुक्लयजुर्वेदीये शाखाद्वये नवपूरुषपर्यन्तमनुक्रमेण पृथ-गेवावतीर्णौ ततः पश्चादग्निवेश्यनाम्ना ऋषिणा तावेकीकृतौ चेत्य-वधार्यते । तृतीयः काण्डोऽभिनवविषयघटितत्वादत्यन्तमर्वाचीनः अपि च भूयः परीक्ष्यमाणे तस्मिन्ननुक्रमणिकाद्वये ब्राह्मणग्रन्थ-कर्तार उपनिषद्ग्रन्थकर्तृभ्योऽन्य एवाभूवन्नित्यध्यवसीयते ॥

तत्र प्रथमोऽध्यायः—आरोपविधयाऽश्वमेधस्य विश्वात्म-कत्वं व्याख्याय पश्चात् प्राणस्यात्मलिङ्गत्वमात्मनो जगद्योनित्वं चोपपाद्य अन्ते सर्वेषु भूतेष्वन्तर्यामितयाऽनुप्रविष्टे तत्तदात्मत्वेन प्रतिभासमाने ब्रह्मणि तेषां पराधीनत्वं वर्णयति । तत्र योऽयं देवतोपासनाविषयको विवादांशः स प्राचीनस्तर्क्यते । यस्मिन् काले जनैः देवतापेक्षया आत्मनः प्राधान्यमभ्युपगतं तस्मिन् काले प्रादुर्भावयोग्यत्वात् सोऽशः प्रागेवोत्पन्नो भवितुमर्हति । द्वितीयोऽध्यायः—आत्मनस्तदुत्पन्नयोः प्राणपुरुषयोश्च स्वरूपं निरूपयति ॥

द्वितीयस्मिन् काण्डे—आत्मविषयकाश्चत्वारो वादप्रति-वादाः समुपस्थापिताः । तत्र याज्ञवल्क्योऽनूचानतमः श्रूयते ।

तेषां प्रथमे वीरवादे (३-१-९)—याज्ञवल्क्यस्तत्सदस्यानां नवानां प्रवक्तॄणां मध्ये स्वस्य श्रेष्ठतां प्रतिज्ञाय समर्थयति । तत्र सिद्धान्तितानां विषयाणां मध्ये ब्रह्मणः प्रमाणागम्यत्वं ज्ञानगम्यत्वं च सिद्धान्त्यमानमत्यन्तमवधेयम् । द्वितीयो वादः जनकयाज्ञवल्क्यसंवादरूपः । तत्र—अन्यैः षड्भिः सदस्यैरुच्यमानानां षण्णां ब्रह्मलक्षणवाक्यानां ब्रह्मणो मनःप्राणाद्यभिन्नत्वादप्रयोजकत्वं निदर्शयन् याज्ञवल्क्यः अगृह्यत्वात् अशीर्यत्वात् असङ्गत्वात् अचलत्वाच्च ब्रह्माभिन्नस्यात्मनो नास्तित्वेनैव स्वीकर्तव्यतामाह ।

तृतीयोऽपि वादः (४-२-४) जनकयाज्ञवल्क्यसंवादरूपः । तत्र जाग्रत्स्वप्नसुपुत्याख्यावस्थात्रयगतस्यात्मनः, मृत्योः, पुनर्जन्मनः, मुक्तेश्च स्वरूपविशेषाः सोपपत्तिकं विचारिता । दृष्टान्तसौन्दर्येण दोषोद्भावनचातुर्येण कल्पनागाम्भीर्येण चायमंशो न केवलमुपनिषद्ग्रन्थानामेव किन्तु वैदिकलौकिकानां सर्वेषामपि संस्कृतग्रन्थानां धुरि कीर्तनमर्हति । तत्रापि तन्मध्यपतितानां पद्यभागानां रामणीयकमनिर्वचनीयमनुभवैकवेद्यं च । किन्तु त एते पद्यभागाः पश्चात्कालिकाः प्रतीयन्ते । स्वप्नावस्थागत आत्मा तत्रेत्थमुपवर्ण्यते—

प्राणेन रक्षन्नवरं कुलायं
बहिष्कुलायादमृतश्चरित्वा ।

न ईयतेऽमृतो यत्र कामं
हिरण्मयः पुरुष एकहंसः ॥ (४-३-१३)

स्वप्नान्त उच्चावचमीयमानो
रूपाणि देवः कुरुते बहूनि । (१४ पूर्वार्धम्)

ततः पश्चात् स्वप्नविवर्जित आत्मा वर्ण्यते—तद्यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ संलयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति (१९) । तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयं रूपं तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं तद्वा अस्यैतदाप्तकाममकामं रूपं शोकान्तरम् (२१) ॥

ये तावन्मुक्त्यनर्हा, तेषामात्मानमधिकृत्य ऋषिरेवमाह, यथा—मरणानुपदमेव तेषामात्मा लोकान्तरीययातनानुभवमन्तरैव तदीयज्ञानकर्मानुरोधेन नवीनं देहान्तरं प्रविशतीति ॥

तथा चोक्तं—तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्यात्मानमुपसंहरत्येवमेवायमात्मेदं शरीरं निहत्याऽविद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मानमुपसंहरति (४-४-३) । तद्यथा पेशस्करी पेशसो मात्रामुपादायाऽन्यन्नवतरं कल्याणतरं रूपं तनुत एवमेवायमात्मेदं शरीरं निहत्याऽविद्यां गमयित्वा-

ऽन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम् (४-४-४) ॥

ये तावदात्मानं ब्रह्माभिन्नं विदुः ते मुक्ता भवन्ति । तेषां जीवो ब्रह्मणि लीनो न पुनरावर्तते ब्रह्मैव भवतीत्याह— तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव (४-४-७) ॥

चतुर्थो वादः सर्वमिदं सन्यस्य वनं प्रतिष्ठासमानस्य याज्ञवल्क्यस्य तत्पत्न्या मैत्रेय्याश्च मिथः संवादः । अयमंशः पूर्वाध्यायगतस्य (२-४) मैत्रेयी-याज्ञवल्क्यसंवादस्य केवलमर्वाचीनं पाठान्तरमिति शक्यमवगन्तुं विविधैर्लिङ्गैः ॥

खिलात्मकस्य तृतीयकाण्डस्य प्रथमेऽध्यायेऽत्यल्पाः परस्परसम्बन्धरहिता भिन्नकालोत्पन्नाश्च पञ्चदश खण्डाः सङ्घटिताः । तृतीयोऽध्यायो दीर्घतरः पुनर्जन्मविषयप्रतिपादकत्वात् प्रधानभूतश्च । अयमंशश्छान्दोग्येऽप्युपलभ्यते । अत्रोपवर्णितानामाशयानां याज्ञवल्क्याशयापेक्षया विलक्षणत्वादयमंशोऽन्यस्यामेव वैदिकशाखायामाविर्भूतः सम्भाव्यते । स च पश्चात्काले तत्प्रतिपाद्यविषयगौरवानुरोधादत्र संयोजितः स्यात् । अत्रत्यं प्राथमिकं खण्डद्वयं च्छान्दोग्येऽप्युपलभ्यमानमुभयत्राप्येकदैव संयोजितं भवितुमर्हति ।

नैषा बृहत्येकैवोपनिषच्छुक्लयजुर्वेदीया किन्त्वन्यापि काचिदत्यल्पास्ति तदीया ईशोपनिषत्समाख्या । सा च केवलमष्टादश-

मन्त्रात्मिका । तस्यास्तन्नामधेयं तदारम्भकशब्दनिमित्तकम् । वाजसनेयसंहितायामप्येषा अन्तिमाध्यायत्वेन सन्निवेशिता दृश्यते । अथाप्येषा अत्यन्तमर्वाचीनेत्यवगन्तव्यम् । अत्रत्यविषयस्वभावविचारेऽस्या. काठकापेक्षयाऽर्वाचीनतरत्वं श्वेताश्वतरापेक्षया प्राचीनतरत्वं च प्रतिभासते । तस्मादेषा बृहदारण्यकीयपरिशिष्टभागसमकालिकीत्यभ्यूह. सुकर. । आत्माद्वैतज्ञानिन. तदज्ञानिनश्च तारतम्यप्रदर्शनमेव तत्र प्राधान्येनाधिकृतो विषय. । तत्प्रसङ्गाच्च सर्वे वेदान्तसिद्धान्ताः समुपस्थापिताः ॥

बहुसङ्ख्या उपनिषदोऽथर्ववेदीयत्वेन स्वीकृता समुपलभ्यन्ते । आहत्य सप्तविंशतिरुपनिषदस्तत्सम्बन्धिन्य इति केचिदाहु । भूयस्योऽथर्वोपनिषदः वैदिककालानन्तर पुराणकाले प्रादुर्भूता. । तत्रैका अल्लोपनिषत्समाख्या महम्मदीयमतप्रतिपादको ग्रन्थः । त्रयीसम्बन्धिन्य. सर्वा अप्युपनिषदस्तत्तच्छाखासम्बन्धभाजो भवन्ति । अत एव श्वेताश्वतरादिद्वित्रोपनिषद्वर्जमन्या. सर्वा अपि तत्तच्छाखानामधेयैरेवाहूयन्ते तत्तच्छाखीयब्राह्मणग्रन्थेष्वेव परिशिष्टरूपेण संयोज्यन्ते च । अथर्वोपनिषदस्तु माण्डूक्यजाबालादिद्वित्रोपनिषद्वर्जमन्याः सर्वा अपि न शाखासम्बन्धं भजन्ति । नापि तासां नामधेयानि तत्तच्छाखानामधेयसम्बन्धनिबन्धनानि किन्तु तत्तत्प्रतिपाद्यविषयानुरोधेन कृतानि । तासु प्राधान्येन प्रतिपाद्या विषयाः ईश्वरसद्भावः प्रच्छन्नवादः

यतिधर्म शैववैष्णवादिमतधर्मश्च । मन्यामहे तत्तन्नवीनधर्मावलम्बिभिः स्वकीयधर्माणामुपनिषन्मूलकत्वं सम्पादयद्भिरेता उपनिषदः प्रणीताः । नैताः प्रतिपाद्यविषयौचित्यादथर्ववेदीयत्वेनास्थिता. । किन्त्वथर्वानुयायिनी जनताऽथर्ववेदमुपनिषत्सनाथं कर्तुमिच्छन्ती त्रयीसम्बन्धरहितान् सर्वानप्युपनिषद्ग्रन्थानथर्ववेदसम्बन्धिनश्चकार । नैव तदात्वे त्रयीवाथर्ववेदो बाह्यवस्तुसम्पर्कान् परिरक्षितोऽभून् । अतस्तासां तत्सम्बन्धकल्पना सुकरैवासीन् ॥

अथर्वोपनिषत्प्रतिपाद्या विषयाः सर्वथैव परितोषं गता. । अत्र सर्वत्रापि प्राचीनानामर्वाचीनानां च भागानां सर्वानुगतत्वेनोपलम्भादेता उपनिषदः कालतः समाना अपि प्रतिपाद्यविषयभेदान् चतुर्धा वर्गीकर्तुं शक्याः । तत्र प्रथमवर्गीया साक्षादात्मतत्वं प्रतिपादयन्त्यो वेदान्तरीयोपनिषत्साम्यमर्हन्ति । प्रायेण तासां भाषाशैल्यपि तादृश्येव । द्वितीयवर्गीया उपनिषदः प्रधानभूतान् वेदान्तसिद्धान्तान सिद्धवत्कृत्य भाषमाणाः ओमित्येकाक्षरमूलकं योगमार्गं ब्रह्माधिगमोपायभूतमाचक्षते । एताः सर्वा अपि नियमेन पद्यबद्धा केवलमुपत्रिंशैर्मन्त्रैर्घटिता अल्पीयस्यः कृतय. । तृतीयवर्गीया सन्यासिनं सर्वोपनिषदभिमतप्रत्यक्षफलत्वेन वर्णयन्त्य सन्यासाश्रयणं कर्तव्यत्वेनोपदिशन्ति । एता अप्यल्पीयस्य एव किन्तु तत्र तत्र विरलतया पद्यसम्मिश्रिता अपि भूयसा गद्यबद्धाः । चतुर्थवर्गीयास्तु शैववैष्णवादिमतधर्मा-

नुपदिशन्त्य. ईशानमहेश्वरमहादेवादिशब्दैर्निर्दिश्यमानं विष्णु च आत्मसम्भूतमाहुः । तथा विविधान विष्णोरवतारानप्यात्मन एव सकाशान् पुरुषरूपेणोत्पन्नान कथयन्ति ॥

अथर्वोपनिषदां मध्ये सर्वविधान वेदान्तसिद्धान्तानुपस्थापयन्त्यौ मुण्डकप्रश्नोपनिषदौ ततः किञ्चिदवरा माण्डूक्योपनिषच्च । प्रधानभूताः । तत्र प्राथमिक्यौ द्वे उपनिषदौ सर्वप्रकारैः वेदान्तरीयोपनिषत्साजात्यं भजतः । तदीयानि वाक्यानि च पश्चात्कालिकवेदान्ताचार्याभ्यां भगवद्बादरायणशङ्करभगवत्पादाभ्यां बहुत्र प्रमाणतयोदाहृतानि । उभे एवैते प्राथमिक्यौ पारमार्थिक्यौ चोपनिषदौ । तत्र मुण्डकोपनिषत् मुण्डितमुण्डानां सन्यासिनां धर्मानुपदिशन्ती तन्नाम्नाऽऽहूयते । सैषा मुण्डकोपनिषत् सर्वैरपि सातिशयमादृता दृश्यते । नन्वस्या कुत ईदृशं प्राधान्यं, किं प्रतिपाद्यविषयाभिनवत्वकृतम? नेत्याह । अत्र हि भूयसा प्राचीनोपनिषद्गता एव विषया. प्रतिपाद्यन्ते । कुतस्तर्हि? प्राचीनोपनिषद्ग्रन्थोपवर्णितानामेव विषयाणां विशदगत्या यथायथं व्यवस्थापनात् तदीयभाषारीतेः परमरमणीयत्वाच्च तस्याः तादृशं प्राधान्यमित्यवधेहि । सैषा च्छान्दोग्योपनिषदं स्वपूर्वोत्पन्नामनुसरति । तथा बृहदारण्यक-काठकोपनिषदोऽप्येतत्पूर्वभाविन्य. सम्भाव्यन्ते । श्वेताश्वतरे बृहन्नारायणे चैतदीयानि वाक्यान्यनुसन्धीयन्ते । एवं चैषा च्छान्दोग्यादीनामुत्पत्तेः परं

श्वेताश्वतरादीनामुत्पत्तेः पूर्वं च क्वचिन्मध्यकाले प्रादुर्भूता भवितु-
मर्हति । अस्यां मुण्डकाख्यास्त्रयो भागाः सङ्घटिताः । तत्र प्रथमे
मुण्डके ब्रह्मज्ञानसम्पादनोपायः, द्वितीये ब्रह्मतत्वं, तृतीये ब्रह्मा-
धिगमप्रकारश्च प्रतिपाद्यते ॥

प्रश्नोपनिषत् गद्यबद्धा अथर्ववेदीयपिप्पलादशाखासम्ब-
न्धिनी च । तस्यास्तन्नामधेयं तत्प्रतिपाद्यानां विषयाणां प्रश्न-
प्रधानत्वादित्यवधेयम् । तत्र हि ब्रह्मनिष्ठाः षट् शिष्याः वेदान्त-
विषयकान् षट् प्रश्नानवतारयन्ति । ते च प्रश्नाः क्रमेण प्रजा-
पतेः सकाशात् प्रकृतिप्राणयोः सृष्टिं, इतरेन्द्रियापेक्षया प्राणस्य
प्राधान्यं, प्राणादीनां स्वरूपविभागौ, स्वप्नसुषुप्ती, ओङ्कारस्य ध्यानं,
मनुष्यस्य षोडश कलाश्च प्रकृत्य प्रवृत्ताः ॥

माण्डूक्योपनिषदत्यल्पा गद्यमयी च । श्रूयतेऽनभिज्ञाय-
मानविशेषवृत्तान्ता माण्डूक्याभिधाना ऋक्शाखा । तन्नाम्ना चेय-
माहूयते । मन्यामहेऽस्यास्तच्छाखासम्बन्धस्य अस्फुटत्वादियमथ-
र्वोपनिषदां मध्ये परिगणिता । प्रायेण वेदान्तरीयगद्योपनिषद्भिः
प्रतिपाद्यमाना एव विषया अत्राप्युपवर्ण्यन्ते । परन्तु तत्राव्यवस्थं
सङ्कुलीकृत्य वर्ण्यमाना विषयाः अत्र विशदविशदं व्यवस्थापिताः ।
एवं च तदपेक्षयाऽस्या अर्वाचीनत्वं सिद्धमेव । अपि चात्र
मैत्रायणोपनिषदुपवर्णितानां विषयाणामनुसन्धानादस्यास्तदपेक्षया-

ऽर्वाचीनत्वं ध्वन्यते। अथापि चतुर्थवर्गीयाणामथर्वोपनिषदामुत्पत्तेः पूर्वमेषा प्रादुर्भूतेत्यवश्यमेवाभ्युपगन्तव्यम् । यतो ह्यत्र ओङ्कारा-क्षरेऽवयवत्रयमात्रं निर्दिश्यते न तु सार्धत्रितयम् । सैषा चरा-चरात्मकं सर्वमिदं जगत् ओङ्कारप्रभवमाचष्टे । इदं तावदव-लोक्यमानमतीव विचित्रं यन्नैतदीयमेकमपि वाक्यं शङ्कराचार्यैः स्वग्रन्थेषु प्रमाणत्वेनोदाह्रियत इति । अथर्ववेदीया इतराः सर्वा अप्युपनिषदः सुदूरमिमामनुधावन्ति । अथापीयं न सर्वात्मना वेदान्तग्रन्थैर्बहिष्कृता । यतो हि वेदान्तसाराख्येऽर्वाचीने वेदान्त-ग्रन्थे सातिशयमेषा प्रमाणत्वेनोदाह्रियमाणा दृश्यते ॥

आस्तामेतत् । वेदान्ताचार्यैरुदाहृता अनुदाहृता वा भवतु । तावता न कापि हानिः । सर्वथापीयं प्रामाणिकैराचार्यैः परम-प्रमाणत्वेनाङ्गीकृतेत्यगच्छामः । यतो ह्येषा भारतवर्षीयवेदान्त-ग्रन्थशेखरायमाणस्य गौडपादकारिग्रन्थस्य मूलभूता दृश्यते । यो हि ग्रन्थः कारिकाशतद्वयघटितः चतुर्भिः प्रकरणैर्विभक्तः । तत्र प्रथमे प्रकरणे माण्डूक्योपनिषत् गर्भीकृता । कारिकाग्रन्थगतानि चत्वारि प्रकरणानि उपनिषच्चतुष्टयत्वेनाभिमतानि वेदान्तकारैः । तेन हि कारिकाग्रन्थस्य सुमहत् प्राधान्यमनुमतमिति व्यक्तमेव । तस्य च कारिकाग्रन्थस्य प्रणेता तत्रभवान् गौडपादाचार्यः, यस्य हि शिष्यः श्रीमान् गोविन्दाचार्यः प्रशिष्यश्च क्रिस्तो. परमष्टम-शताब्द्यामवतीर्णः परमहंसः श्रीशङ्कराचार्य । अत एव शङ्करा-

चार्यग्रन्थेषु विशेषत. कारिकाग्रन्थः परमप्रमाणत्वेनानुधाव्यमानो दृश्यते । वस्तुतः कारिकोक्तानां विषयाणां प्रतिष्ठापन एव शङ्कराचार्यस्योद्यम । भारतवर्षीयग्रन्थसमुदायप्रसिद्धौ अद्वैताजातिसिद्धान्तौ शर्मण्यदेशीयडायिमनाचार्योपपादितदिशा ग्रीकवेदान्तेऽप्युपलभ्येते ॥

गौडपादकारिकाग्रन्थस्य प्रथमप्रकरणं पद्यात्मतां प्रापिता केवला माण्डूक्योपनिषदेव । अवश्यानुस्मरणीयः कश्चिदर्थः प्रथमप्रकरणेऽत्र प्रतिपाद्यते । यथा—नैतज्जगन्मायामयं, नाप्येकस्माद्वस्तुनो विवृत्तं, किन्तु यथा पतङ्गस्य मयूखाः स्वयमभिन्नरूपाः पतङ्गान्न भिद्यन्ते तथैव विश्वमिदं ब्रह्मणः स्वभाव एवेत्युक्तं श्रूयते । इतराणि च प्रकरणानि माण्डूक्योपनिषद्बहिर्भूतानेव विषयान् प्रतिपादयन्ति, क्वचित् तदीयसिद्धान्ताननतिवर्तन्ते च । तथा ह्यत्र जगत्सत्यत्ववाद निराकृत्य तस्य वैतथ्यं सिद्धान्त्यते । अत एवेदं वैतथ्यप्रकरणमिति समाख्यायते । यथा हि मन्दान्धकारे रज्जौ सर्पभ्रान्तिरुदेति तथाऽविद्यान्धकारबलादात्मा प्रपञ्चत्वेन गृह्यत इत्युक्तम् । अपि चात्मनस्तत्तल्लौकिकाकारेण ग्रहणमप्यपारमार्थिकं तादृशज्ञानानां तत्तल्लौकिकज्ञानमूलकत्वात् आत्मनश्चालौकिकत्वेन तज्ज्ञानस्य लौकिकज्ञानविलक्षणत्वादित्यपि द्वितीयेऽस्मिन् प्रकरणे प्रतिपाद्यते ॥

तृतीयमद्वैतप्रकरणमित्युच्यते । अत्र चाकाशघटावच्छिन्नाकाशयोर्दृष्टान्तेन परमात्मजीवात्मनोरद्वैतं साध्यते । अपि चाय माचार्य· द्वैतवादं जगज्जन्मवादं च खण्डयन् प्रकरणेऽस्मिन् नानेकमेकस्माद्वस्तुन· तत्स्वभावविरुद्धं वस्तुजातमुत्पत्तुमर्हतीति मन्वान. जगज्जन्मवादिनमनुयुङ्क्ते—किं सतो जन्म आहोस्विदसत. ? इति । ननु तावता को विशेष ? अस्त्येवायं विशेषः श्रूयतां—सतो जन्मेति नोपपद्यते, यदि हि सतो जायते तर्हि सदेव जायेत, स्थितस्यैव जन्मेत्यनवस्था प्रसज्येत । यद्यसत उत्पत्तिरिष्यते तर्ह्यसदेवोत्पद्येत । असदुत्पत्तिवचनं च वन्ध्यापुत्रवचनतुल्यं स्यात् । तस्मादुभयथापि जगज्जन्मवादो नोपपद्यत इति प्रतिपादयति । चतुर्थमलातशान्तिप्रकरणम् । तन्नामधेयं च तस्य द्वैतादिभ्रमोत्पत्तावलातस्य दृष्टान्तकरणात् सिद्धम् । तच्छान्तिरलातशान्तिर्भ्रमनिवृत्तिश्चेत्यर्थ· । यथा ह्येकस्मिन्नग्रे दीप्यमानः कश्चिदलातः स्पन्दमानः ऋजुत्ववक्रत्वाद्यवस्थापन्न इव दृश्यते तथा द्वैतादिप्रतिभासोऽपि । तत्र यथाऽलाताग्नितरङ्गो विज्ञान एव न तु वस्तुनि तथा द्वैतादिभ्रान्तिरपि केवलं विज्ञान एव न तु वस्तुनि, वस्तु पुनरेकमेवाद्वितीयमिति चतुर्थप्रकरणोद्देश. ॥



## नवमोऽध्यायः ॥

## सूत्रग्रन्थाः ॥

(क्रिस्तोः पूर्वं ५००—२००)

यथा ब्राह्मणग्रन्थसमुदायोपक्षिप्तं ज्ञानकाण्डं प्रपञ्चयन्त उपनिषद्ग्रन्था. श्रुतित्वेन प्रतिपन्नाः, तथा तदुपदिष्टं कर्मकाण्डं प्रतिपादयन्तः श्रौतसूत्रग्रन्थाः यद्यपि न श्रुतित्वेन तथापि श्रुत्यङ्गत्वेनाङ्गीकृता. । ननु कस्मादेषां न श्रुतित्वमङ्गीकृतमिति चेत्—ब्राह्मणग्रन्थोपवर्णितानामेव विषयाणां शिष्टाचारक्रमावलम्बेन व्यवस्थामात्रस्य करणादेते ग्रन्थाः पौरुषेयत्वेनाधिगता. । तस्मादपौरुषेयग्रन्थसाधारणं श्रुतित्वमेषां नाभ्युपगतमित्यवधेयम् । तत्र प्राचीनतमा सूत्रग्रन्थाः बुद्धमताविर्भावकालिकाः प्रतिभासन्ते । सम्भाव्यते चैतद्यत्—आस्तिकधर्मप्रतिद्वन्द्विभावमवलम्बमानस्य तन्मतस्य प्रादुर्भावेनोद्बोधितै. आस्तिकाग्रेसरै. परम्पराधिगतस्य परमधर्मस्य परिपालनार्थं विषयाणां व्यवस्थापनेन विशदीकरणायैते सूत्रग्रन्थाः प्राणायिषतेति । गुणैकपक्षपातिनो बौद्धास्तु मततत्वाविष्करणाय सूत्रशैली साधीयसी मन्यमानास्तामाद्रियन्तेत्यवगच्छामः । यतो ह्यादिमा. पालीग्रन्थाः सर्वे सूत्ररूपाः समुप-

लभ्यन्ते । ननु कल्पसूत्रमिति कोऽर्थः ? उच्यते । कल्पसूत्रमिति तत्तच्छाखीयानां श्रौतगृह्यधर्मसूत्राणां सामान्यसंज्ञा । तेन कल्पसूत्रस्य श्रौतसूत्रं गृह्यसूत्रं धर्मसूत्रमिति त्रीण्यङ्गानि भवन्ति । सम्प्रत्युपलभ्यमानानां कल्पसूत्राणां श्रौतसूत्राण्येव परिपुष्टान्यङ्गानि ॥

शाङ्खायनाश्वलायनाख्यचरणद्वयभाजौ श्रौतसूत्रग्रन्थौ ऋग्वेदीयौ । तत्र शाङ्खायनाः पश्चात्काले गुर्जरदेशस्योत्तरभागं, आश्वलायनाः कृष्णागोदावर्योरन्तरालवर्तिनं दक्षिणदेशं चाध्यवात्सुः । अनयो श्रौतसूत्रयोः क्रियाविधयः सर्वे प्रायेण समानयैव रीत्या प्रतिपादिताः । किन्तु शाङ्खायनश्रौतसूत्रे राजानुष्ठेया केचिन्महायागाः कियदिव विस्तरेणोपपाद्यन्ते । अपि चेदं शाङ्खायनश्रौतसूत्रं शब्दतोऽर्थतश्च शाङ्खायनब्राह्मणानुविधायित्वादाश्वलायनश्रौतसूत्रापेक्षया प्राचीनतरमनुमीयते । तच्चाष्टादशभिः काण्डैर्घटितम् । तत्रान्तिमं काण्डद्वयं पश्चात्काले संयोजितं कौषीतकारण्यकस्य प्राथमिकेन काण्डद्वयेन सह संवादमर्हति । द्वादशभिः काण्डैर्घटितमाश्वलायनश्रौतसूत्रमैतरेयब्राह्मणसापेक्षम् । अपि चाश्वलानोऽयमैतेरयारण्यकचतुर्थकाण्डस्य कर्तृत्वेन शौनकाचार्यस्य शिष्यत्वेन च श्रूयते ॥

सामवेदीयास्त्रयः श्रौतसूत्रग्रन्थाः साम्प्रतमुपलभ्यन्ते । तेषु प्राचीनतमं आर्षेयकल्पापरनामकं मशकश्रौतसूत्रं पञ्चविंशब्राह्मण-

ग्रन्थाश्रितक्रमानुरोधेन सोमयागीयानि कर्माणि व्यवस्थापयति । अपरं लाट्यायनश्रौतसूत्रं कौथुमैः प्रमाणत्वेन स्वीकृतम् । इदमपि मशकसूत्रवत् पञ्चविंशब्राह्मणस्य शेष. । तृतीयं द्राह्यायणश्रौतसूत्रं लाट्यायनश्रौतसूत्रवदेश्यं सामवेदीयराणायनिशाखासम्बद्धम् ॥

कात्यायनश्रौतसूत्रं शुक्लयजुर्वेदीयम् । षड्विंशत्याऽध्यायैर्घटितोऽयं ग्रन्थ. शतपथब्राह्मणोपवर्णितां क्रियामनुवर्णयति । तत्र तु द्वाविंशादारभ्य चतुर्विंशपर्यन्तास्त्रयोऽध्यायाः सामवेदसम्बद्धान् कर्मविशेषान् प्रतिपादयन्तीत्यवधेयम् । एतदीयभाषाशैल्याः क्लिष्टत्वादयं ग्रन्थ॰ सूत्रङ्ख्यावसाने निष्पन्नस्तर्क्यते ॥

कृष्णयजुर्वेदीयाः षट् श्रौतसूत्रग्रन्थाः सम्प्रत्यधिगम्यन्ते । तेषु चत्वारः पश्चात्काले सूत्रभेदात् चरणचतुष्टयत्वेन भिन्नायाः समानाध्ययनायाः तैत्तिरीयशाखायाः सम्बन्धिनो ये चत्वारः कल्पसूत्रग्रन्थास्तेषामङ्गभूताः समानरूपाः समुपलभ्यन्ते । तथा हि—तेषामापस्तम्बश्रौतसूत्रं त्रिंशत्प्रश्नात्मके तदीये कल्पसूत्रे प्राथमिकचतुर्विंशतिप्रश्नात्मकत्वेन, आपस्तम्बावान्तरशाखावलम्बि हिरण्यकेशिश्रौतसूत्रमेकोनत्रिंशदध्यात्मके तदीये कल्पसूत्रे प्राथमिकाष्टादशाध्यायात्मकत्वेन च निबद्धम् । तैत्तिरीयशाखासम्बद्धमपरं श्रौतसूत्रद्वयं बौधायनं भारद्वाजीयं च ॥

अन्ययोर्द्वयोर्मध्ये मानवीयं श्रौतसूत्रं मैत्रायणसंहिताङ्गभूतम् । ये खलु मानवाः मैत्रायणानामङ्गभूताः मनुधर्मशास्त्र-

सिद्धान्तानामङ्कुरभूतमय सम्भाव्यन्ते । श्रौतसूत्रमिदं प्राचीनतमेष्वन्यतमम् । यजुर्वेदीयब्राह्मणभाग इवात्रापि प्ररोचनार्थाः स्तुतय. सम्भवन्ति । परन्त्वत्र यज्ञक्रिया. परं स्तूयन्ते, न तु यजुर्वेदीयब्राह्मणभागवदुपाख्यानानि विषयान्तराणि वा प्रस्तूयन्ते । अपरं वैखानसश्रौतसूत्रम् । तदपि कृष्णयजुर्वेदीयं वेदितव्यम् ॥

वैतानसूत्रमथर्ववेदीयं श्रौतसूत्रम् । नैतत् प्राचीनं नाप्यपूर्वविषयम् । किन्त्वथर्ववेदमपि श्रौतसूत्रात्मकेनाङ्गेन योजयितुमेतत् पश्चात्काले प्रणीतम् । तस्य च तदारम्भकशब्दं निमित्तीकृत्य वैतानसूत्रमिति नामधेयं प्रवृत्तं, न तु वितानसम्बन्धं निमित्तीकृत्य, तथा हि सति वितानसम्बन्धस्य श्रौतसूत्रत्वावच्छेदेनानुगतत्वादेतद्व्यावृत्त्ययोगादित्यवधेयम् । तदिदं वैतानसूत्रमंशतः शुक्लयजुर्वेदीयं कात्यायनसूत्रमनुकुर्वदपि गोपथब्राह्मणेन सह बंहीयः साजात्यमर्हति । यदुक्तमस्माभिः सूत्रग्रन्थोऽयमत्यन्तमर्वाचीन इति तदत्यन्तमेव साधीयः । सर्वाणि हि श्रौतसूत्राणि गृह्यसूत्रैरनुमन्धीयन्ते । इह तु प्रातिलोम्येन गृह्यसूत्रं श्रौतसूत्रेणानुबध्यते । एतेन हि तस्य तदीयगृह्यसूत्रादप्यर्वाचीनत्वं ज्ञायते ॥

यद्यप्यमी श्रौतसूत्रग्रन्थाः कर्मठानां सरसाः सप्रयोजनाश्च भवन्ति तथापि साहितीरसिकानामेते निर्गन्धकुसुमकल्पाः

कल्पन्ते । अतः साहित्यविचारप्रसङ्गेऽत्र तत्प्रतिपाद्यानां विषयाणां विस्तरेण वर्णनमस्माकमनौचितीं ब्रूयात् । तदिह तान् सङ्ग्रहेण निरूपयामः। तत्र तावदिदमवधेयं यन्नैतानि कर्माणि सन्ध्योपासनादिवत् सर्वैरनुष्ठेयानि किन्तु तत्तत्फलविशेषकामैरेवेति । नाप्येतानि यजमानै. स्वयं कर्तव्यानि किन्तु ऋत्विग्भिः कारयितव्यानि । तत्तत्क्रियामहत्वानुरोधेन यथायथमेकादिकाः षोडशपरा ब्रह्मादय. ऋत्विजः व्रियन्ते । यज्ञार्थं परिष्कृतामास्तीर्णदर्भां वेदीं परितः क्लृप्तधिष्ण्यास्त्रयोऽग्नय. प्रधानाङ्गानि भवन्ति । अतो यज्ञेषु प्राथमिकं कर्म अग्न्याधेयम् । अग्न्याधेयं नाम यजमानतत्पत्नीभ्यामविलोपेन रक्षणीयानामग्नीनां मथनम् ॥

श्रौतसूत्रप्रतिपाद्याश्चतुर्दशविधा. क्रियाः सप्त *हविस्संस्था सप्त सोमसंस्थाश्चेति द्वेधा विभक्तुं शक्या. । अत्र संस्थाद्वयेऽप्यङ्गभूता विविधाः पशुयागा अनुशिष्टाः । हविर्यज्ञेषु प्राधान्येन पयोदध्याज्यव्रीह्यपूपादीनि हविर्द्रव्याणि । तत्र प्रधानभूतो हविर्यज्ञः अग्निहोत्राख्यः प्रत्यहं सायम्प्रातरनुष्ठेयः । तत्र त्रेतायां पयो हूयते । अन्ये प्रधानभूता हविर्यज्ञा. दर्शपूर्णमासौ चातुर्मास्यानि

---

* अग्न्याधान, अग्निहोत्र, दर्शपूर्णमासौ, चातुर्मास्यानि, आग्रयणेष्टिः, निरूढपशुबन्धः, सौत्रमणीत्येताः सप्तहविस्संस्थाः, अग्निष्टोम, उक्थ्य, षोडशी, वाजपेय, अतिरात्र., अप्तोर्याम इत्येता. सप्त सोमसंस्थाश्च विज्ञेया ॥

च । अन्येऽपि विविधा अङ्गयागा विकृतियागाश्च तत्तत्कालविशेषे तत्तत्फलोद्देशेनानुष्ठीयमानाः सन्ति ॥

सोमयागाः सुतरामेव सङ्कुलीभूता. । तेष्वत्यल्पः प्रकृतिभूतः अग्निष्टोमयागोऽपि षोडशसङ्ख्यानामृत्विजामवधानमपेक्षते । स चैकाहसाध्यः । तस्मिन् दिने प्राधान्येन कर्तव्यं कर्म प्रातर्मध्याह्ने सायमिति त्रिः सोमस्य सवनम । किन्तु दीक्षणीयेष्ट्यादयोऽङ्गक्रियाः तत्पूर्वदिवसेऽनुष्ठीयन्ते । अन्ये सर्वे सोमयागाः द्वादशाहादिपर्यन्तव्यापित्वान् कृच्छ्रसाध्या । तत्रापि सत्राभिधाना यागा एकानेकवार्षिकाः श्रूयन्ते ॥

अन्यः कश्चिदग्निचयनाख्य एकाहसाध्य. कर्मविशेषः सोमयागाङ्गभूतः । स च पञ्चपशुयज्ञपूर्वकमारभ्यते । तदनन्तरमेकवत्सरपर्यन्तमग्निसंरक्षणोपयुक्ताया उखाया सम्भरणम । तदर्थमतिदीर्घः काल उपयुज्यते । तत्रोखोपादानभूतासु मृत्सु कृष्णाजिनलोमादिसम्मिश्रणं, तदीयप्रमाणाकृतिविशेषौ च प्रकृत्य सविस्तरा विधयः श्रूयन्ते । अन्ततः तस्या वह्नौ त्यागोऽपि विहितः । उखानिर्माणानन्तरं विभिन्नाकृतीनां तत्तदिष्टकानां चयनेन पञ्चचितीका वेदिः क्रियते । तत्र पञ्चानां मध्येऽधस्तन्यां चितौ १९५० इष्टकाः सङ्घटनीयाः । आहत्य तदपेक्षितानामिष्टकानां सङ्ख्या १०८०० । तत्र बहूनामिष्टकानां पृथङ्नामानि फलानि च श्रूयन्ते । इष्टकाश्च सङ्कुलीभूतैः ऋग्विग्गणैः यथा-

विधि मन्त्रोच्चारणपूर्वकं तत्तदङ्गक्रियानुष्ठानपूर्वकं च सङ्घटनीयाः। इत्थमस्माभिः श्रौतकर्मणां प्रधानभूताः केचिद्विषया. परमुदाहृताः। त एते, मन्यामहे, यज्ञकर्मणां सङ्कुलीभूतत्वं अल्पीयसामपि क्रियांशानां प्रयोजनवत्त्वं च बोधयितुं पर्याप्स्यन्ति। क्वनु खलूपलभ्यते भारतवर्षादन्यत्रेदृशी क्रियासरणिः॥

ब्राह्मणग्रन्थेषु गृह्यकर्मणामप्रतिपादनात् गृह्यसूत्रकारैः सम्प्रदायागताः शिष्टाचारा एव प्रमाणीकर्तव्या अभूवन्। त एते गृह्यसूत्रग्रन्था श्रौतसूत्रग्रन्थप्रतिपादितान् विषयान् शश्वदनुसन्दधानास्तदपेक्षयाऽर्वाचीनतरा भवन्ति॥

तत्र ऋग्वेदीयं शाङ्खायनगृह्यसूत्रम्। तच्चेदानीं षट्काण्डात्मकं दृश्यते। परन्त्विदं प्रथमतः चतुष्काण्डमात्रात्मकं बभूवेत्यवगम्यते। तस्यां चतुष्काण्ड्यामपि बहवो भागाः पश्चात्काले प्रक्षिप्ताः संलक्ष्यन्ते। एतत्सजातीयमन्यत् गृह्यसूत्र कौषीतकिशाखीयं शाम्बव्यविरचितम्। न चात्र प्राचुर्येण शाङ्खायनगृह्यसूत्रीयवाक्यानामुपलम्भादस्य तदभिन्नत्वं शङ्कनीयमुभयोर्वैलक्षण्यदर्शनात्। तथा हि शाङ्खायनगृह्यसूत्रीयमान्तिमं काण्डद्वयमितो विभिन्नमेव। अपि च तत्र तृतीयतुरीयकाण्डयोः प्रतिपाद्यमाना बहवः क्रियाविशेषाः न शाम्बव्यसूत्रे प्रतिपाद्यन्ते। किञ्चात्र विशेषतः प्रतिपाद्यमानः पितृयज्ञविषयकः क्रियाविशेषः नोपलभ्यते शाङ्खायनसूत्रे। इत्थमन्वयव्यतिरेकाभ्यां वैलक्षण्यदर्शनात्

तयोरेकत्वशङ्का परास्ता । आश्वलायनगृह्यसूत्रमैतरेयब्राह्मणाङ्गभूतम् । तच्च तदीयश्रौतसूत्रस्य अनुबन्धात्मकमिति तदुपक्रमसूत्रादेवावधार्यते । काण्डचतुष्टयात्मकोऽयं सूत्रग्रन्थः तदीय. श्रौतसूत्रग्रन्थ इव 'नमः शौनकाय' इति शौनकनमस्कारपूर्वकमुपसंह्रियते ॥

गोभिलगृह्यसूत्रं सामवेदीयम् । तच्च परिपुष्टं प्राचीनतमेष्वन्यतमं गृह्यसूत्रग्रन्थेष्वभ्यर्हिततमं च भवति । तदेतन् गृह्यसूत्रं सामवेदीयेन शाखाद्वयेनापि प्रमाणीकृतमवगम्यते । सूत्रग्रन्थोऽयं न केवल सामवेदमेव किन्तु मन्त्रब्राह्मणग्रन्थमपि स्वस्मात् प्राचीनतरमवधारयति । मन्त्रब्राह्मणग्रन्थः क्रियाक्रमानुरोधेन मन्त्रान् व्यवस्थापयति । तद्गताश्च साममन्त्रवर्जमन्ये बहवो मन्त्राः गृह्यसूत्रेऽस्मिन् बहुत्रोदाह्रियन्ते । खादिरगृह्यसूत्रं द्राह्यायणशाखीयं सामवेदीयराणायनिशाखीयैः प्रमाणत्वेनादृतं च । तच्च गोभिलसूत्रादपि संक्षिप्ततरम् ॥

पारस्करगृह्यसूत्र शुक्लयजुर्वेदीयम् । एतदेव कात्यायनगृह्यसूत्रम् वाजसनेयगृह्यसूत्रमिति चोच्यते । सूत्रग्रन्थस्यास्य कात्यायनश्रौतसूत्रेण सह सम्बन्धो बलवत्तरः । अत एवासौ श्रौतग्रन्थः कर्तृनामनिर्देशपूर्वकं गृह्यसूत्रेऽस्मिन्ननुसन्धीयते । पारस्करीयं गृह्यसूत्रमेवावष्टभ्य अर्वाचीना याज्ञवल्क्यस्मृतिः प्रवृत्ता ॥

सप्तसङ्ख्याकानि गृह्यसूत्राणि कृष्णयजुर्वेदीयान्युपलभ्यन्ते। तत्रादिममापस्तम्बसूत्रम्। तच्च तदीये श्रौतसूत्रग्रन्थे षड्विंशसप्तविंशाध्याययोर्निबद्धम्। तयोर्मध्ये प्रथमोऽध्यायः क्रियोपयोगार्हान् मन्त्रान् व्यवस्थापयति। द्वितीयोऽध्यायः परं क्रियाप्रतिपादकत्वान् गृह्यसूत्रव्यपदेशयोग्यः। तत्र मन्त्रपाठाध्यायो द्वितीयस्मिन्नध्यायेऽनुसन्धीयमानत्वान् प्राचीनतरः। हिरण्यकेशिकल्पसूत्रस्थावेकोनविंशो विंशश्चेति द्वावध्यायौ हिरण्यकेशिगृह्यसूत्रम्। अन्यत् बौधायनगृह्यसूत्रम्। न तदधिकृत्य कश्चिद्विशेषो ज्ञायते। अपरं भारद्वाजगृह्यसूत्रम्। तदधिकृत्य न किमपि जानीमः। अन्यत् मानवगृह्यसूत्रम्। तच्च तदीयं श्रौतसूत्रमनुयाति। अत एव बाहुल्येन तदीयानि वाक्यान्यत्र प्रमाणत्वेनोदाहृतानि। गृह्यसूत्रान्तरेष्वनुपदिष्टा विनायकानामुपासना गृह्यसूत्रेऽस्मिन् विशेषतः प्रतिपाद्यते। तदिदं वाक्यं याज्ञवल्क्यस्मृतौ श्लोकरूपेणोपलभ्यमानं चतुर्णां विनायकानामेकत्वमङ्गीकृत्य तं गणेशशब्देन निर्दिशति। अन्यत् काठकगृह्यसूत्रम्। तच्च शब्दतोऽर्थतश्च मानवगृह्यसूत्रमनुधावति। विष्णुस्मृत्या च सम्बन्धं भजति। अपरं वैखानसगृह्यसूत्रमतिविशालमत्यर्वाचीनं केवलं गृह्यसूत्रपरिशिष्टात्मकं च भवति॥

कौशिकगृह्यसूत्रमथर्ववेदीयं प्रधानभूतम्। सूत्रग्रन्थेऽस्मिन् न केवलं प्रधानभूतानि गृह्याण्येव किन्तु तद्वेदप्रतिपाद्यानि बहू-

न्याभिचारिकाण्यपि कर्माणि वर्ण्यन्ते । अभिचारकर्माण्यतिशयेन परामृशन्नयं ग्रन्थः वेदान्तरीयगृह्यसूत्रग्रन्थेष्वदृष्टान बहूनभिनवान विषयानुपस्थापयतीत्यवधेयम् । ग्रन्थोऽयं चतुपञ्चानां कृतीनां सङ्घटनेन सम्पादितः । सोऽयं सूत्रग्रन्थोऽथर्ववेदसहित वैदिकभारतीयानां लोकयात्राप्रकारविशेषं साकल्येन बोधयितुं प्रभविष्यति ॥

सर्वेऽप्यमी गृह्यसूत्रग्रन्था जातकर्मादिश्मशानान्तानि गृह्याणि कर्माणि प्रतिपादयन्ति । यानि खलु आवसथ्याग्निना वैवाहिकाग्निना वा साध्यानि न तु श्रौतक्रियापेक्षितेन वैतानाग्निना । आहत्य गृह्यसूत्रेपु चत्वारिंशत संस्काराः प्रतिपाद्यन्ते । तत्र गर्भाधानमारभ्य विवाहपर्यन्ता अष्टादश संस्काराः शरीरसंस्कारत्वेनाभिमताः । अवशिष्टा द्वाविंशतिः संस्काराः यज्ञरूपाः । तत्र प्रत्यहमनुष्ठेयाः पञ्च महायज्ञाः त्रयः पाकयज्ञाश्च गृह्याण्येव कर्माणि । इतरे चतुर्दश यज्ञाः केवलं श्रौतकर्माण्येव ॥

तत्रादिमः पुत्रप्रजासिद्ध्यर्थं क्रियमाणः पुंसवनाख्यः संस्कारः । तस्मिंश्च संस्कारे प्राधान्येनानुष्ठीयमानं कर्म भार्यायाः दक्षिणे नासिकारन्ध्रे न्यग्रोधशुङ्गारससेचनम् । जातकर्मानन्तरमनुष्ठेयः संस्कारो नामकरणम् । तच्च दशमेऽहनि कर्तव्यत्वेन विहितम् । तत्र नामद्वयं कर्तव्यं विधीयते । एकं गुप्तनाम ।

तच्च पित्रोरेव ज्ञातव्यम् । अन्येषां तन्नामापरिज्ञानात् अभिचाराद्य-सिद्धिस्तत्फलम् । अन्यन्नामव्यावहारिकं सर्ववेद्यम् । तानि च नामानि युग्माक्षराणि मृद्वक्षरादीनि यण्मध्यानि च कर्तव्यानी-त्यादयो नियमा बहवः सन्ति । तानि च शर्मान्तानि ब्राह्मणस्य वर्मान्तानि क्षत्रियस्य गुप्तान्तानि वैश्यस्य च क्रियन्ते । तदनु तृतीये वर्षे चूडाकरणाख्य. संस्कारः । तत्र यथागोत्रस्थिति बालकस्य मूर्धन्येकामनेकां वा चूडां विधायावशिष्टस्य केशस्य खण्डनं क्रियते । षोडशे वर्षे गोदानाख्य' संस्कार. । अत्र कर्मणि गोमिथुनस्य दक्षिणात्वेन दानात् तस्य तथाभिधानमित्य-वधेयम् ॥

बाल्यसंस्काराणामुपनयनाख्य. सस्कार एव सर्वप्रधान. । उपनयनं नाम आचार्यस्य समीपे प्रापणमित्यर्थः । आगर्भाष्टमा-ब्दमा च षोडशाद्वर्षात् ब्राह्मणस्योपनयनकालः । क्षत्रियवैश्ययो-रेकादशे द्वादशे च वर्षे कर्तव्यः । तदत्यये च यथाक्रमं द्वावि-शात् चतुर्विंशाच्च वर्षात् पूर्वं कर्तुं शक्यः । उपनयनक्रियायां प्राधान्येनानुष्ठीयमानं कर्म वटुना दण्डग्रहणं मेखलाजिनबन्धनं ब्रह्मसूत्रधारणं च । तत्र ब्रह्मसूत्रं वामबाहोरधस्ताल्लम्बयित्वा शिरः प्रवेश्य वामस्कन्धे ध्रियते । ब्राह्मणादिजातिभेदं निमित्तीकृत्य दण्डो विभिन्नवृक्षसम्बन्धी विहितः । मेखलापि विभिन्नवस्तुका श्रूयते । ब्रह्मसूत्रं त्रैवर्णिकानामार्याणां बाह्यं चिह्नम् । यद्धारणेन

वटुः द्वितीयं जन्म प्रपन्नत्वेनास्थीयते । द्विज इति च व्यपदिश्यते । उपनयनस्य पार्यन्तिकं प्रयोजनं वेदाध्ययनाधिकारसिद्धिः सावित्रीमन्त्रोच्चारणयोग्यतासिद्धिश्च । तत्र यः कुमारं ब्राह्मणमुपनीय वेदमध्यापयति स आचार्यस्तस्य विद्याप्रदातृत्वान् पितृत्वेन भगवती सावित्री मातृत्वेन च निर्दिश्यते ॥

अद्यापि भारतभूमावुपनयनसंस्कारः सातिशयं प्रचरति । सोऽयं संस्कारोऽत्यन्तं प्राकालिकः प्रतीयते । तथा हि पञ्चदशे वर्षे बालकानां सोरोस्त्रियजातिप्रवेशयोग्यतासिद्ध्यर्थमनुष्ठीयमान एवंविध' ब्रह्मसूत्रधारणपूर्वकः संस्कारविशेषोऽवस्तीयक्रियाभरणौ दृश्यते । एवं च तस्य इण्डो ऐरेणिकालिकत्वमसन्दिग्धम् । अपि च सर्वत्र जगति प्राक्तनजनतासु बाल्यावस्थानन्तरभाविनि अभिनववयस्समारम्भे द्वितीयजन्मापादकत्वेन सङ्कलिपतस्य संस्कारविशेषस्य प्रचलितत्वावगमात् भारतीयैर्द्विजैः वेदाध्ययनाङ्गत्वेन कल्पितोऽयमुपनयनसंकारः इण्डो-ऐरेणियकालादपि प्रागारब्धोऽध्यवसीयते ॥

अध्ययनेन गुरुकुले निवसतां वटूनामिन्धनानयनं सायम्प्रातः सन्ध्योपासनं भिक्षाटनं स्थण्डिलशयनं गुरुशुश्रूषणं इत्यादयो बहवः कर्मनियमाः सन्ति ॥

द्वादश वर्षान् वेदग्रहणान्तं वा गुरुकुले ब्रह्मचर्यं चरित्वा ततः प्रतिनिवृत्तेन समावर्तनाख्यः संस्कारोऽनुष्ठेयः । तत्र प्रधान-

भूतं कर्म स्नानम् । तच्च तस्य ब्रह्मचर्यप्रक्षालनोद्देशेन क्रियते । तेन स स्नातकाख्यो भवति । तदनु गृहस्थाश्रमं प्रविविक्षता विवाहसंस्कारोऽनुष्ठीयते । संस्कारस्यास्य प्रधानभूताः क्रिया-विशेषाः इण्डो-यौरोपकालादारब्धाः । त एते वैवाहिकाः क्रिया-विशेषा अभिचारक्रियास्वन्तर्भावमर्हन्ति न तु यज्ञक्रियासु । तत्र वरेण वध्वाः पाणौ ग्रहणेन तस्यास्तदायत्तीभावो व्यज्यते । अश्मनि तस्याः पादारोपणेन अश्मन इव तस्याः स्थैर्योपादन-मुद्दिष्टम् । श्रूयते ह्यश्मेव त्वं स्थिरा भवेति । अपि च भर्त्रा सह तस्याः सप्तपदीक्रमणेन होमावशिष्टस्य हविषः सहभोजनेन च तयोः दृढतरसख्यानुरागावुद्दिष्टौ । किञ्च पतिगृहं प्रेष्यमाणा सा लोहिते बलीवर्दचर्मण्युपवेश्यते, तस्या उत्सङ्गे जीवत्पुमपत्यायाः कस्याश्चित् पुत्रश्च निवेश्यते । तेन तस्याः सर्वसम्पत्समृद्धिः पुम्प्रजासिद्धिश्चाशास्यमानाऽभिव्यज्यते । वैवाहिक्यां क्रियायां प्रधानदेवताऽग्निः । वरस्तत्र वधूं पाणौ गृहीत्वा त्रिरग्निं परितो नयति । अत एव विवाहः परिणयशब्देनोच्यते । वैवाहिकोऽय-मग्निः दम्पतिभ्यां यावज्जीवं रक्षणीयः । तस्मिन्नग्नौ मन्त्रोच्चारण-पूर्वकं हवींषि प्रक्षिप्यन्ते । अथास्तमित आदित्ये वरो वध्वै ध्रुव-मरुन्धतीं च दर्शयति । तेन वधूवरयोः अवियुक्तं सहावस्थान-मभिसंहितम् । तानीमानि सूत्रग्रन्थोपदिष्टानि वैवाहिकानि कर्मा-ण्यद्यत्वेऽपि भारतीयैरनुष्ठीयन्ते ॥

उपर्युक्ताः सर्व एव संस्काराः पुंसामेव न तु स्त्रीणाम् । विवाहः परं स्त्रीणामपि विहितः । तेषु प्रधानभूता उपद्वादशा. संस्काराः सम्प्रत्यपि भारतवर्षेऽनुष्ठीयन्ते । तत्रोपनयनविवाहौ प्रधानभूतौ । गुरुकुलवासादयः केचिन्नियमास्तु ग्रन्थमात्रावशिष्टा दृश्यन्ते ॥

गृहस्थेन कर्तव्यानां कर्मणां मध्ये प्रधानभूताः ब्रह्मयज्ञ देवयज्ञ-पितृयज्ञ-भूतयज्ञ-मनुष्ययज्ञसमाख्या पञ्च महायज्ञाः । तत्र यत्स्वाध्यायमधीते स ब्रह्मयज्ञः, यद्देवानुद्दिश्य आज्येन जुहोति स देवयज्ञः, यत् तर्पणादिरूपेण पितृभ्यो ददाति स पितृयज्ञ, यत् रक्षांसि सर्वाणि भूतानि चोद्दिश्य भूमौ बलिमुपहरति स भूतयज्ञः, यन्मनुष्यान् विशेषतो ब्राह्मणभिक्षून् सत्करोति स मनुष्ययज्ञश्च ज्ञेयः । तत्र ब्रह्मयज्ञः स्वाध्यायाध्ययनरूपत्वात् प्रधानभूतः । तत्रापि प्रत्यहं सायम्प्रातः सन्ध्योपास्तौ सावित्रीमन्त्रजपः समग्रवेदाध्ययनतुल्यबलत्वेनाभिमतः । एते पञ्च महायज्ञाः सम्प्रत्यपि भारतीयैरास्तिकैर्ब्राह्मणैरनुष्ठीयन्ते ॥

अन्येऽपि सन्ति गृहस्थेन तत्तत्कालविशेषेऽनुष्ठेयाः दर्शपूर्णमासादयः कर्मविशेषाः । तत्र श्रौतग्रन्थानुरोधेन दर्शपूर्णमासादौ पुरोडाशः गृह्यग्रन्थानुरोधेन पाकयज्ञश्चेति हविर्भेदो

ष्टव्य. । अथ यस्मिन् काले सर्पादिभयेन मञ्चकाद्युन्नतस्थानेषु शय्या कल्प्यते तस्य वर्षकालस्यारम्भे सर्पभयनिवृत्यर्थं सर्प-र्मापि कर्तव्यत्वेन विहितम् । गृहनिर्माणं गृहप्रवेश च प्रकृत्य विविधा विधय· श्रूयन्ते । तत्र हि गृहनिर्माणे पश्चिमतो द्वारं न कल्पनीयमित्यादयो नियमाः समुपदिष्टाः । दारुवंशमयस्य गृहस्य र्माणेऽवसिते तद्रक्षार्थमेकः पशु· बलीकर्तव्यत्वेनोक्तः । कानि-चिन् कर्माणि गोसम्बद्धानि श्रूयन्ते । तथा हि जनताक्षेमाय वृषोत्सर्गाख्यं कर्म कर्तव्यत्वेनानुशिष्टम् । कृषिसम्बद्धान्यपि कानिचिन् कर्माण्युपलभ्यन्ते । तत्र हि हलस्य प्रथमप्रयोगे बलि-दानादिकं कर्तव्यमुपदिश्यते । पूर्वाचार्याणामनुस्मरणाय चैत्य-कर्माप्यनुष्ठेयत्वेन श्रूयते । दुःस्वप्नदर्शनेऽरिष्टदर्शने व्याधौ च तत्तत्प्रतीकारार्थमनुष्ठेयानि कानिचिन् कर्माण्यवलोक्यन्ते ॥

इतश्च गृह्यसूत्रप्रतिपाद्यानां कर्मणां मध्येऽन्त्येष्टिः श्राद्धादि-कर्म च प्रधानभूते । गृह्यसूत्रग्रन्थसमुदायानुरोधेन—ऊनवर्ष-द्वयान बालकानपहायान्ये सर्वेऽपि दहनेनैव संस्कार्याः । प्रेतस्तत्र केशश्मश्रुलोमनखानि वापयित्वा संस्नाप्य गन्धपुष्पाद्यैरलङ्कृत्य दग्धव्यः । दहनात् पूर्वं प्रेतः कृष्णमृगचर्माणि संवेशनीयः । मृतः क्षत्रियश्चेत् तस्य हस्तात् धनुरादाय च्छित्वा चितायां प्रक्षिप्यते । एवं ब्राह्मणवैश्ययोः हस्तात् दण्डाङ्कुशावादाय तथैव दह्येते । अपि च शवेन सह तस्यामेव चितायामेक. पशुरप्याहुतीकर्तव्यः ।

दाहात् परमासप्रमादादशमाद्वा सापिण्डादयः सर्वे शुद्ध्यर्थं यथोक्त-
विधिना स्नानं कृत्वा पश्चादानक्षत्रदर्शनं क्वचित् तृणमये प्रदेशे
पर्यासीना शरीरानित्यत्वबोधकान् पूर्वेतिहासान् शृण्वन्तो दिवस-
शेषं नयेयुः । तदनु सायं दृष्टे नक्षत्रे ते सर्वेऽधोमुखा. पार्श्वयो-
रनवलोकमाना गृहं गत्वा तत्र यथोक्तानि कर्माण्याचरेयुः ।
मृतिदिनादारभ्य प्रायेण त्रिरात्रमाशौचं भवति ज्ञातीनाम् ।
तस्मिन् काले ते भूतलशायिनः स्युः, मांसभक्षणादिकं च वर्ज-
येयु. । एवमन्येऽपि बहवः मन्त्याशौचकालेऽनुसरणीया नियमाः ।
मृत्यनन्तरायां रात्रौ प्रेतमुद्दिश्य पिण्डदानमुदकदानं च कुर्वन्ति ।
अपि च प्रेतात्र स्नाहीति ब्रुवन्तः पात्रद्वये नीरं क्षीरं च दशाह-
माकाशे स्थापयन्ति । दशाहादूर्ध्वमस्थीनि सञ्चित्य तान्यामकुम्भे
निधाय उपसर्प मातरं भूमिमेतां (१०-१८ १०) इत्यनेन मन्त्रेण
निखातव्यानि ॥

इतो गतश्चात्मा पितृभ्यः पृथग्भूतः कञ्चित्कालं प्रेत-
रूपेणावतिष्ठत इति प्रतिपन्नं गृह्यसूत्रकारैः । स च प्रेत. प्रत्यागत्य
बन्धून् पीडयेदित्याकलय्य तस्य प्रेतत्वनिवृत्त्यर्थमेकोद्देश्यकमेको-
द्दिष्टाख्यं श्राद्धं श्रद्धया क्रियते । अथ चैकवत्सरातिक्रमात् पूर्वं स
आत्मा प्रेतत्वं विहाय पितॄन् प्रपद्य तैः सह सपिण्डो भवति ।
एकस्मिन् वत्सरेऽतीते ततः परं वा पितृमेधाख्यं कर्म यथाविधि
कर्तव्यं श्रूयते । एतस्मिन् कर्मणि निखातपूर्वमस्थिकुम्भमादाय

कश्चिदुचिते स्थाने निखाय तदुपरि मृतस्यानुस्मारकः चैत्याख्यचिह्न-विशेष निर्मीयते । अन्यान्यपि विविधानि श्राद्धानि सर्वान् पितॄ-नुद्दिश्य कर्तव्यान्युपलभ्यन्ते । तत्र पार्वणश्राद्धादीनि कानिचित् कर्माणि नियतकालविशेषानुष्ठेयत्वान्नित्यानि, अन्यानि नैमित्तिकानि काम्यानि च । एतानि श्राद्धकर्माण्यद्यापि भारतवर्षे तत्रापि विशेषतो वङ्गदेशे सोज्जृम्भणमनुष्ठीयन्ते । वङ्गदेशे हि प्राथमिक-श्राद्धानुष्ठानाय पञ्चपसहस्राधिकानि रूप्याणि व्ययीक्रियन्ते ॥

श्रौतग्रन्थोक्तं पिण्डपितृयज्ञादिकं यज्ञाङ्गभूतं कर्मद्वयं गृह्यो-क्तेभ्य एतेभ्यः कर्मभ्यः पृथग्भूतमवधेयम् । श्रौतग्रन्थोक्तो हि पिण्डपितृयज्ञः दर्शयागस्य पूर्वाङ्गभूतः, अन्यच्च कर्म या चातु-र्मास्येष्टीनां तृतीया पौर्णमासेष्टिः, तस्या अङ्गभूतम् ॥

एतानि पैतृकानि कर्माणि वेदकालादारभ्य मध्यकालि-कानां धर्मशास्त्रग्रन्थानामुत्पत्ति यावत् सर्वतः समवर्धन्त । तद्वि-षयप्रतिपादको ग्रन्थसमुदायश्च पृथगेव सम्पादितः । तन्मध्ये हेमाद्रीयः श्राद्धकल्पाभिधानो ग्रन्थः सुविशाल. सर्वान् विषयान् सविस्तारं वर्णयति ॥

अयमस्माभिः यावच्छक्यं संक्षेपतः कुतोऽपि गृह्यसूत्र-ग्रन्थविषयविचारः प्राचां भारतीयानां लोकयात्रायाः समग्रं स्वरूपं बोधयितुं प्रभविष्यति । त एते धर्मसूत्रग्रन्थाः चर्चकानां

परमाभिरुचिं जनयन्तः नागरिकपरिष्कारचरित्रविचारे परमादर-मर्हन्ति ॥

अपरः सूत्रग्रन्थसमुदायः स्मृतिमूलकः धर्मसूत्रग्रन्थाभिधानः । स च सामयाचारिकान् धर्मान् प्रतिपादयति । धर्मसूत्रग्रन्थसमुदायोऽयं भारतवर्षीयाणां लौकिकव्यवहारधर्माणां मूलभूतः । परन्तु ग्रन्थसमुदायेऽस्मिन् वर्णाश्रमधर्म एव प्राधान्येन प्रतिपाद्यते, अप्राधान्येन च लौकिकव्यवहारधर्मः । अथापि धर्मसूत्रशब्देन तत्तच्छाखादृतो लौकिकव्यवहारधर्म एव विवक्षितः । त एते धर्मसूत्रग्रन्थाः सम्प्रति त्रय एवोपलभ्यन्ते । ते त्रयोऽपि कृष्णयजुर्वेदीयतैत्तिरीयशाखासम्बन्धिनः । परन्तु वेदान्तरीयतत्तच्छाखासम्बन्धिनोऽप्येतज्जातीयका धर्मसूत्रग्रन्थाः पूर्वमभूवन्निति बहुल ग्रन्थेषु तेषामनुस्मरणादनुमीयते । सोऽयं धर्मसूत्रग्रन्थसमुदायः सूत्रकालारम्भ एवारब्धः । यतो हि सूत्रारम्भकालोत्पन्नेन यास्काचार्येण लौकिकव्यवहारधर्माः सूत्रशैल्या निबध्यन्ते । अतः सम्प्रत्युपलभ्यमानानामेकद्वा अपि वा धर्मसूत्रग्रन्थास्तस्मिन् काले समुत्पन्ना भवितुमर्हन्ति ॥

तत्र महतावधानेन परिरक्षितः तत्तन्मतीयानामर्वाचां प्रसाधकानां वा दोषैरनालीढः धर्मसूत्रग्रन्थः आपस्तम्बीयः । स च यज्ञक्रियात्रैवर्णिकधर्मप्रतिपादनपरे त्रिंशत्खण्डात्मके आपस्तम्बकल्पसूत्रे २८-२९ तमखण्डद्वयात्मकत्वेन निबद्धः । सोऽयं धर्म-

सूत्रग्रन्थः प्राधान्येन ब्रह्मचारिगृहस्थयोः धर्मान् अभोज्यपदार्थान् पदार्थशुद्धिप्रकारान् तपोमार्गांश्च निरूपयन् अन्ते विवाहधर्मः, दायाधिकारः, दण्डनियमः इत्यादीन् लौकिकान् विषयान् क्रोडीकरोति । तत्रोत्तरदेशीयानां केषाञ्चिदाचाराणां विनिन्दनादेतद्ग्रन्थकर्ता दाक्षिणात्यः सम्भाव्यते । आपस्तम्बशाखापि पश्चात्काले दक्षिणदेश एव स्थिता ज्ञायते । सोऽयं सूत्रग्रन्थः पाणिनेराचार्यात् प्राक्तन्या आर्षभाषाशैल्या निबद्धत्वात् प्रायेण क्रिस्तोः पूर्वं चतुर्थे शतके समुत्पन्नः स्यादित्यभिप्रैति बुह्लराचार्यः ॥

तदनन्तरस्तत्सजातीयो धर्मसूत्रग्रन्थः हिरण्यकेशीयः । आपस्तम्बीयधर्मसूत्रग्रन्थस्य अस्य च पाठमात्रे मिथो भेदः । साम्प्रदायिकाश्च हिरण्यकेशिशाखामिमां आपस्तम्बशाखोद्भिन्नामुपशाखामाहुः । अतश्च हिरण्यकेशिशाखेयं गोवापरिसरे दक्षिणपश्चिमतः स्थिते कोङ्कणदेशे प्ररूढा आपस्तम्बशाखायाः काचिदुपशाखैव न तु स्वतन्त्रं शाखान्तरमित्यध्यवसीयते । सेयमुपशाखा क्रिस्तोः परं पञ्चमशतकाब्दात् पूर्वमुत्पन्ना भवितुमर्हति । यतो हि तच्छतकाब्दोत्कीर्णे कस्मिंश्चित् शिलालेखे हिरण्यकेशी नाम कश्चित् ब्राह्मणो निर्दिष्टनामा दृश्यते । ग्रन्थोऽयमापस्तम्बीयधर्मसूत्रग्रन्थस्य वस्तुतत्त्वविचारे परमोपकारमाचरति । सोऽयं धर्मसूत्रग्रन्थ एकोनत्रिंशदध्यायात्मके हिरण्यकेशिकल्पसूत्रे षड्विंशः सप्तविंशश्चेत्यध्यायद्वयात्मकत्वेन निबद्धः ॥

तृतीयो धर्मसूत्रग्रन्थः बौधायनशाखीयः । स च भूयसा धर्मशास्त्रच्छायामनुविधत्ते । अपि च पूर्वोक्तधर्मसूत्रग्रन्थद्वयस्येवास्य स्थाननियमोऽपि न परिकल्पित. बौधायनीये कल्पसूत्रग्रन्थे यथा हि भाषाशैल्या आर्षप्रयोगैश्च बौधायनीयगृह्यसूत्रग्रन्थ आपस्तम्बीयगृह्यसूत्रापेक्षया तथैव विषयस्वभावेन बौधायनीयधर्मसूत्रग्रन्थ आपस्तम्बीयधर्मसूत्रापेक्षया प्राचीनतरः प्रत्यवसीयते । सैषा बौधायनशाखा नेदानीमुपलभ्यते । अथापि पूर्वमेषा दक्षिणभारतवर्षे लब्धप्रचारा बभूवेति शक्याभ्यूहम् । यतो हि क्रिस्तोः परं चतुर्दशे शतके दक्षिणभारतभूमौ कृतावतारस्तत्रभवान् वेद्भाष्यकर्ता सायणाचार्यो बौधायनशाखीय. श्रूयते । सूत्रग्रन्थेऽस्मिन् प्राधान्येन वर्णाश्रमधर्माः सङ्कीर्णजातयः यज्ञविशेषाः शुद्धिप्रकाराः तपोमार्गाः शुभक्रियाः राजधर्माः दण्डनयाः साक्ष्यधर्माः दायविभागप्रकाराः विवाहविधाः स्त्रीणामधिकाराश्च निरूप्यन्ते । तद्गतो यश्चतुर्थः पद्यमयो भागः स पश्चात्काले संयोजितः । तथा तृतीयभागस्याप्युत्पत्तिकालः सन्देहग्रस्तः ॥

गौतमीयः सूत्रग्रन्थः धर्मसूत्रग्रन्थकोटौ प्रवेशमर्हति । यद्यपि धर्मसूत्रग्रन्थोऽयं न कल्पसूत्रग्रन्थे क्रोडीकृतः तथाप्ययमेकदा यत्किञ्चिद्वैदिकशाखावलम्बी बभूवेत्यसन्देहः । यतो हि गौतमशाखा सामवेदीयराणायनिशाखायाः काचिदुपशाखेत्यवगम्यते । आह च कुमारिलाचार्यः—गौतमधर्मसूत्रग्रन्थोऽयं सामवेदीय इति।

साधीयश्चैतत् । यतो हि सूत्रग्रन्थस्यास्य षड्विंशः खण्ड. सामग्रियेण सामविधानब्राह्मणादुद्धृत । तस्मात् व्यक्त एवास्य सामवेदसम्बन्धः । यद्येत्रायं धर्मशास्त्रशब्देन व्यपदिश्यते तथापि स्वरूपतः स्वभावतश्चास्य धर्मसूत्रग्रन्थत्वमव्याहतम् । ग्रन्थोऽयं केवलगद्यमयः, न तु पद्यसम्मिश्रितः । एतत्प्रतिपाद्या विषयाश्च भूयसा बौधायनधर्मसूत्रगतैः विषयैः सह संवादं भजन्ति । तत्र तावत् बौधायनधर्मग्रन्थे गौतमधर्मग्रन्थादुद्धृतत्वेनावधार्यमाणाः समुपलभ्यन्ते बहवो भागाः । एवं च बौधायनधर्मग्रन्थस्य गौतमधर्मग्रन्थानुयायित्वं तदपेक्षया पश्चात्कालिकत्वं च स्पष्टमेव । अतश्च गौतमधर्मसूत्रग्रन्थोऽयमद्योपलभ्यमानेभ्यः सर्वेभ्योऽपि धर्मसूत्रग्रन्थेभ्यः प्राचीनतम इति पर्यवस्यति । एवं चायं क्रिस्तो. पूर्वस्मात् पञ्चमशतकादर्वाचीनो न भवतीत्यध्यवसीयते ॥

सूत्रकाल एवोत्पन्न कश्चिदन्यः सूत्रग्रन्थो वसिष्ठधर्मशास्त्रम् । नास्य ग्रन्थस्य कापि व्याख्या समुपलभ्यते । ग्रन्थेऽस्मिन् त्रिंशदध्याया. सन्ति । तत्रान्तिमायां पञ्चाध्याय्यां भूयांसो भागाः पश्चात्काले संयोजिताः । अत्र न केवलमन्तिमायां पञ्चाध्याय्यामेव किन्तु पूर्वाध्यायेष्वपि बहूनि सूत्राण्यपभ्रंशबहुलानि । ग्रन्थोऽयं गद्यपद्योभयमयः । तत्र बहूनि पद्यानि त्रिष्टुभाख्येन वैदिकच्छन्दसा सङ्घटितानि न तु मनु-

स्मृत्यादिदृष्टेन श्लोकवृत्तेन । अस्मिन् प्रतिपाद्यमाना विषयाश्चापि धर्मसूत्रग्रन्थोपवर्णितैर्विषयैस्तुल्यरूपाः । तथा ह्यापस्तम्बीयधर्मसूत्रग्रन्थ इवात्र षड्विधो विवाहः प्रतिपाद्यते न त्वष्टविधः । एवमन्येऽपि विषयसंवादा द्रष्टव्याः । एवं चास्य प्राचीनताया-मविवादः । तत्र तावदयं ग्रन्थः कुमारिलाचार्यस्य काले ऋक्शाखीयैः परमादरेणाध्ययगायीति तद्वचनादवगम्यते । नन्वय-मेव ग्रन्थः कुमारिलाचार्येण विवक्षित इति कथमुच्यते, वसिष्ठ-धर्मशास्त्राभिधानः कश्चिदन्य एव ग्रन्थस्तेन तथा निर्दिष्ट इति कस्मान्नानुमीयत इति चेन्मैवं, कुमारिलाचार्येण हि बहूनि वाक्यानि तद्ग्रन्थादुद्धृतानि, तानि सर्वाण्यप्यस्मिन् ग्रन्थे दृश्यन्ते । अतश्चाय-मेव ग्रन्थस्तेन तथा निर्दिष्ट इत्यसन्देहम् । वसिष्ठधर्मशास्त्रेऽस्मिन्नौत्त-राहाणां वेदसूत्राध्ययनरीतिरभिष्टूयते । तेनैतद्ग्रन्थकर्तुर्वसिष्ठाचार्यस्य तच्छाखीयानां चोत्तरदेशीयत्वं व्यज्यते । अपि च वसिष्ठाचार्यो-ऽयं गौतमधर्मसूत्रादेकं वाक्यमुद्धरति । तथा कानिचिन्मनुवचना-न्यप्युदाहरति । तत्र नैतानि मनुवचनान्यद्यत्वे प्रसिद्धाया मनु-स्मृतेरुद्धृतानि किन्तु नामावशिष्टान्मनुसम्बन्धिनः कस्माच्च न धर्मसूत्रग्रन्थादित्यवधेयम् । प्रत्युताद्यत्वे प्रसिद्ध्यन्त्यां मनुस्मृतौ वसिष्ठशास्त्रादेकं वाक्यमुद्धृत्योदाह्रियते । एवं च वसिष्ठधर्मसूत्र-ग्रन्थोऽयं गौतमधर्मसूत्रादर्वाचीनः मनुधर्मशास्त्रात् प्राचीनश्च विभाव्यते । अतश्चोत्तरदेशे क्वचिदाविर्भूतस्तदीयः प्राथमिक-

पञ्चविंशत्यध्यायात्मको मूलभाग क्रिस्तो. पूर्वं कतिपयशतकाब्दे-भ्यः प्रागेवोत्पन्नो भवितुमर्हति ॥

केचिद्धर्मसूत्रग्रन्था ग्रन्थान्तरेष्वनुसन्धीयमानाः पुरा स्थितत्वेनानुमीयन्ते । तेषु केचिदद्योपलभ्यमानेषु धर्मसूत्रग्रन्थेषु निर्दिश्यमानत्वात् तेभ्यः प्राचीनतरा द्रष्टव्या. । तेषामन्यतमः मनुधर्मशास्त्रस्य मूलभूतः मानवधर्मसूत्रग्रन्थः । ग्रन्थादस्मादनु-सन्धीयन्ते बहूनि वाक्यानि वसिष्ठधर्मशास्त्रे । तत्र षड्वाक्यानि नात्यन्तविकृतानि मनुधर्मशास्त्रेऽप्युपलभ्यन्ते । अपि च वसिष्ठ-धर्मशास्त्रे मानवधर्मसूत्रादनुसन्धीयमानमन्यद्वाक्यमंशतः पद्यमय-मंशतो गद्यमयं च दृश्यते । तत्र पद्यांशो मनुधर्मशास्त्रेऽप्युद्धृत । मानवधर्मसूत्रादनुसन्धीयमाना इमे पद्यांशा त्रिष्टुभ. श्लोक-वृत्तस्य च मिश्रणेन सङ्घटिताः । इत्थं ग्रन्थान्तरेष्वनुसन्धीयमाना-नीमानि वाक्यानि व्यक्तमेव मनुधर्मशास्त्रस्यावलम्बभूतं मानव-धर्मसूत्रं पुरावस्थितमनुमापयन्ति ॥

अन्यः कश्चिदनुमीयमानसद्भावः गद्यपद्यमयो धर्मसूत्रग्रन्थः शङ्खलिखिताभ्यां प्रणीतः । शङ्खलिखितौ च सौदरौ धर्मविषये पराशरेण महत्यां प्रामाण्यपदव्यामभिषिक्तौ धर्माचार्यौ । तद्ग्रन्थ-गतानि वाक्यानि लौकिकव्यवहारविषये शश्वदनुसन्धीयन्ते बहुत्र ग्रन्थेषु । कुमारिलाचार्यो यत्तस्य शुक्लयजुर्वेदीयवाजसनेयशाखा-

सम्बद्धत्वमाह तदप्यत्रोपलभ्यमानैः तद्ग्रन्थेद्धृतैर्वाक्यैः साधीयस्त्वेनावधार्यते ॥

धर्मशास्त्रकालादारभ्य केवलगद्यात्मिकायाः भाषाशैलेरारम्भात् सूत्रग्रन्थाः सर्वे तत प्रागेवोत्पन्ना भवितुमर्हन्तीति चेत् नैतदृजसं सूत्रभाषाशैल्याः धर्मशास्त्रभाषाशैल्याश्च मिथः स्थान्यादेशभावविरहात् धर्मशास्त्रानन्तरकालोत्पन्नानां केषाञ्चित् सूत्रग्रन्थानामुपलम्भात् । तथा हि प्रश्नचतुष्टयघटितः वैखानसधर्मसूत्राख्यो ग्रन्थः क्रिस्त्वब्दीयतृतीयशतकात् प्राक्तनो न भवितुमर्हतीति तद्गतैरेव लिङ्गविशेषैरवधार्यते । तत्र हि नारायणपूजाविधिरुपवर्णितः । नारायण इति च विष्णोरर्वाचीनं नामधेयम् । एवमर्वाचीनतामात्रसुलभः 'बुधवार' शब्दोऽपि ग्रन्थेऽस्मिन् प्रयुक्त उपलभ्यते । अपि च गृह्यधर्मविषयकोऽयं ग्रन्थः परमार्थतो न धर्मसूत्रव्यपदेशमर्हति । अत्र हि चतुर्णामाश्रमाणां विशेषतो वानप्रस्थाश्रमस्य च धर्माः प्रतिपाद्यन्ते । वैखानसाश्च वानप्रस्थाश्रमिणामन्यतमाः । ते तैत्तिरीयशाखाया उपाङ्गभूताः श्रूयन्ते ॥

अथ श्रौतान् सामयाचारिकांश्च धर्मान् सिंहावलोकितकेन सकृदपि निरूपयामः । तत्र तावदेते सूत्रग्रन्थाः तन्द्रालुभिः पुरोहितवर्गीयैः सर्वानितरान् भारतीयान् प्रलोभ्य स्ववचने स्थापयितुं स्वोत्प्रेक्षितैः विषयैरुपनिबद्धा इत्युपसंहाराय प्रचोद्यामहे ।

परन्त्वीदृश्युपसंहारे क्रियमाणेऽस्माकमदूरदर्शिता समापद्येत । यतो ह्येषां ब्राह्मण्यानां धर्माणां मूलभूताः प्रथमकल्पीया धर्माः पारमार्थिका. सार्वलौकिकाश्च अभूवन्निति कुशाग्रीयधिषणैर्निश्च-प्रचम् । अपि च खलु धर्माणामेषां कृत्रिमकल्पितत्वे भारतीयानां मध्ये ब्राह्मणजातेरुत्पत्ति. तत्प्रतिष्ठा च निरुपपत्तिकैव स्यात् । न खलु प्रलोभनशीलो जनः क्वापि स्थिरां प्रतिष्ठामासादयन् दृश्यते । एवं स्थिते वस्तुनि भारतीया ब्राह्मणाः स्वकपोलकल्पितै-र्धर्मैः परान् प्रलोभ्य तादृशीं प्रतिष्ठामविन्दन्तेति कथङ्कारं श्रद्धीयताम् ? तस्मात् पारमार्थिकानेव धर्मान् लोकातिशायिना चमत्कारेण यथोचितमुपबृंहयन्तः यथायथं व्यवस्थापयन्तश्च ते लोकोत्तरं पदमारोहन्निति युक्तमास्थातुम् ॥

सादृश्य विचारदृशा हि विमृश्यमाने वस्तुनि सूत्रग्रन्थोप-दिष्टाः केचित् धर्माः इण्डो-एरेणियकालिका. प्रत्यभिज्ञायन्ते । तथा हि तस्मिन् काले यज्ञकर्माणि प्रधानत्वेनादृतानीत्यवगच्छामः । तत्रापि विशेषतः सोम· देवानुद्दिश्य समर्पित । सोमस्याभिषवः तस्य तितउना शोधनं ततस्तस्मिन् क्षीरमिश्रणमित्यादयो विशेषा अपि तस्मिन् काले स्थिताः । एवं यज्ञोपवीतधारणरूपत्वेन परिणत. उपनयनाख्यः संस्कारोऽपि रूपान्तरेण ततः प्रागेवावर्तिष्टेति पूर्वमेवावोचाम । देवतोद्देशेन वह्नौ हविस्त्यागः ग्रीकरोमभारती-यानां मध्ये साधारण्येनोपलभ्यमानत्वात् इण्डो-यौरोपकालिको

द्रष्टव्यः । तथा रोमकाणां विवाहक्रियायां लाजप्रक्षेपणात् पूर्वं वधूवराभ्या वेदीप्रदक्षिणगमनसम्प्रदायस्य दर्शनात् सूत्रग्रन्थोपदिश्यमानाः वधूवराभ्यां वैवाहिकाग्नेः प्रदक्षणीकरणं वरेणाग्नौ लाजार्पणं वध्वा धान्यादिप्रक्षेपणमित्यादय. क्रियाविशेषा अपि तस्मिन् कालेऽवर्तिषत । अपि च सूत्रग्रन्थोक्तः वधूवरयोः शिरसि तण्डुलादिप्रक्षेपरूप. सम्प्रदायोऽपि सार्वत्रिकत्वादिण्डो-यौरोपकालिकः । न चायमाचारोऽन्यदीयानुकरणेनान्यैराहतो भवितुमर्हति । अरणिभ्यामग्नेरुत्पादनं ततोऽपि प्रागारब्धः सम्प्रदायः । अपि च यज्ञवेद्यामधस्तन्यामिष्टकायां मनुष्यादीनां पञ्चानां पशूनां शिरश्चित्रलेखनं कर्तव्यत्वेनोपदिश्यते सूत्रग्रन्थेषु । अयमीदृशः सम्प्रदायः गृहनिर्माणात् पूर्वं तदधस्तात् भूमौ शिलया सह मनुष्यस्यान्यस्य वा कस्यचित् पशो. स्थापने तद्गृहं स्थिरतरं भविष्यतीत्येवंरूपं प्राक्कालिकं विश्वासविशेषमवलम्ब्य प्रवृत्तः स्यादिति तर्कयामः ॥

अन्ततः सूत्रग्रन्थसमुदायान्तर्भावयोग्यः कश्चित् सूत्रग्रन्थः क्रियाप्रतिपादकः सुल्बसूत्राभिधानः । आपस्तम्बकल्पसूत्रस्थौ त्रयोदशोऽन्तिमश्चेति द्वौ प्रश्नावप्येतज्जातीयकावेव । तत्रोभयत्रापि यज्ञवेद्याः परिमाणविशेषादयः सविस्तरं प्रतिपाद्यन्ते । तत्र क्षेत्रगणितविषये महत् प्रावीण्यमाविष्कृतम् । अतश्चैवं जातीयकाः सूत्रग्रन्था भारतवर्षीयगणितशास्त्रस्य मूलभूता द्रष्टव्याः ॥

वेदाङ्गभूतः सूत्रग्रन्थसमुदायः शिक्षा च्छन्दो व्याकरणं निरुक्तं कल्पो ज्योतिषमिति षोढा विभक्तः। तत्र प्राथमिकमङ्गचतुष्टयं वर्णोच्चारणादिप्रकारबोधकं शब्दविषयम्। अन्यदङ्गद्वयं धर्मप्रतिपादकं तत्तद्धर्मानुष्ठानोचितकालविशेषबोधकं च। अतस्तदर्थविषयम्। इमानि सर्वाण्यप्यङ्गानि वैदिकधर्मानुष्ठानोपयोगितया प्रणीतानि। तत्रान्तिमानि चत्वार्यङ्गानि लौकिकसंस्कृतकाले प्रादुर्भूतानां पञ्चानां शास्त्राणां प्रभवस्थानानि भवन्ति। निरुक्तमिति ज्योतिषमिति च योगरूढ्या द्वौ ग्रन्थविशेषावभिधित्सितौ, न तु योगजवृत्या निरुक्तविषयका ज्योतिषविषयकाश्च सर्वे ग्रन्था विवक्षिता ॥

कल्पसूत्रविषयको विचारः सविस्तरमस्माभि कृत एतदध्यायोपक्रमे। ज्योतिषग्रन्थश्च वैदिककालादागतो नेदानीमुपलभ्यते। यः पुनरिदानी वेदाङ्गज्योतिषत्वेनाङ्गीकृत कश्चित् ग्रन्थ पाठद्वयेनासाद्यते स केवलं लौकिकसस्कृतकाले समुत्पन्नः। तदीयौ पाठभेदौ च ऋग्यजुषसम्बन्धिनौ ॥

शिक्षा तावन् तैत्तिरीयारण्यके (७-१) निर्दिश्यमानत्वात् प्रागेव स्थिता सम्भाव्यते। सा च वर्णस्वरमात्रोच्चारणसन्धिविषयिणी। एवंविधविषयका बहवः सन्ति शिक्षाग्रन्थाः। परन्तु ते सर्वेऽप्यर्वाचीना अत्यल्पाश्च कृतयः। शिक्षाशास्त्रप्रवृत्तेः प्रथमं

फलं वेदानां संहिता रूपेण पाठः । यतो ह्यत्र शिक्षाशास्त्रोपदिष्ट-वर्त्मना सन्धिनियमाः सञ्चारिताः । तदनु पदपाठोऽपि शिक्षा-शास्त्रस्यैव फलत्वेनाविर्भूतः । संहितापाठे हि सन्धाय पठितानां पदानां सन्धिनियमानुरोधेन विश्लेषः क्रियते । यास्कपाणिनि-प्रभृतयो वैयाकरणास्तु कचित् कचिदन्यथैव पदानि च्छिन्दन्तः पदपाठगतं पदच्छेदप्रकारं न सर्वात्मनाऽनुमन्यन्ते । भगवान् पतञ्जलिश्च कण्ठरवेणैव पदपाठानामप्रामाणिकत्वमाह । शिक्षा-विषयकाः प्राचीना ग्रन्थास्तु प्रातिशाख्यानि । तानि च साक्षादेव संहितापाठैः पदपाठैश्च सम्बद्धानि । संहितापाठपदपाठयोः सम्बन्धोपपादनमेव तेषां प्रधानभूतो विषयः । तत्प्रसङ्गाच्च सर्व-विधान् सन्धिनियमान् मन्त्रोच्चारणप्रकारांश्चोपदिशन्ति । त एते प्रातिशाख्यग्रन्थाः पाणिनेराचार्यात् प्राचीनतराः । यतो ह्यय-मात्मनस्तत्परिचयं शश्वदभिव्यञ्जयति । परन्तु पाणिनिना-चार्येण कीदृशाः प्रातिशाख्यग्रन्थाः परिचिताः ? अवधेहि । सम्प्रत्युपलभ्यमानानां प्रातिशाख्यानां ये संक्षिप्तरूपास्तदानीं स्थितत्वेनानुमीयमाना मूलभागाः त एव तेन परिशीलिताः, नत्विदानीं दृश्यमानाः परिपुष्टरूपाः प्रातिशाख्यग्रन्थाः । अत एवेदानीन्तनेषु प्रातिशाख्येषु समुपलभ्यमानाः सर्वविधा वैदिकाः सन्धिविशेषा न प्रतिपाद्यन्ते पाणिनाचार्येण । यदि ह्येते परिपुष्टरूपाः प्रातिशाख्यग्रन्थास्तेनाद्रक्ष्यन्त तर्ह्येतद्ग्रन्थाः

सर्वेऽपि सन्धिनियमास्तेनान्ववक्ष्यन्त । अतश्च प्रातिशाख्यानां पुरा संक्षेपरूपेणावस्थानमध्यवसीयते । अत एवाद्योपलभ्यमानानि प्रातिशाख्यानि तत्रापि विशेषतोऽथर्वप्रातिशाख्यं वैयाकरणपरिभाषापरवशानि दृश्यन्ते । एवंविधानि चत्वारि प्रातिशाख्याति सम्प्रत्युपलभ्यन्ते। तत्रैकमृग्वेदीयम्, अपरमथर्ववेदीयम् । अन्याद्वयं यजुर्वेदीयम्, तयोरेकं वाजसनेयिशाखया, अपरं तैत्तिरीयशाखया च सम्बद्धम् । प्रातिशाखाध्ययनसम्बन्धात् तेषां प्रातिशाख्यव्यपदेशः ॥

ऋग्वेदीयं प्रातिशाख्यसूत्रं खण्डत्रयात्मिका नात्यल्पा पद्यमयी कृतिः । सा चाश्वलायनाचार्यस्य गुरुणा शौनकाचार्येण प्रणीतेत्यामनन्ति साम्प्रदायिकाः । अर्वाचीना विमर्शकास्तु सम्प्रत्युपलभ्यमानोऽयं ग्रन्थः शौनकशाखीयैः परिपोषं प्रापितो भवितुमर्हतीत्युत्प्रेक्षन्ते । तदिदं प्रातिशाख्यं पश्चात्काले 'उपलेख' समाख्येन परिशिष्टभागेन सनाथीकृतम् । तैत्तिरीयप्रातिशाख्ये विंशतिसङ्ख्यानामाचार्याणां नामानि निर्दिश्यन्ते । तत्र बहूनि नामानि सहृदयानामत्यन्तं विनोदमावहन्ति । वाजसनेयिप्रातिशाख्यमष्टभिरध्यायैः सङ्घटितम् । तच्च कात्यायनाचार्येण प्रणीतमिति तत एवावगम्यते । शौनकादयश्च तत्र पूर्वाचार्यत्वेन निर्दिश्यन्ते । अथर्वप्रातिशाख्यं शौनकशाखीयानां कृति. । तच्च प्रातिशाख्यान्तरापेक्षयाऽधिकतरं शब्दसंस्कारं भजते ॥

छन्दसां लक्षणं ब्राह्मणग्रन्थेषु तत्र प्रतिपाद्यमानमपि विशेषतः शाङ्खायनश्रौतसूत्रे (६-२६) ऋग्वेदप्रातिशाख्यस्यान्तिमे पटलत्रये सामवेदीयनिदानसूत्रे च विस्तरेणोपवर्ण्यमानमनुसन्धेयम् । पिङ्गलच्छन्दस्सूत्रेऽप्यंशतो वैदिकानि च्छन्दांसि लक्ष्यन्ते । तेन तस्य वेदाङ्गत्वं शक्यवचनम् । अथापि वैदिककालानन्तरमुत्पन्नोऽयं ग्रन्थः भूयस्तया लौकिकवृत्तानि प्रतिपादयन् तत्रैव विषये प्राधान्यमर्हतीत्यवधेयम् ॥

अनुपदमेवाधस्तान् निरूपयिष्यमाणे कात्यायनीयेऽनुक्रमणीद्वयेऽप्येकैको भागश्छन्दोलक्षणप्रतिपादनपरः समुपलभ्यते । तावुभावपि भागौ मिथो नात्यन्तविलक्षणौ विषयतः ऋग्वेदप्रातिशाख्यस्य षोडशेन पटलेन सह संवादं भजतः । अत्रेदमवधेयम्—'यद्यप्ययं प्रातिशाख्यग्रन्थः कात्यायनीयानुक्रमणीद्वयापेक्षया प्राचीनतर एव तथापि तदीयः षोडश पटल अनुक्रमणीस्थच्छन्दोविषयकभागद्वयापेक्षयाऽर्वाचीनतरो भवितुमर्हति' इति ॥

पदपाठकाराः न केवलं मन्त्रोच्चारणविधीनेव नापि केवलं सन्धिनियमानेव किन्तु शब्दशास्त्रसमयानुरोधिनः प्रकृतिप्रत्ययविभागप्रकारानप्यज्ञासिषुः । दृश्यते हि पदपाठेषु समस्तशब्दानां धातूपसर्गाणां केषाञ्चित् प्रकृतिप्रत्ययानां क व्याकरणानुरोधी

विभागः । अपि चैते पदपाठकाराश्चत्वारि पदजातान्यवेदिषु. । यानि खलु नामाख्यातमुपसर्गो निपातश्चेति यास्काचार्येण नामतो निर्दिष्टानि । ईदृशं पदविभागमेव निमित्तीकृत्य प्रथमं व्याकरणस्य व्याकरणसञ्ज्ञा प्रवृत्ता भवितुमर्हति न तु प्रकृतिप्रत्ययविभागं निमित्तीकृत्य तदभिज्ञानात् पूर्वमेव तत्संज्ञायाः प्रवृत्तत्वादित्यवधेयम् । ब्राह्मणग्रन्थेष्वपि शब्दशास्त्रपरिज्ञानमाविष्क्रियते । तत्र हि वर्ण वृषा (पुँल्लिङ्गम) वचनं विभक्तिरित्यादयः शब्दशास्त्रीया. संज्ञाविशेषा निर्दिष्टा । इतोऽप्यारण्यकेपूपनिषत्सु सूत्रग्रन्थेषु चैतद्विषयक. प्रस्तावः परिपोषं प्राप्त उपलभ्यते । परन्तु पाणिनेराचार्यात् प्राक् प्रवृत्त. प्रधानभूतो व्याकरणशास्त्रविषयको व्यवहारः सम्प्रति यास्कनिरुक्ते परं श्रूयते ॥

व्याकरणशास्त्रव्यासङ्गो भारतभूमौ यास्काचार्यात् प्रागेवारब्धो भवितुमर्हति । यतो हि यास्काचार्यः प्राचामुदीचां च वैयाकरणानां मतभेदान् निर्दिशति । शाकटायनगार्ग्याचार्यप्रमुखान् पूर्वान् वैयाकरणांश्च स्मरति । अपि च यास्काचार्यस्य काले वैयाकरणाः कालपुरुषादिबोधकान् आख्यातप्रत्ययान् कृत्तद्धितादीन् नामप्रत्ययांश्च पृथगभिजानन्तः प्रकृतिप्रत्यविभागे प्रभवो बभूवु. । तत्र नाम्नां धातुजत्वविषये सरस. कश्चन वादः श्रूयते निरुक्ते । सर्वाणि नामानि धातुजान्याह शाकटायनः । नैरुक्तसमयश्चाप्ययमेव । गार्ग्यादय केचन वैयाकरणा अत्र प्रत्यव-

तिष्ठन्ते । केषाञ्चिदेव नाम्नां धातुजत्वमभ्युपयन्ति ते न तु सर्वेषाम् । तेषामेष प्रतिपक्ष. साधिक्षेपं प्रतिक्षिप्यते यास्काचार्येण। नाम्नां धातुजत्वनियममुपष्टभ्यैव समग्रं पाणिनीयं तन्त्वं प्रतिष्ठितम् । पाणिनीयेऽस्मिन् व्याकरणे प्राधान्येन लौकिका एव शब्दा. व्याचिकीर्षिता, वैदिकास्तु शब्दा अपवादविधया व्याक्रियन्ते । अतश्चैतल्लौकिकसंस्कृतग्रन्थसमुदायमध्ये प्राधान्यमर्हति । तदिदं पाणिनीयं प्रस्थानं सूत्रकालस्य मध्यभागे प्रादुर्भूत लौकिकसस्कृतभाषाया आरम्भसीमानमापादयतीत्यवधेयम् । स्वव्याकरणस्य स्थेयसी प्रतिष्ठामीहमान आचार्य: पाणिनि पूर्वान वैयाकरणानुल्लङ्घ्य नवीनं पन्थानमशिश्रयत् । पूर्वेषां कृतय. क्रमेणास्तमुपगता. । पाणिनेराचार्यात् प्राक्तन: शब्दशास्त्रविषयको ग्रन्थ सम्प्रति यास्कनिरुक्तमेकमेवोपलभ्यते । कस्मान्न तस्यापि नाश. समजनीति चेत् तस्य केवलव्याकरणविषयकत्वाभावादित्याकलयाम ॥

यास्कीयं हि निरुक्तं वस्तुतो वैदिकी व्याख्यैव । तच्च संस्कृतभाषागतयावद्व्याख्याग्रन्थसमुदायापेक्षया बहुभ्य शतकाब्देभ्य: प्रागाविर्भूतम् । तदिदं यास्कीयं निरुक्तं निघण्टुवपरनामकस्य पञ्चाध्यायात्मकस्य समाम्नायस्य व्याख्यानरूपेणोत्पन्नम् । योऽयं मूलभूत: समाम्नाय आचार्याणां सौकर्याय दुर्बोधार्थानां वैदिकशब्दानां सङ्कलनेन सम्पादित. कश्चित् वैदिकशब्दकोश: ।

तस्य प्राथमिकेऽध्यायत्रये गवादीनां पर्यायशब्दाः पठिताः । चतुर्थे दुर्ज्ञेयार्थाः शब्दाः सङ्गृहीताः । पञ्चमेऽग्न्यादयो देवा निर्दिष्टाः । तानिमान् पञ्चाध्यायीनिबद्धान् विषयान् यास्काचार्यो द्वादशभिरध्यायैः शब्दनिर्वचनद्वारा प्रतिपादयन् निरुक्तशास्त्रं निबबन्ध । तद्वतौ त्रयोदशश्चतुर्दशश्चाध्यायौ परिशिष्टात्मकौ पश्चात्काले संयोजितौ । तत्तच्छब्दनिर्वाचनप्रसङ्गाद्यास्कनिरुक्तेऽस्मिन् बहवो वेदमन्त्राश्चापि शब्दनिर्वचनविधया व्याख्याताः ॥

यास्कीयस्यास्य निरुक्तस्य प्रथमेऽध्याये निरुक्तव्याकरणोभयसम्बन्धिनः सामान्यविषया उपोद्घातरूपेण निबद्धाः । द्वितीयतृतीययोः गवादीनां पर्यायशब्दा निरुच्यन्ते । चतुर्थपञ्चमषष्ठेषु समाम्नायचतुर्थाध्यायपठिताः शब्दा व्याख्याताः । तदनन्तरेषु षट्स्वध्यायेषु समाम्नायस्य पञ्चमेऽध्याये निर्दिष्टा अग्न्यादिदेवपत्न्यन्ता देवताः प्रतिपाद्यन्ते । तदिदं निरुक्तं न केवलं वेदव्याख्यानरूपत्वात् नापि केवलं व्याकरणविषयकत्वान् किन्तु पाणिनेराचार्यात् प्राक्तन्या लौकिकसंस्कृतगद्यसरणेरादर्शभूतत्वादपि विमर्शकानामवधानमर्हति । ननु यास्काचार्यः प्राचीन उताहो आचार्यः पाणिनिः? तत्र तावत्—धातुकृत्तद्धितादयः पाणिनीयतन्त्रप्रसिद्धाः काश्चित् संज्ञा यास्काचार्येण प्रयुक्ताः । अथापि यास्काचार्यः पाणिनेराचार्यादत्यन्तं प्राचीन । यतो हि तयोरन्तराले सम्भूता बहवो वैयाकरणाः नामग्राहं निर्दिष्टाः

समुपलभ्यन्ते । धात्वादयः संज्ञाविशेषास्तु न पाणिन्याचार्येण सङ्केतिताः किन्तु पूर्वेभ्यो वैयाकरणेभ्यः परम्परागतास्तेन लक्षिता इत्येव । तस्मादयं यास्काचार्यः क्रिस्तोः पूर्वं पञ्चमे शतकाब्दे तथा च सूत्रकालस्यारम्भे सम्भूतः सम्भाव्यते ॥

निरुक्तादस्मादिदमेकमसन्देहमवधार्यते यत्—ऋग्वेदो यास्काचार्यस्य काले परिनिष्ठापन्नः प्रायेण सम्प्रत्युपलभ्यमानरूप एवावर्तिष्टेति । दृश्यन्ते तु निरुक्ते क्वचित् क्वचिदल्पीयांसो विसंवादाः । तथा हि दशममण्डलस्यैकोनविंशे सूक्ते प्रथमे मन्त्रे विद्यमानः 'वायो' इत्ययमंशः शाकल्याचार्येण पदपाठे 'वा+यो' इति द्विपदत्वेन विभक्तो निरुक्तेऽस्मिन्नेकपदत्वेनास्थितः । एवं संहितापाठोऽपि यास्काचार्येण बह्वोल्लङ्घितः । यद्यपि हि निरुक्ते निदर्शिता मन्त्राः संहितापाठसंवादसम्पादनाय परिशोध्य संयोजितत्वात् सर्वात्मनैव तत्पाठमनुवर्तन्ते तथापि यास्काचार्य-संहितापाठयोर्विरोधो बहुत्र निर्वचनसन्दर्भादवधार्यते । परन्त्वेवं-विधा विसंवादाः यास्काचार्यस्य प्रमादादापतिताः । दृश्यन्ते ह्येवंविधा विसंवादाः सायणाचार्यभाष्येऽपि । यत्र हि भाष्या-चार्यस्यानवधानतामात्रं हेतुः ॥

सर्वशाखाविर्भूतः परिपुष्टरूपः परिशिष्टग्रन्थसमुदायोऽपि सूत्रग्रन्थसमुदायविचारप्रकरणेऽत्र प्रस्तावमर्हति । सूत्रग्रन्थोप-

वर्णिता एव विषयाः प्राधान्येनात्र प्रतिपाद्यन्ते । तदनुक्ताश्चापि केचित् विषयाः कचित् कचिदुपनिबद्धाः । तेषामन्यतम आश्वलायनगृह्य-परिशिष्टाख्यो ग्रन्थ. ऋक्शाखीय. । स चतुर्भिरध्यायैर्घटित. । अन्यः कश्चित् गोभिलपरिशिष्टाभिधानो ग्रन्थ. सामवेदीयः । यः खलु प्राधान्येन गृह्यकर्माणि प्रतिपादयन् प्रसङ्गवशादभिचारक्रियाः प्रस्तौति । तत्सजातीयस्तदपेक्षयाऽर्वाचीनश्च कश्चिदन्यः परिशिष्ट-ग्रन्थः कर्मप्रदीपाह्वयः । यः खलु सामगृह्यं च्छान्दोग्यगृह्यपरि-शिष्टं च्छन्दोगपरिशिष्टं गोभिलस्मृतिरित्येवं बहुधाभिधीयते । ग्रन्थोऽयं शुक्लयजुःशाखीयेन कात्यायनाचार्येण प्रणीत इति केचित् । गोभिलाचार्येणेत्यन्ये । गृह्यसङ्ग्रहग्रन्थप्रतिपादिता एव विषयाः स्वतन्त्रया गत्याऽत्र प्रतिपाद्यन्ते । तदीयाः श्लोकाश्चापि केचिदत्रोपात्ताः समुपलभ्यन्ते ॥

परिशिष्टग्रन्थसजातीयाः प्रयोगग्रन्थाः पद्धतिग्रन्थाश्च यज्ञ-क्रियाबुभुत्सूनामत्यन्तमुपकारकाः । तज्जातीयका ग्रन्था बहुसङ्ख्याः समासाद्यन्ते । तत्तच्छाखीयानि श्रौतानि गृह्याणि च कर्माणि तेषु प्रतिपाद्यन्ते । तत्र विशेषत. । प्रयोगग्रन्था उच्चावचानि यज्ञकर्माण्युपवर्णयन्त. प्रयोगमुखेन ऋत्विजां कर्माणि प्रति-पादयन्ति । पद्धतिग्रन्थास्तु सूत्रग्रन्थोपपादितानेव विषयान् संक्षे-पेणानुवदन्ति । सूत्रग्रन्थानां पद्धतिग्रन्थानां च सम्बन्धमर्हन्तः कारिकाख्या. पद्यमया अपि ग्रन्थाः कर्मप्रतिपादकाः समुप-

लभ्यन्ते । तेषु प्राचीनतमः कारिकाग्रन्थः कुमारिलाचार्यकृतः । यः खलु क्रिस्तोः परं सप्तमे शतकाब्दे समुत्पन्नः ॥

अनुक्रमणी समाख्या ग्रन्था अपि परिशिष्टजातीया एव । ते च तत्तद्वेदगतानि सूक्तानि च्छन्दांसि ऋषीन देवताश्चानुक्रमेण निर्दिशन्ति । एतज्जातीयकाः सप्त ग्रन्था ऋग्वेदीयाः शौनककर्तृकाश्च श्रूयन्ते । सप्तापि ते शौनकीये ऋक्प्रातिशाख्ये दृश्यमानैः श्लोकाभिधानैः त्रिष्टुभाख्यैश्च वृत्तैः सङ्घटिताः । सर्ववेदसम्बद्धः सर्वानुक्रमणीग्रन्थोऽप्यस्ति कश्चिदुपलभ्यते । स च कात्यायनाचार्येण विरचितः । ग्रन्थोऽयं वृत्तवद्धेष्वनुक्रमणीग्रन्थेषु प्रतिपाद्यमानान विषयान् संगृह्णाति । वृत्तबद्धाश्चानुक्रमणीग्रन्थाः संप्रति पञ्चसङ्ख्या. समुपलभ्यन्ते । तत्र आर्षानुक्रमणीग्रन्थः किञ्चिदूनैः त्रिशतैः श्लोकैः ऋग्वेदद्रष्टॄणामृषीणां नामानि निर्दिशति । ग्रन्थोऽयं द्वादशे शतकाब्दे षड्गुरुशिष्येण यादृग्रूप उपलब्धस्तदपेक्षयेदानीं किञ्चिदुपचिताङ्गः समुपलभ्यते । तादृक्परिमाण एव कश्चिदन्यश्छन्दोऽनुक्रमणीसमाख्यो ग्रन्थः । ग्रन्थेऽस्मिन् ऋग्वेदीयानि च्छन्दांसि परिगण्यन्ते तत्तन्मण्डलान्तर्गतास्तत्तच्छन्दो जातीयका मन्त्रा. सङ्ख्यया निर्दिश्यन्ते च । अन्यः कश्चिदनुवाकानुक्रमणीसमाख्यो ग्रन्थ आसन्नचत्वारिंशश्लोकमात्रघटितः ऋग्वेदान्तर्गतानां पञ्चविंशतेरनुवाकानामादिमान् शब्दान् तत्तदनुवाकान्तर्गतानां सूक्तानां सङ्ख्याविशेषांश्च निर्दिशति ।

अपि च ग्रन्थोऽयमृग्वेदे १०१७ सूक्तानि (वाष्कलपाठानुरोधेन १०२५), १०५८०२ मन्त्राः, १५३८२६ पदानि, ४३२००० अक्षराणि च सन्तीत्याह। एवमन्यांश्च ऋग्वेदसम्बन्धिनो विषयान् प्रतिपादयति। अत्र तावत्—एतद्ग्रन्थनिर्दिष्टो मन्त्रसङ्ख्याविशेष. ऋग्वेदे सम्प्रत्युपलभ्यमानं मन्त्रसङ्ख्याविशेषं किञ्चिद्विसंवदति। परन्तु प्रत्यावृत्तानामपि मन्त्राणामनुक्रमणीग्रन्थे परिगणनादयमीदृशो विसंवाद इत्यवधेयम् ॥

अन्यः कश्चिदल्पीयाननुक्रमणीग्रन्थः पादानुक्रमणीनामकः। ग्रन्थोऽयमनुक्रमणीग्रन्थान्तरवन्नानाविधैर्वृत्तैर्घटितः। अपरः कश्चित् सूक्तानुक्रमणीसमाख्यो ग्रन्थः सम्प्रत्यनुपलभ्यमानोऽपि बहुत्र तन्नामनिर्देशोपालम्भात् पुरा स्थितत्वेनानुमीयते। स च तन्नामानुगुण्येन ऋक्सूक्तप्रतीकैः सङ्घटितो बभूवेत्यपि सम्भावयामः। सोऽयं ग्रन्थस्तद्गतान् विषयान् संगृह्णता सर्वानुक्रमणीग्रन्थेनास्तं गमितः स्यात्। अपरो देवतानुक्रमणीग्रन्थः। नायमप्यद्यत्वे समासाद्यते। परन्तु तदीयानि दश वाक्यानि षड्गुरुशिष्यव्याख्यानेषु उद्धृतान्युपलभ्यन्ते। अयं ग्रन्थो, मन्यामहे, देवतासम्बन्धिनो विषयान् विस्तरेणोपवर्णयता बृहद्देवताभिधानेन अनुक्रमणीग्रन्थेन प्रत्यादिष्टः। यो हि बृहद्देवताग्रन्थः १२०० श्लोकैस्त्रिष्टुभाकीर्णैः सङ्घटितः। तद्गतैरष्टभिरध्यायैः क्रमेण ऋग्वेदस्याष्टस्वष्टकेषु प्रतिमन्त्रं प्रतिपाद्या देवताः निर्दिश्यन्ते। ग्रन्थेऽस्मिन्

देवताविचारप्रसङ्गान सरसानि बहून्याख्यानान्युपवर्णितानि । अतोऽयं प्राक्तनाख्यानग्रन्थत्वेनापि चर्चकैरवधेयः । ग्रन्थोऽयं भूयसा यास्कीयं निरुक्तमनुधावति । अत्र न केवलं यास्काचार्य-स्तदनुस्मृताः पूर्वाचार्याश्च परं निर्दिश्यन्ते किन्तु विशेषतया भागुरिः आश्वलायनः निदानसूत्रग्रन्थश्च प्रस्तूयन्ते । अपि च साम्प्रतिके ऋग्वेदेऽनुपलभ्यमानानि खिलात्मकानि बहूनि सूक्ता-न्यत्र विशेषतः परामृश्यन्ते ॥

कात्यायनाचार्यविरचितः सर्वानुक्रमणीग्रन्थः यद्येव न गद्यमयेभ्यस्तथाप्यसन्देहं पद्यमयेभ्यः सर्वेभ्योऽप्यनुक्रमणीग्रन्थेभ्यः पश्चात्कालिकः । यतो ह्यत्र पद्यमयेष्वनुक्रमणीग्रन्थेषु प्रतिपादिता एव विषया' सूत्रशैल्या निबद्धाः । तथा हि ग्रन्थेऽस्मिन् ऋग्वेद-गतानां प्रत्येकं सूक्तानां प्रतीकशब्दाः तत्तत्सूक्तगतानां मन्त्राणां सङ्ख्याविशेषा. प्रत्येकं मन्त्राणां देवतर्षिच्छन्दांसि च निर्दिश्यन्ते। अपि चात्र द्वादशभिः खण्डैर्घटितः प्रस्तावनारूपः कश्चिद्भागः -समुपलभ्यते । तत्र नवसु खण्डेषु ऋक्प्रातिशाख्यस्यान्तिमे पटलत्रय इव वैदिकानि च्छन्दांसि प्रतिपाद्यन्ते। ग्रन्थारम्भ एवाचार्यः श्रौतस्मार्तकर्मानुष्ठानौपयिकतया ऋग्वेदीयानां सूक्तानां प्रतीकानि यथोपदेशं निर्दिशामीति प्रतिज्ञाय ग्रन्थमारभते । तत्र यथोपदेशमित्यनेन पद्यमयानुक्रमणीग्रन्थोपदेशमनतिक्रम्येत्यर्थो विवक्षितः सम्भाव्यते । यतो हि संक्षिप्तया सूत्रशैल्या निबद्धो-

ऽप्ययं ग्रन्थ आर्षानुक्रमणीबृहद्देवताग्रन्थौ सुदूरमनुधावति । तथा ह्यत्र न केवलं तदुभयगताः केचित् पादा एव किन्तु समग्राः श्लोकाश्चापि समुद्धृत्य संयोजिता. । अन्यः कश्चित् शौनकाचार्य-कर्तृकत्वेन श्रूयमाणः ऋग्विधानाख्योऽनुक्रमणीग्रन्थः । यो हि ऋग्वेदगतानां तत्तत्सूक्तानां मन्त्राणां च पारायणेनोत्पद्यमानान् विचित्रतरान् फलविशेषान् वर्णयति ॥

आर्षदैवताभिधानावनुक्रमणीग्रन्थौ सामवेदीयौ । तौ च सामवेदीयनैगेयशाखानुरोधेन यथाक्रममृषीणां देवताना च नामानि कीर्तयतः । यास्कशौनकाश्वलायनादीन् पूर्वाचार्यांश्च स्मरतः । कृष्णयजुश्शाखीयौ द्वावनुक्रमणीग्रन्थावासाद्येते । तयोरात्रेयानु-क्रमणीग्रन्थ. खण्डद्वयघटित. । तत्र प्रथम. खण्डो गद्यमयः, द्वितीयः पद्यमयश्च । नास्मिन् ग्रन्थे नामानि परं निर्दिश्यन्ते किन्तु तत्संहितासम्बन्धभाजोऽन्येऽपि बहवो विषयाः प्रति-पाद्यन्ते । काठकशाखावलम्बिछारायणीयानुक्रमणीग्रन्थः ऋषीणा नामानि निर्दिशति । तत्र ऋग्वेदोद्धृतानां मन्त्राणां विषये ग्रन्थो-ऽयं सर्वानुक्रमणी विसंवदति । तथा हि तेषामृङ्मन्त्राणां ऋषयः सर्वानुक्रमणीनिर्दिष्टेभ्योऽन्य एवात्र प्रदर्शिता । ग्रन्थोऽयमत्रिणा लौगाक्षये प्रोक्तः । माध्यन्दिनशाखीयः शुक्लयजुर्वेदानुक्रमणीग्रन्थः कात्यायनाचार्यविरचितः पञ्चखण्डात्मकः । तत्रादिमाश्चत्वारः

खण्डाः ऋषिदेवता च्छन्दांसि प्रकटयन्ति । तत्र ऋग्वेदोद्धृतानां मन्त्राणां द्रष्टारः प्रायेण सर्वानुक्रमणीनिर्दिष्टेभ्योऽभिन्ना एव । अथाप्यस्ति कश्चिद्विशेषः । अत्र बहून्यभिनवान्यर्वाचीनानि नामधेयानि निर्दिश्यन्ते । तेषु कानिचिच्छतपथब्राह्मणादप्यर्वाचीनतराणि । अयमंशः सर्वानुक्रमणीगतस्योपोद्घातभागस्य मूलांशत्वेन प्रतीयमानं छन्दः प्रतिपादकमंशं संवदति । अन्येऽपि नानाविधाः परिशिष्टग्रन्थाः शुक्लयजुर्वेदीयाः समुपलभ्यन्ते । ते सर्वेऽपि कात्यायनकृतत्वेनैव श्रूयन्ते । तेषां मध्ये त्रयोऽत्र निरूपणमर्हन्ति । तेष्वेकः निगमपरिशिष्टाख्यः । ग्रन्थेऽस्मिन् शुक्लयजुर्वेदीयाः पर्यायशब्दाः पठ्यन्ते । अतोऽयं कश्चिद्वैदिकशब्दकोशो भवति न तु केवलः परिशिष्टग्रन्थः । तत्र प्रवराध्याये ब्राह्मणकुलानि परिगण्यन्ते । ग्रन्थोऽयं वस्तुतः वैवाहिके सम्बन्धे निषिद्धानां कुलानां निर्णयाय यज्ञकर्मानुष्ठानेऽभ्यर्हितानां पुरोहितकुलानां निर्देशाय च प्रवृत्तः । तृतीयश्चरणव्यूहसमाख्यो ग्रन्थः । स च वैदिकीः शाखाः कीर्तयति । किन्तु ग्रन्थोऽयमप्रधानोऽत्यन्तमर्वाचीनश्च । किञ्चात्र काश्चिदेव शाखाः परिगण्यन्ते न तु सर्वाः । यावत्यो हि शाखा विष्णुवायुपुराणयोः प्रस्तूयन्ते न तावत्योऽप्यत्र निर्दिश्यन्ते । अथर्ववेदीयत्वेनोपलभ्यमानानां सप्तत्यधिकानां परिशिष्टग्रन्थानां मध्येऽप्यस्ति कश्चिच्चरणव्यूहग्रन्थः । स चाथर्ववेदे २००० सूक्तानि, १२३८० मन्त्राश्च सन्तीत्याह ॥

इह तावत्—यदुद्यमसिद्धैः विविधैर्वैदिकव्याख्यारत्नैरनुगृहीता वयं कृतिनो वर्तामहे तस्य वैदिकमण्डलाधिराज्यसिहासनारूढस्य वेदार्थव्याख्यातुः परमोपकारिणस्तत्रभवतः सायणाचार्यस्य वृत्तान्तमप्रस्तुत्य प्रकृतग्रन्थोपसंहरणमन्याय्यमेव स्यात् । यः खल्वाचार्यः ऋग्वेदसंहितैतरेयब्राह्मणारण्यकानां तैत्तिरीयसंहिता ब्राह्मणारण्यकानां च व्याख्यानानि विविधान्यन्यानि ग्रन्थरत्नानि च प्राणैषीन् । तत्र संहिताद्वयस्य व्याख्यानं सायणाचार्येणांशतः कृतं तदुपदर्शितदिशा तच्छिष्यैः सम्पूरितं चावगम्यते । सोऽयमाचार्य. प्रथमस्य बुक्कभूपतेः (१३५० - ७९) अधीने स्थितः विविधविषयिणीः कृतीर्निर्माय १३८७-तमे क्रिस्त्वब्दे दिवं गतः । स स्वयमेवात्मानं बुक्कभूपते. विद्यागुरुं सचिवं चोदीरयति स्वस्थापन्नं हरिहरं च (१३८९ - ९९) निर्दिशति । बुक्कवंशीयाश्च राजानश्चतुर्दशशतकाब्धाः पूर्वार्धे अहमहमिकया समापतितान् महाम्मदीयान् विद्राव्य सम्प्रति हम्पीत्याख्यया प्रथमानं तुङ्गभद्रातीरावतंसभूतं वल्लारिदेशखण्डान्तर्गतं विजयनगरं राजधानी चक्रुः । सायणाचार्यस्याग्रजो भ्राता माधवाचार्यः प्रथमं बुक्कभूपतेः साचिव्ये स्थितः पश्चात् सन्यासमास्थाय शृङ्गेरीमठे श्रीमच्छङ्करभगवत्पादपीठमधिष्ठाय विद्यारण्यस्वामीत्याख्यया प्रथां प्राप्य कालधर्मं गतः । अयमाचार्योऽपि बहून् ग्रन्थान् व्यररचत् । सायणाचार्यस्य कृतयोऽपि काश्चित् तस्मै समर्पिताः माधवीयत्वेन

प्रथन्ते । मोक्षमूलराचार्येण द्वितीयेन संस्कृतः सायणाचार्यभाष्यसंवलितः ऋग्वेदः सायणाचार्यबहुमत्या साम्प्रतिकविजयनगरमहाराजेन मुद्राप्य प्रकाशितः । परन्त्वाधुनिकं विजयनगरं बुक्कभूपतेः विजयलाभस्य निमित्तभूतान्नगरादन्यदेवेत्यलमतिविस्तरेण ॥



# GLOSSARY.



| | |
|---|---|
| वैदिकसाहित्य | Vedic Literature. |
| नवीकरण | Renaissance. |
| अलक्सान्द्र | Alexander. |
| ग्रीका | Greeks. |
| आरबा | Arabs. |
| एब्राहिम रोजर् | Abraham Roger. |
| डचभाषा | Dutch Language. |
| वाल्टेयर | Voltaire. |
| डुगल्ड स्टुवार्ट | Dugald Stewart. |
| डब्लिन् | Dublin. |
| वारण् हेस्तिङ्ग | Warren Hastings. |
| पारसीकभाषा | Persian Language. |
| आङ्गल | An English man. |
| आङ्गली | English Language. |
| चारल्स विल्किन्स | Charles Wilkins. |
| सर् विलियं जोन्स | Sir William Jones. 1744-94 |
| वङ्गधरा | Bengal. |
| हर्डर् | Herder. |
| गोथे | Goethe. |
| हेन्रि तोमस् कोलब्रूक | Henry Thomas Colebrooke, 1765—1837. |
| अलक्सान्द्रहामिल्तन | Alexander Hamilton, 1765-1824. |

| *Page* | | |
|---|---|---|
| 4 | प्रान्सदेश | France |
| | पारीस्नगर | The City of Paris. |
| | फ्रड्रिक् श्लेगल् | Fredrick Schlegel. |
| | शर्मण्य | German. |
| | सादृश्यविधि | Comparative Method. |
| | चारित्र्यविधि | Historical Method. |
| | भाषाशास्त्र | Comparative Philology. |
| | प्रान्स बाप्प | Franz Bopp. |
| | लेतिन | Latin |
| 5 | लौकिकसंस्कृत | Classical Sanskrit. |
| | रोसन | F Rosen. |
| | पौरस्त्येन्द्यावणिगगार | East India House |
| | रूडाल्फरोठ<br>रोठ<br>रोठाचार्य | Rudolf Roth, 1821—95. |
| 6 | रोमक | Rome. |
| | विमर्शोपकरणानि | Results of Researches. |
| | इण्डो-आर्य | Indo-Aryan. |
| | सर्वार्थकोश | Encyclopædia. |
| | स्ट्रास्बर्गनगर | The City of Starsburg. |
| | प्रसाधक | Editor. |
| | वियन्न | Vienna. |
| | बुह्लराचार्य | Professor Buhler. |
| | गट्टिञ्जन | Gottingen. |
| | कीलहरण | Professor Kielhorn |
| 7 | नागरिकपरिष्कार | Civilisation. |

| Page | | |
|---|---|---|
| 7 | मानुष्यकपरिणाम | Human Evolution |
| | अडाल्बर्ट कुह्न | Adalbert Kuhn |
| | मोक्षमूलर | Max Muller. |
| | देवताशास्त्र | Mythology. |
| 8 | इण्डो-यौरोप | Indo-European. |
| | सिथिय | Scythians |
| | महाम्मद | Mahammadans |
| 9 | चीनदेश | China. |
| | नदीमुख | River-Mouth. |
| 12 | पुनिकसम्पराय | Punic wars. |
| 14 | होमरिक | Homeric. |
| | अत्तिक | Attic. |
| | अवस्तभाषा | Avestan language. |
| | ऐरेणिय | Iranian |
| | बोन्नपुर | The city of Bonn. |
| | जाकोबि | Professor Jacobi. |
| 15 | बाह्यानि आन्तराणि च विमर्शोपकरणानि | External and internal evidences. |
| | मेगस्तिनस | Magasthenes. |
| | फ. हियान् | Fa. Hian, 399 A. D. |
| | हियान् त्साङ् | Hiouen Thang, 630—645. |
| | ऐ त्सिङ् | I Thsing, 671—695. |
| 16 | शिलाशास्त्र | Archæology. |
| | अल्बेरूणि | Alberuni. |
| | नाणक | Coins. |
| 17 | कोर्पस् इन्स्क्रिप्शियोनं इण्डिकेरम् | Corpus Inscriptionum Indicarum. |

| *Page* | | |
|---|---|---|
| 17 | यफिग्राफिक इण्डिक | Ephigraphia Indica. |
| 18 | लिपिविद्याविमर्शोपकरणानि | Palæographical researches. |
| | सेमितिक | Semitic |
| | समितिक | Semitic |
| | आरमैक् | Aramaic. |
| | उत्कल | Orissa |
| 19 | आस्सिरिय | Assyrian. |
| | तोल | Weights. |
| | मोयबैट शिला | Moabite stone |
| | मसपटोमिय | Mesopotamia |
| 22 | क्विण्टस् कर्टियस् | Quintus Curtius |
| | जापानिक | Japanic. |
| | बाडलियन् | Bodleian. |
| | काकल | Paper. |
| | प्रतिरूप | Copy. |
| 23 | नीयार्कस् | Nearchos. |
| 24 | सालिकश्लोक | Salic hymns. |
| | वारोभाषा | Varro Language. |
| 27 | देशखण्ड | A district. |
| 28 | ज्यूवर्ग | Jews. |
| | हीब्रूभाषा | Hebrew language. |
| | पोर्टगीस् | Portuguese. |
| | मुम्बासमण्डल | Bombay Presidency. |
| 29 | ऐतालिकी | Italian. |
| 30 | नासिका | Nasik. |

| *Page* | | |
|---|---|---|
| 31 | स्वरभार | Stress accent. |
| | ग्रान्थिकभाषा | Literary Language. |
| 32 | संश्लिष्टभाषा | Inflexional language. |
| | विश्लिष्टभाषा | Isolating language. |
| | उपश्लिष्टभाषा | Agglutinating language. |
| 39 | विश्वैकदेवतावाद | Pantheistic theory. |
| 40 | तन्त्रीवार्तावाक्यानि | Telegraphic sentences. |
| | बीजगणित | Algebra. |
| 43 | स्वरविद्या<br>स्वरशास्त्र | Phonology. |
| 46 | होमरग्रन्थ | Homeric literature. |
| 49 | इण्डो-ऐरेणिय | Indo-Iranian. |
| 60 | अक्यूत | Acute. |
| 61 | मूलार्यभाषा | The Proto-Aryan language. |
| 63 | सतूर्णिय | Saturnian. |
| | ह्रस्वदीर्घयुगल | Two iambics |
| 64 | डिमीटर् | Dimeter. |
| 67 | उक्षतरण | Oxford. |
| | होरस् हेमन् विलसन् | H. H. Wilson. |
| 70 | तस्तमन्त | Testament. |
| | तल्मुद-रबीसा | Talmud and Rubbis. |
| 71 | भूतलिङ्गाचार्य | Bohtlink |
| 74 | एकार्थवर्णनारोह | Monotony. |
| 75 | अन्तोलजि | Anthology. |
| 77 | ज्यूपिटर् | Jupiter. |
| | ज्यूस्पेटर् | Zues pater |
| 79 | बहुदेवतावादः | Polytheism |

| *Page* | | |
|---|---|---|
| 79 | एकदेवतावाद. | Monotheism. |
| | तत्तद्देवतोत्कर्षवाद | Henotheism or Katheno-theism. |
| 84 | औरणम् | Ouranos. |
| 87 | हेलियस् | Helios. |
| 92 | औरोर | Aurora |
| | ए ओस् | Eos. |
| 97 | हलनसोदरौ | Brothers of Helen. |
| | डियस्कौराय् | Dioskouroi. |
| 102 | त्रितोस् | Trito's |
| 103 | प्रोमेथियस्<br>प्रोमीथियस् | Prometheus. |
| 116 | अम्ब्रोसिय | Ambrosia. |
| 120 | मगधनालाचार्य | Professor Macdonell. |
| 129 | नोवाख्य | Called Noah. |
| 154 | प्राकालिकमृतशरीर-<br>तत्त्वविचारशास्त्र | Anthropology. |
| 172 | हिन्दुकुष् | Hindu Kush. |
| 173 | वितस्ता | Jhelum. |
| | असिक्नी | Chenab. |
| | परुष्णी, इरावती | Ravi. |
| | विपाट् | Beas. |
| | शुतुद्री | Sutlej. |
| | कुभा | Kabul |
| 175 | यमुना | Jumna. |
| | दृषद्वती | Ghogra or Ghugger. |
| 178 | हाप्किनाचार्य | Professor Hopkins. |

| *Page* | | |
|---|---|---|
| 182 | रेखांश | Longitude |
| 183 | रड्यर्ड किलिपङ्ग | Rudyard Kipling |
| 185 | स्त्रावो | Strabo |
| 196 | आफ्वना | Afghans. |
| 197 | अमेरिका | America. |
| | सङ्घीभूतजनस्थान | United States. |
| 211 | वीबराचार्य | Professor Weber. |
| | स्टीवन्सन् | Stevenson |
| | बेनिर्फ | Benfey. |
| 212 | सीर्हिन्द् | Sirhind |
| 214 | ष्रोडराचार्य | Schroeder. |
| 225 | लत्तिक | Lettic. |
| | रष्या | Russian. |
| 226 | ब्लूफील्डाचार्य | Professor Bloomfield. |
| | विट्णि | Whitney. |
| 235 | बर्नेल | Burnell. |
| 248 | ओल्डन् बर्गाचार्य | Professor Oldenberg. |
| 259 | यग्गलिङ्गाचार्य | Professor Eggeling. |
| 269 | प्लाटोसिद्धान्त | The teaching of Plato. |
| | कान्तसिद्धान्त | The teaching of Kant. |
| 296 | डाय्सिनाचार्य | Professor Deussen. |



# ERRATA.



संशोधकस्य प्रमादात् बहवो भ्रंशाः सम्भूताः । ते च प्रायेणात्र संशोधिताः । इतोऽपि सन्ति चेत् ते वाचकैः सदयं शोधनीया इति प्रार्थयामहे—

| पृष्ठम् | पङ्क्ति | अशुद्धि | शुद्धि |
|---|---|---|---|
| 5 | 14 | निधानात् | निधनात् |
| 6 | 10 | काश्चित् | कश्चित् |
| 7 | 15 | बाल्यवस्था | बाल्यावस्था |
| 7 | 21 | लोको- | लोकोत्तर |
| 12 | 19 | श्चरित्र | श्चरित्र |
| 17 | 5 | इन्स्क्रिण्टियोन | इन्स्क्रिप्टियोन |
| 17 | 18 | सज्य | राज्य |
| 18 | 18 | अपरा | अपरा |
| 19 | 8 | व्यञ्चकानि | व्यञ्जकानि |
| 19 | 14 | पुनर्गन्थात् | पुनर्ग्रन्थात् |
| 19 | 15 | साहत्य | साहित्य |
| 20 | 12 | पणिर्नीय | पाणिनीय |
| 22 | 8 | बाहुल्यन | बाहुल्येन |
| 22 | 16 | आनितानि | आनीतानि |
| 27 | 9 | जानान् | जनान् |
| 31 | 6 | भाषासमुञ्चन्तो | भाषाममुञ्चन्तो |
| 31 | 12 | गुरुलघुवर्णात्मना | स्वरभाररूपेण |
| 31 | 17 | पश्चिमस्या | पश्चिमाया |
| 33 | 16 | चत्वरो | चत्वारो |
| 37 | 10 | वाक्यानामार्थाः | वाक्यानामर्थाः |
| 37 | 21 | सङ्गथात् | सङ्गथनात् |

| पृष्ठम् | पङ्क्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| 48 | 6 | एवभूतेऽति | एवभूतेऽपि |
| 55 | 4 | केयुचित् | केषुचित् |
| 55 | 16 | उरलभ्यमान | उपलभ्यमान |
| 56 | 16 | दृढसह्नित | दृडसह्नित |
| 59 | 12 | मण्डूकाग्य | माण्डूकाख्य |
| 60 | 18 | ब्राह्यणः | ब्राह्मणः |
| 63 | 5 | चरित्रतस्तु | चरित्रवस्तु |
| 64 | 10 | उत्तरण | उत्तरेण |
| 64 | 12 | प्रचारपदापगतं | प्रचारपथादपगत |
| 64 | 16 | तदतन्तर | तदनन्तर |
| 65 | 11 | प्रयुज्यते | प्रयुज्यन्ते |
| 67 | 21 | व्याग्व्यातरो | व्याख्यातारो |
| 71 | 16 | प्यद्रियते | प्याद्रियते |
| 74 | 13 | दैवता· | देवता |
| 76 | 11 | समान्तात् | समन्तात् |
| 76 | 20 | द्यावः | द्यव |
| 78 | 7 | रैकरूपता | ऐकरूपता |
| 78 | 20 | सूर्यो | सूर्ये |
| 79 | 13 | अतिशाय्येक | अतिशाय्येक |
| 79 | 20 | सर्वदेवतोत्कर्षवादः | तत्तद्देवतोत्कर्षवाद· |
| 80 | 12 | कमर्णा | कर्मणा |
| 81 | 21 | मौदर्य | मौदार्य |
| 83 | 3 | त्रिरैकादश | त्रिरेकादश |
| 83 | 18 | दृश्यते | दृश्येते |
| 85 | 17 | इस्थ | इत्थ |
| 85 | 18 | कचिन्क | काचित्क· |

| पृष्ठम् | पङ्क्ति | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| 86 | 8 | कृतभ्यो | कृतेभ्यो |
| 88 | 12 | उत्प्रेक्ष्यतै | उत्प्रेक्ष्यते |
| 88 | 15 | प्राणितस्तेन | प्राणिनस्तेन |
| 91 | 5 | प्रधानसूतो | प्रधानभूतो |
| 93 | 18 | द्योतिष्ययमाणा | द्योतिष्यमाणा |
| 101 | 17 | जनित | जनित |
| 102 | 18 | ऐरेणि | ऐरेणिय |
| 110 | 16 | धमारोप | धर्मारोप |
| 112 | 5 | दवन् | देवान् |
| 112 | 17 | निवर्तित | निर्वर्तितः |
| 113 | 10 | कल्पित | कल्पित |
| 115 | 8 | ग्रावाभ्या | ग्रावभ्या |
| 137 | 19 | अप्रोधावस्था | अप्रबोधावस्था |
| 139 | 2 | पितृदितामह | पितृपितामह |
| 140 | 3 | उदराणा | उदाराणा |
| 148 | 17 | ब्राह्मणैरैव | ब्राह्मणैरेव |
| 149 | 18 | तदन्तरेषु | तदनन्तरेषु |
| 153 | 5 | लौकान्तर | लोकान्तर |
| 154 | 1 | योधाग्रणीनां | योधाग्रण्या |
| 159 | 2 | पृणन | पृणन् |
| 160 | 8 | पत्राणि | पात्राणि |
| 160 | 11 | बिदध्वे | विधध्वे |
| 164 | 6 | त्रिपापस्य | त्रिपादस्य |
| 165 | 15 | द्यावाभूमी | द्यावाभूमी |
| 174 | 3 | सूमेः | भूमे |
| 175 | 4 | शुत्रयोः | शुतुद्र्यो |

| पृष्टम् | पङ्क्तिः | अशुद्धि. | शुद्धिः |
|---|---|---|---|
| 178 | 1 | त्रिकुत् | त्रिककुत् |
| 183 | 1 | किम्प्लिङ्ग | किम्पिङ्ग |
| 187 | 6 | पराजित्य | परित्यज्य |
| 204 | 11 | वणिज्य | वाणिज्य |
| 205 | 9 | सञ्चकुः | सञ्चस्करु |
| 206 | 4 | बभूवेत्ययर्थः | बभूवेत्ययमर्थः |
| 206 | 9 | सम्मेलन | सम्मेलने |
| 206 | 11 | वर्णितौ | वर्णितो |
| 207 | 1 | वञ्चाक | वञ्चक |
| 207 | 3 | प्रभुज्यते | प्रयुज्यते |
| 209 | 5 | सोमवेदो | सामवेदो |
| 213 | 15 | ससूल | समूल |
| 214 | 20 | सन्दिह्यामहे | सन्दिह्महे |
| 214 | 21 | प्रपाठकयती | प्रपाठकवती |
| 216 | 14 | पदाथ | पदार्थ |
| 218 | 13 | शनामिका | शनात्मिका |
| 218 | 17 | दशाध्याया | दशाध्याय्या |
| 219 | 13 | सप्तमे | सप्तके |
| 221 | 3 | वर्वन्ते | वर्ण्यन्ते |
| 221 | 15 | कश्चिदत्र | काश्चिदत्र |
| 222 | 10 | आज्ञापर्यन्ति | आज्ञापयन्ति |
| 225 | 16 | अम्बर्टकुह्ल | अडाल्बर्टकुह्ल |
| 231 | 12 | पातयानः | पातयाम. |
| 244 | 16 | ह्येकस्मिन् | ह्येतस्मिन् |
| 249 | 6 | विपय | विषयः |
| 249 | 13 | प्रधानतमं | प्रधाननर |

| पृष्ठम् | पङ्क्ति. | अशुद्धि | शुद्धि. |
|---|---|---|---|
| 251 | 12 | समावृता | समावृत्ता |
| 252 | 1 | आत्माना | आत्मान |
| 252 | 15 | पद्यानुदा | पद्यान्युदा |
| 256 | 6 | मूलकाला | मूलकाना |
| 256 | 12 | जनविवाह | जननविवाह |
| 257 | 8 | वेदायेषु | वेदीयेषु |
| 257 | 11 | सह्रिता | सहिता |
| 265 | 2 | अर्वचीन | अर्वाचीन |
| 265 | 12 | सुपपद्यते | मुपपद्यते |
| 268 | 1 | वत्वविद्या | तत्वविद्या |
| 268 | 3 | काढको | काठको |
| 269 | 13 | सूपीनषत्सु | सूपनिषत्सु |
| 271 | 1 | भूयो भूयोऽप्याह | भूयोऽप्याह |
| 271 | 16 | सल्लाप | सॅल्लाप |
| 276 | 9 | अर्वाञ्चो | अर्वाचीना |
| 279 | 8 | अथ्याये | अध्याये |
| 284 | 19 | दृष्टान्तेन | दृष्टान्तेन आत्मनोऽन्तर्यामित्व बहिर्व्यापित्व चाख्याय बाह्यैश्चाक्षुषैर्दोषैरलिप्यमानस्य जगच्चक्षुष. सूर्यस्य दृष्टान्तेन |
| 292 | 8 | परितोषं | परिपोषं |
| 293 | 11 | तन्नाम्रा | तन्नाम्ना |
| 293 | 18 | बृहदारण्यक | बृहदारण्यक-तैत्तिरीय |
| 302 | 2 | सङ्ग्रहेण | सङ्ग्रहेण |
| 302 | 18 | अग्निष्टोम· | अग्निष्टोम अत्यग्निष्टोम |
| 303 | 20 | ऋग्विग्गणै. | ऋत्विग्गणै: |
| 309 | 14 | सकार | सस्कार |
| 314 | 12 | पैतृकानि | पैतृकाणि |
| 314 | 17 | कुतोऽपि | कृतोऽपि |
| 318 | 1 | सामग्रियेण | सामग्र्येण |
| 319 | 16 | उद्धतानि | उद्धृतानि |

| | | | |
|---|---|---|---|
| 319 | 17 | कस्माच्च न | कस्माच्चन |
| 322 | 19 | ग्रीकरोम | ग्रीकरोमक |
| 325 | 19 | पाणिना | पाणिनिना |
| 325 | 20 | एतद्ग्रन्थाः | एतद्ग्रन्थगता |
| 326 | 4 | प्रातिशाख्याति | प्रातिशाख्यानि |
| 326 | 5 | अन्या | अन्य |
| 326 | 7 | प्रातिशाखा | प्रतिशाखा |
| 327 | 19 | प्रत्ययाना क | प्रत्ययाना च |
| 331 | 8 | सूत्रे | सूक्ते |
| 331 | 12 | बहवोल्लङ्घित | बहुत्रोल्लङ्घित |
| 334 | 2 | १०५८०रे | १०५८०$\frac{१}{२}$ |
| 338 | 11 | स्वस्थापन्न | स्वस्थानापन्नन् |

